# विद्यावैजयन्तीनिबन्धमाला

[ द्वितीयभाग ]

# आलङ्कारिकनिबन्धमाला

[ तृतीयभागो ]



# व्याकरणनिबन्धमाला च

संस्कृतं हिन्दी च

●

लेखकः सम्पादकश्च

केदारनाथ ओझाः



●

प्रकाशकः

**केदारनाथ ओझाः**

मुमुक्षभवनं काशी

आश्विन विजयादशमी

२०३८ वैक्रमः

अक्तूबर १९८१

# विद्यावैजयन्तीनिबन्धमाला

[ द्वितीयभाग ]

# आलङ्कारिकनिबन्धमाला

[ तृतीयभागो ]

# व्याकरणनिबन्धमाला च

सस्कृतं हिन्दी च



लेखकः सम्पादकश्च

**केदारनाथ ओझाः**

प्रकाशकः

**केदारनाथ ओझाः**

मुमुक्षुभवनं काशी

आश्विन विजयादशमी
२०३८ वैक्रमः

अक्तुबर १९८१

# VIDYAVAIJAYANTI NIBANDHAMALA

## PART II
## ALANKARIKA NIBANDHAMALA

*OR*

**Essays on Alankaras**

*AND*

## PART III
## VYAKARANA NIBANDHAMALA

*OR*

*Essays on Grammar*

( A Collection of Research and Critical Articles )

( In Sanskrit and Hindi Languages )

**Kedarnath Ojha**
Emeritus Professor
**Sampurnananda Sanskrit Vishvavidyalaya**
VARANASI



**MUMUKSHU BHAVANA**
ASSI, VARANASI - 221005 ( INDIA )
**October 1981**

# विद्यावैजयन्तीनिबन्धमाला

विद्यावैजयन्तीप्रकाशनस्य त्रुटितं विज्ञापनं विद्यावैजयन्तीनिबन्धमाला प्रथमभागदार्शनिकनिबन्धमालायाः प्रस्तावनायां लेखकेन प्रकाशितंविलोक्य राजस्थानोदयपुरमहाराणासंस्कृतमहाविद्यालयव्याकरणप्रधानप्राध्यापकपण्डित-पुङ्गव श्रीनारायणत्रिपाठिमहोदयाअन्विष्य सुप्रभातंपत्रप्रकाशितं विज्ञापनं प्रेषयन्, साभारं तदधः प्रकाशते—

सौर ज्येष्ठः, १९८५ वैक्रमाब्दः

पञ्चमवर्षे | जून १९२८ | द्वितीयसंख्या

## सुप्रभातम्

### संस्कृतसाहित्यसमाजस्य मुखपत्रम्

तिमिर ततिमुदस्यद् भेदतारा विलुम्पन्, नयदधिसुरभाषाभाषि जागर्तिभावम् ।
विबुधविहगवादैराह्वयद् भाग्यभानुम्, विलसतु भुवनेऽस्मिन् सर्वतः सुप्रभातम् ॥

निरीक्षकः

महामहोपाध्याय श्री देवीप्रसाद शुक्ल : कवि चक्रवर्ती साहित्यवारिधिः

सम्पादकः — श्री केदारनाथ शर्मा सारस्वतः

व्यवस्थापकः — श्री गिरीश शुक्लः न्यायाचार्यः

८५ पृष्ठे

संस्कृत-समाचाराः

विद्यावैजयन्ती

सुविदितमिदं भवादृशांयत्साम्प्रतम्प्राचीनसंस्कृतनिबन्धानाम् कटुकीट-पटलदंशनेन वा निलयानलकीलकवलनेन वा पाथःपृषतपातेन वा विलोपः क्रमादवलोक्यते। क्वचन प्रकाशिता अपि ते मूल्यबाहुल्यात्, यावदमिलषित-कलावैकल्याच्च न सन्तोषमुपजनयन्ति मानसेषु प्रणयिनाम्। अनुपपत्ति-सन्ततिमेतादृशीमनुसन्धाय विदूयमानमानसैः कृतिवरैरसकृदुत्साहिताः हिन्दू

विश्वविद्यालयवेदान्त प्रधानाध्यापकाः ख्यातवैदुष्याः श्रीबालकृष्ण मिश्र महाशयाः पुरोदीरितत्रुटिविघटनाय "विद्यावैजयन्ती" समभिधानायाः मासिक पत्रिकाया विकस्वरानुकम्पाभिः सम्पादनभारं स्वीचक्रुः। महाभाग्यमिदं यत्सुरसरस्वतीं समुन्नेतुमिमे कार्यविरुद्धसमया अपि बद्धपरिकराः समभूवन्।

अथैवमपि पत्रिकायाः प्रकाशस्तदा स्यात्, यदि भवन्तस्तत्र अनुग्राहकतया ग्राहकतया वा सहायतां सहर्षं दर्शयेरन्। अस्याश्च सकललोकसौलभ्यार्थं रूप्यकत्रयमेव वार्षिकं मूल्यम्। मञ्जुलतायां तु 'क्रिया केवलमुत्तरम्' इति नास्ति तस्यामिदानीं विशेषतो वक्तव्यमिति निवेदयन् विरमति—

स्थानम्

संस्कृतसहित्यसेवासदनम्,

हिन्दूविश्वविद्यालयः, काशी।

हरिशङ्कर शास्त्री
( वेदान्त विशारदः )
रघुनाथ शास्त्री
( तर्कतीर्थश्च )

इयं द्वितीयभागेन आलङ्कारिकनिबन्धमालया तृतीयभागेन व्याकरण-निबन्धमालया च परिपूर्णा हिन्दी भाषान्तर सहिता प्रकाशते, प्रथमभाग दार्शनिकनिबन्धमालायाः प्रकाशनानन्तरं कथमप्येषा सार्धवर्षत्रयेण विलम्बेन पूर्यते। यद्यपि अस्था मुद्रापणप्रकाशनप्रयासः सार्धवर्षस्यैव तथापि कार्यान्तर वशात्सार्धवर्षत्रयविलम्बः। प्रथमभागप्रकाशनानन्तरं वर्षद्वयं सरस्वतीभवन-ग्रन्थागारे चिरात्संरक्षित्तं हस्तलिखित्तं न्यायपुस्तकं तात्पर्यटीकासहित्तं तर्का-मृतचषकं संशोधनाय सम्पादनाय च वर्षद्वयस्य मासिकं पारिश्रमिकंविज्ञाप्य प्रदत्तम् अर्थकार्कश्यान्मया गृहीतं वर्षद्वयेन कार्यान्तरावरोधपुरस्सरं सर्वं संशोध्य सम्पाद्य च समर्पितम्। ततश्च मुद्रापणाय प्रायतिषि। तदापि हत-भाग्यस्य मम समीहिता अर्थकार्कश्यचिकित्सा न संजाता। मासाष्टकस्य वृत्तिर्नामिलत्। तथापि श्रीकुलपतिमहोदयानां मौखिकादेशवशंवदेन लेखकाय लब्धवृत्तेरेव पारिश्रमिकं दत्वा मुद्रणोपयोगिनी कियती प्रतिलिपिः कारिता, कुलपतिमहोदयः स्वीयमादेशं तदर्थं सम्बद्धाधिकारिणे प्रादात्। तदनन्तरमपि द्वित्राणि स्मारणानि तदर्थं शीघ्रं कर्गदं चालयितुं कृतवान्। अधिकारिमहो-दयश्च विश्वस्तकुलपतिपरिवर्तनो द्वित्राणि शीघ्रंचालयामीत्यादीनि आश्वा-सनानि प्रत्यार्पयत्। आसन्ने च कुलपतिपरिवर्तने कः कथंश्रृणोतु ? कथञ्च कोऽब्रवीतु इति वृत्तमभूत्। अस्तुतत्।

अयं मुद्रणालयोऽपि सर्वं सौविध्यं स्वीकृत्यापि आरम्भेऽवसाने च भूयसा विलम्बेन मासाष्टकस्य कार्यं कथमपि अष्टादशभिर्मासैः समापयत्। तथापि धन्यवादानर्हति एष विक्रम पञ्चाङ्ग मुद्रणालयः, कृतज्ञताञ्चास्य वहामि यदशक्तस्य मम कथमपि कार्यं सम्पादितवान्।

सम्पूर्णानन्द संस्कृतविश्वविद्यालयेन् रसचन्द्रिकायुतस्य रसगङ्गाधरस्य द्वितीयभागोऽप्यधुना प्रकाश्यमानो विद्यते। मन्दगामि अपि तत्रत्यं कार्यं कुलपतिमहोदयः साम्प्रतं सम्यगवदधातीति तत्रत्यकार्यकर्तुरेकस्य मुखादश्रौषम्ः सकृदपश्यमपि अन्यथा १९७७ जुलाई मासे मुद्रणालये दत्तम्, फरवरी ११-८१ दिवसं यावत्पुस्तकस्य मुद्रणंसमाप्तम्, २० मार्च ८१ पर्यन्तं सर्वाणि परिशिष्टानि लिखित्वा समर्पितानि।

यद्यपि पूर्वरूप संशोधने पुस्तकस्य शुद्ध मुद्रणाय शीघ्रतायै च असकृदधिकारिणांप्रार्थनायाञ्च चिरमक्लिश्यं परं मुद्रणालयसम्बन्धक्लेशादहं तैः संरक्षित इति उपकृतवन्त एव तेऽधिकारिणोऽवश्यं धन्यवादार्हाः। वस्तुतो मम सर्वस्मिन् मुद्रापणे प्रकाशनै च सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रमुखं स्थानम्। यतस्तस्य सम्मानितप्राध्यापकवृत्तिरेव मम काशीवासस्य निदानं जातम्, बहिः स्थितस्य ममानेके मुद्रापणस्य प्रयासा विफला जाताः। काशीवासमनोरथधुरा नागरिकनिर्वाहोपयोगिधनमार्गमपेक्षते स्म। स्वल्याऽपि एषा आधुनिक महर्घव्ययस्य चतुर्थांशमपि अपूरयन्ती वृत्तिः कथमपि काश्यामानयदेव। काश्यामागतस्य षण्मासान् श्रीभैरवनाथपरीक्षणकष्टं महत्तामाधत्त तथापि मनोरथः पश्चाद्गमनाय मार्गं नालभत। काश्याबहिः स्थितस्य व्यय यात्रा कष्ट संकोचेन कदाचनैवात्रागच्छतो ममैतद्वृत्तिप्रयोजिका आकस्मिकी अधिकारिणां सहयोगि मनीषिणाञ्च मम कल्याण कामना प्रसङ्गे समुदैत फलञ्च प्रासूतेति मनोरथस्य दूरे आसीत्।

तदनन्तरमपि यद्यपि बारम्बारं नैकरोगपीडा शारीरिकशिथिलता नेत्र ज्योतिषोमन्दताप्रभृतयोऽनेका विपत्तयस्तथापि काश्यां मुमूर्षुरस्मीति सफलतैव। आर्थिकचिन्तां वहामि, इदं जातमेतत्कथं भविष्यति, ऐषमएवंनिर्वाहः परं न जाने कियन्ति वर्षाणि जोविष्यामि! कथं कालोगच्छेदितिचिन्ता न स्वपिति, तथापि धनंविना कार्यं नावरुध्यते, लघुन्यपि कार्ये महानर्थव्ययः, सहायकं महर्घं भृत्यं विना न निर्वाहः, तदभावे कष्टमपि सहे इति तु वर्तते, तथापि आशातीतैषा सफलता यन्मम प्रियायाः काशीमुमूर्षायाः फलप्रसवि पुष्पमधुनाऽपि विकसत्येव। निवासोऽपि अल्पेन व्ययेन चलति, परावसथशायिता-

विडम्बनाऽपि वर्तते, साधूनामिदंस्थानमत्रैवमुमूर्षोर्मम निर्वाहोपयोगिसौविध्यं न विभर्ति। यदि सहस्त्रेण सार्धसहस्त्रेण वा स्वीयव्ययेन सम्पादयितुमुत्सहेय तथापि अधिकारिणां सम्मतेरपेक्षा, अधिकारमपेक्ष्यात्र परस्परं वैमनस्यं कलहः प्रचलति, सम्मतिं प्राप्स्यामि नवेति विचिकित्सा नाधुनाऽपि चिकित्सामाप्ता, तथापि यावन्निर्वाहः सम्यगेव न विफलता, येषामधिकारिणामनुकम्पया सहानुभूत्या च शान्त्या समयं यापयामि तेऽवश्यंधन्यास्तुत्याश्च, एषां कृतज्ञताभारोऽपि मयि। अतः एवाधुना मम सर्वत्र संकेतो मुमुक्षुभवनम्। एतावता अन्नपूर्णा विश्वनाथयोर्महती अनुकम्पा विदुषाञ्च शुभाशंसा यत्प्रथमभागप्रस्तावनायां सूचिता गुरुपूजा विद्यावैजयन्तीनिबन्धमालामात्रेणोप संह्रियते।

आस्तिकानां विपत्तयोदुरदृष्टभोगा अपरिहार्या अवश्यं भोक्तव्याः, तत्रापि यथाशक्ति प्रतीकारोपाया अनुष्ठेया एव। तेन विबुधा बुधाश्च प्रार्थ्यन्ते, दुर्गतश्चाहं तेषां दयनीयएवेतितुष्यामि च। यन्मनस्यासीत्तन्मुद्राप्य समर्पये, यत्पार्श्वे पोषणद्रव्यं तदेषां प्रकाशने गतम्। पुनरपि अकिञ्चनाऽनुकम्पाशुभाशंसाशरणः सफलतां प्रत्याश्वस्तः प्रार्थयेयद्यथाकथमपि मामकमिदं पुस्तकमङ्गीकृत्यानुगृह्णन्तु।

उत्तरप्रदेशहिन्दी संस्थानमपि सहस्त्रेण प्रोत्साहनपुरस्कारेण प्रथमभागंदार्शनिकनिबन्धमालां पुरोऽकरोत्, तदधिकारिणोधन्यान् बदामि, स्वयञ्चतेषांदयनीयतया कृतज्ञाभवामि। हिन्दीभाषाप्रवीणान् मनीषिणोव्याकरणनिबन्धमालां सरलामवश्यमवलोकयितुं प्रार्थये; संस्कृत सम्बद्धा भारतीया हिन्दीभारती संस्कृत व्याकरण लेखेभ्योऽपि हिन्द्यां किञ्चिदायास्यति। हिन्दी व्याकरण विषये किञ्चिच्चर्चितमपि। व्याकरणनिबन्धमालायाः प्रस्तावनामपि हिन्द्यां प्रस्तौमि, तत्रापि प्रसङ्गादागतो हिन्दीभाषास्वभावो विस्फोरितः।

दिल्लीस्थभारतसरकारशिक्षासमाजकल्याणमन्त्रणालयान्तर्गतशिक्षाविभागीयसंस्कृतपदाधिकारिमहोदयाः दार्शनिकनिबन्धमालायाः शतं पुस्तकानि सकृदेवक्रीत्वाममार्थकाठिन्यममार्जन्निति तानपि धन्यान् वदामि, पुनरपि तादृशफलाशया प्रार्थयिष्यामीति मनोवासयामि।

प्रकाशनादिषु मम वित्तव्ययातिसाहसं सर्वापेक्षया उत्तरप्रदेशसंस्कृत अकादमी संस्थाऽधिकं समपोषयत्। विद्यावैजयन्तीनिबन्धमालाप्रथमभागदार्शनिक निबन्धमालायाः प्रकाशने सप्तसहस्त्राणि सहायतां प्रादात्, पुरस्कारे च विशिष्टं सत्कारमघोषयत्, अस्मिन् प्रकाशने महता व्ययातपेन शुष्यतोऽपि तस्य साहाय्य प्रार्थनां विचारकोटिमधितिष्ठन्तीं संसूच्य मूलं संरक्षति, तत्तदधिकारिणां

ममोपकृतिकृतयः केन वचसा वर्ण्यन्ताम् ? केवलं कृतज्ञताभारभुग्नमूर्धा मौनी भवामि ।

हाहन्त साम्प्रतं सहृदया एव तदधिकारिणो मौनमाश्रयन्ते, नोत्तरं ददति, इतस्ततः शृणोमियन्नैषमः प्रकाशनसहायता दास्यते, संस्थानिदेशकस्य समयेऽभावात् समयेन निवेदनासंभवात् प्रकाशनसहायताद्रव्यस्य राज्य-स्वीकृतिर्न सम्पन्ना । महान्त उदारा अपि किं कुर्वन्तु ? मम क्षुद्रंभाग्यमपि सच्छिद्रम्, अल्पं गृह्णाति तदपि सर्वं निस्सरति । स्वयंशोघ्रं प्रकाशनीयमिति समापतितम् । सहायतायाअप्राप्तिर्मूल्यनिर्धारणेऽपि काठिन्यमापादयत्, सहा-यताप्राप्तौ अकादमीनिदेशकस्य सुरुचिः पुस्तकमूल्य नियन्त्रिकाऽभूत् । तेन ममलाभोनासीत्परं संस्कृतभाषानुकूलता आयाति । कर्गदादिवस्तूनां महर्घंमूल्यं श्रमिकाणां भूयसी भृतिरिति मुद्रणप्रकाशनयोर्भूयान् व्ययः संजातः, पुस्तक-विक्रेतृणांलाभांशो महान् जातः, त्रिंशता लाभांशेन मम पुस्तकंनविक्रीणन्ति, केचन चत्वारिंशत् कर्तुं कथयन्ति । कतिपये पुस्तकविक्रेतारो लेखकाश्च वदन्ति पुस्तकानां मूल्यमधिकं विज्ञापनीयं विक्रेतृभ्यश्च लाभांशोऽधिकः प्रदेयः, वहुशश्चैषा रीतिः इङ्गिलसभाषानिवन्धग्रन्थानां प्रचलति, परं धन हीनायाः संस्कृतगिरः कृते न सा सम्यक् । न तया पाठकानां सौलभं नवा लेखकप्रकाशकयोर्लाभः, केवलम् अधिकलाभांशलोभेन विक्रेतारः कदाचन विशेषं श्रमं विदध्युः, परम् एषां विषयाणाम् अस्याभाषायाश्चाध्येतारः कति ? तत्रापि क्रोत्वा । तत्रापि न दुश्चिन्ता, कर्मणि अधिकारः फले नेति भगव-दाज्ञा । यच्चिन्तितं तत्सुरक्षायै मुद्राप्य प्रकाश्यत इत्यध्ययनाङ्गं नानुचितं प्रतिभाति, यद्यपि अशक्तस्य रोगिणश्चिरं जीवतः पोषणद्रव्यस्यैतावतो व्ययं विदधतः कथं काशीवास निर्वाह इति अग्रचिन्ती सदा सुखीति न्यायो विरुध्यते तथाऽपि जननमरणयोरदृष्टं दैवमेव शरणमिति सन्तोषं विनाऽपि न निर्वाहः । एवमपि विज्ञान्अध्ययनशीलानभ्यर्थये, अध्ययनं विना नास्य साफल्यमित्यव-सायावश्यमवलोकनेनानुगृह्णन्तु, क्रयणोत्साहाभावेऽपि अध्ययनरुचिर्नं प्रति बध्या । अध्ययनाय निःसंकोचं पुस्तकं बिना मूल्यं मम पार्श्वादगृह्णन्तु । अन्ते च इङ्गिलसभाषया विषयपरिचयमस्य पुरस्कुर्वाणाः पण्डितपुरन्दराः डा० श्रीमदयोध्याप्रसादसिंहमहोदया मां पाठकांश्च प्रसादयन्तोविजयन्त इति धन्यान् मन्यमानः श्रीकाशीविश्वनाथम् अन्नपूर्णां मातरं देवान् गुरून् पितरौ च स्मृत्वा विरमति ।

विजयादशमी शकः १९०३

विदुषां वशंवदः
केदारनाथ ओझाः
मुमुक्षुभवनंकाशी

## विद्यावैजयन्ती निबन्धमाला द्वितीभाग आलङ्कारिक

## निबन्धमाला हिन्दी सहिता

कथमपि कष्टेन मुद्रापिता प्रकाशते। प्रार्थये शास्त्रपरिशीलनपटून्विपश्चितः स्वकुशलावलोकनेन निष्कलुषं श्रममिमं विधातुं सफलञ्च। चिरात्संस्कृतपत्रिकासु प्रकाशमानास्ते निबन्धा न कष्टसाध्याः प्रत्यभासिषुः, पत्र सञ्चालका लेखमयाचन्त, शास्त्रपरिशीलनं मम प्रकृतिः, शास्त्राध्येतृषु अधिकाः साहित्यसुधियः सर्वत्र संभवन्त्येव, निबन्धाः प्रेषिताः प्रकाशिताश्च। समेऽत्र निबन्धाः प्रकाशिता एव, हिन्द्या रसख्यातिरपि प्रकाशितैव, मादृशां स्वयं मुद्रापणं प्रकाशनञ्चातिसाहसफलम्, अतिसाहसञ्चास्वास्थ्यं प्रसूते, भुञ्जेऽपि तत्। मार्गेऽपरभागं गच्छन् पतामि आघातमनुभवामि शय्यां शरणीकरोमि, न कश्चिदत्रसहायो योऽदसीयं व्यवहारक्षेत्रं निर्वाहयेत्, बहिर्गमने सहगामी सहायकोऽपि दुर्लभ एव। मुद्रका अपि व्यापारिणः, साधारणाश्छात्राः पण्डिताश्च स्वतन्त्रतायुगे वचनवद्धा यदा न भवन्ति तदा व्यापारिणः कथं स्युः, सर्वं ममापेक्षितं सौविध्यं सम्पादयितुमुदारवचसोवर्चस्विनो जायन्ते, कार्यारम्भे जाते न तथोदारकृतिनः, तदर्थं बहिर्गमनमापतत्येव। यात्रायां व्ययस्य कष्टस्य चाधिक्यं नान्तरीयकमेव, मुद्रणप्रकाशनोपयोगीनि कर्गदकूटकपंटादीनि वस्तूनि महर्घाण्यपि मुद्रकैरेव क्रेतव्यानि ततोमूल्यभूयस्ता भवेदेव। पूर्वरूपसंशोधनं दुःसाधमेवासाधयम्, मुक्ताविन्दुविभूषिते नयने स्वयमेव लिखितं न वाचयतीति गाथां गायतः, छात्रा अध्ययनं विनैव परीक्षामुत्तरन्ति तदध्यापकाश्चाध्यापनं विनैव वेतनं लभन्ते तदा प्रतिस्फारं दश पञ्चदशवा मुद्रा आदातुं पूर्वरूपाशुद्धेमर्जिनाय कः सन्नह्येत।

वर्षत्रयेण मुद्रणादिश्रमशुल्कं कर्गदादिवस्तुमूल्यञ्च द्विगुणंमहर्घं जातम्, प्रथमभागदार्शनिकनिबन्धमालामपेक्ष्य लघुन्यपि अस्मिन् प्रकाशने महान् व्ययः ? पुस्तकानि विक्रेतुमसमर्थं मामवेक्ष्य पुस्तकविक्रेतारो बहून् लाभांशान् गृह्णन्ति, अल्पे लाभांशे पुस्तकानि विपणौ स्थापयितुमेव निवारयन्ति, तस्यात्पुस्तकमूल्यमपि अधिकमापद्यतइति कठिनम् ?

एतावतैव ममाध्ययनमपि अवसीयते, नेत्रज्योतिरवसीदत्ति, पुस्तकालयेभ्य: पुस्तकानि आनेतुं नेतुञ्च न कश्चिन्मिलति। अध्येतारश्छात्रा न सन्ति, पण्डितानां न परस्परं शास्त्रचर्चा, काशीपण्डितसभयाऽपि सम्बन्धो विच्छिन्नः, आमन्त्रितः सहगामिसहायकं विना नोपस्थातुं प्राभवमिति न माम् आमन्त्रयन्ति, अन्यथा श्रवणलाभोजायते स्म।

अधुना शोधपत्रिकाश्च बहुलं प्रकाशयन्ति, विश्वेश्वरविदुषः चमत्कारचन्द्रिकायाः पुस्तकस्य चर्चा विश्वसंस्कृतं पत्रिकायामैषमएवावालोकि। अप्रकाशितायाइव न तस्यास्तत्रोल्लेखः, तत्रैव लिङ्गविशिष्टपरिभाषा पाणिनिसम्मताऽऽसीन्नवेतिनिबन्ध इङ्ग्लिसभाषायां नैकेषां विचार परम्परां प्रकाशयत्ति, आलोचनायामलङ्कारकौस्तुभस्यापिसंग्रहस्तत्रैवपठितः। एवं यदाकदा विदुषां विविधां शास्त्रचर्चामवलोक्य प्रसीदामि च। निबन्धाश्चेमे समये समये कामपि परिस्थितिमाश्रित्य विरचिताः। परिस्थितयोऽपि वर्णनद्वारा निबन्धे संघट्टिताः, सम्बद्धाश्च विषयानिबन्धान्तरे समायाताः पुनरुक्तवदवभासन्ते, परं सम्बन्धिभेदे सम्बन्धभेदः सम्बन्धिविशेषोनूतनोऽस्त्येव। किन्तु विशेषपरिशोलने तत्रान्याऽप्यभिनवताऽभिव्यक्ता भवेत्। यथाऽलङ्कारसामान्यलक्षणानि विभिन्नानि अत्र मिलिष्यन्ति, समेषामलङ्काराणां मूलं सर्वत्रानुस्यूतं वा किमितिविषयेवर्तते आचार्याणां मतभेदः, तत्तन्मतानुसारं लक्षणनिर्माणे आरम्भ स्वरूपे स्थूले शब्द भेद आयात्येव अग्रे च समाने दोषे समानो निवेशः प्रक्रान्तः। रसगङ्गाधररसचन्द्रिकायाः. कतिपये विषयाः प्रसङ्गादागता हिन्दीभाषया वर्णिताः, अवबोधे हिन्दीसाहाय्यमन्वेषयतां सुबोधाय कल्पन्ते। अशक्तस्यासहायस्य मम स्खलितमुपेक्ष्य यथाकथमपि संसूचितान् विषयानवगच्छन्तु चिन्तयन्तु चेति प्रार्थये। समये समये सर्वान् मुद्रितांशान् दत्वा अपलोकयितुं संकेतञ्च कर्तुं पण्डितपुङ्गवान् वृद्धान् श्रीपटाभिरामशास्त्रिमहोदयान् प्रार्थयम्, अङ्गीकृतवन्तोऽवलोकितवन्तः संकेतमपि प्रायः कृतवन्तो भवेयुः, परं श्रम साफल्यं दैवाधीनमेव, इदानीं शीघ्रं प्रकाशने उपक्रान्ते लौहतालिकासंघट्टितं पिहितसर्वकपाटं गृहं विलोक्य उभयोः श्रमवैफल्यं भावयन् विषीदंश्च विरमति—

विदुषांविधेयः केदारनाथ ओझाः।

विजयादशमी शकः १९०३ मुमुक्षुभवनं काशी

# PREFACE

The Vidya Vaijayanti Nibandhamala, volume II, collection of various articles on different topics of Alankaras and volume III, a collection of articles on Indian Grammar is a scholarly work by Pandit Kedar Nath Ojha, Emeritus Professor, Sampurnananda Sanskrit Vishva Vidyalaya, Varanasi. Most of the articles are originally written in Sanskrit and their Hindi rendering is also given. Pandit Ojha is one of the foremost scholars of Indian Philosophy, Poetics and Grammar. He has not only critically examined ancient Indian thoughts, but has also interpreted them in modern context. These articles are actually like banner of knowledge and they justify the name of the book—Vidya Vaijayanti.

In his opening article of Vol.II, Pandit Ojha has critically examined different theories in respect of kavya karana and has discussed their comparitive merits and demerits. Further he has established some bold views on this subject.

In his article, अलङ्कार सामान्य लक्षण the learned author has ceritically examined Vaidyanatha Payagunde's general characteristics of Alankaras.

Various conceptions of the Philosophy of Rasa have been elucidated in detail in the article रसख्यातिः The author has convencingly propounded his own theory in the realm of 'Rasa'.

Other articles of this volume deal in detail with various facts of poetics and critically examine the views of Abhinavagupta, Panditaraja Jagannatha, Appaya Diksita etc.

In his opening article of Vol.III, Sri Ojha has critically evaluated the utility of all aspects of Panini's Astadhyayi. He

has also successfully shown, how the purpose of Pratisakhya, Nirukta etc. is served by the Astadhyayi.

In second article of this volume, the author has explained vividly how, according to Panini's grammar, the use of second case affix in adverbs is not justified.

The next article discusses the different aspects of an interesting grammaritical problem whether छात्री or छात्र should be the feminine form of the word छात्र.

An article on katyayana's Varttika has propounded in detail the traditional view regarding the varttikas of katyayana.

In his Bhumika, Pandit Ojha has referred to different views available in connection with शब्दाद्वैत and has shown comparative superiority of Nagoji Bhatta's view.

In this way, this erudite collection of his various illuminating articles, discovers the beauty of Indian thought in the history of ideas of highest order. Pandit Kedar Nath Ojha is not only scholar of traditional learning, but also has studied the modern theories, propounded by western scholars. I am sure, this work will be much helpful to those who are engaged in research in different subjects pertaining to Indian thought about poetics and grammar, which has come from an oriental Pandit, who has devoted his whole life in understanding the traditional Indian learning. I hope scholars, engaged in academic investigations will derive immense benifits from these articles which depict various facts of अलङ्कार and व्याकरण।

Department of Sanskrit
Ranchi University, Ranchi
Bihar ( India )
Date : 10-8-1981

**Dr. Ayodhya Prasad Singh**
University Professor & Head

# विद्यावैजयन्तीनिबन्धमालाद्वितीयभागस्य 'आलङ्कारिक निबन्धमालायाः संक्षिप्तविषयसूची

श्री काशी विश्वनाथो विजयते—

# विद्या वैजयन्ती निबन्धमाला

## द्वितीय भाग आलङ्कारिक निबन्धमाला

श्रीगणेशाय नमः

शम्भौ भास्वरदर्पणे परिलसद्बिम्बे स्वकीये गजे
शीघ्रारोहणतत्परो गिरिजया रुद्धोऽप्यरुद्धो हठात् ।
विघ्नौघ तिमिरं गजायितपरं लब्ध्वा ममैवाद्भुयः
निघ्नन् नृत्यतु रक्षतात् कृतिमिमां बालो गणेशो बलात् ॥

आलङ्कारिकसागरोत्थलहरीदत्ता निबन्धावली
मालेयं गुरुसत्कृपासुरभिता याता नराऽऽस्वाद्यताम् ।
श्रीकाशीनगरीशशम्भुशुभदृक्पूता प्रसादीकृता
म्लाना नैव कदापि पण्डितपुरश्चर्चेन्दुना भासताम् ॥

अयोध्यास्थ संस्कृतं साप्ताहिक पत्रे ३२ संख्यातः १९।७।६०
ईशाब्दादारभ्य पञ्चसु अङ्केषु प्रकाशितः संस्कृतमयः

## ॥ काव्यकारणविचारः ॥

### प्रथम प्रकाशनम्

कविकुलहृदयविहारिणी सरसी सुकवितासरोजनिकरस्य ।
मम मनसि मनागुदेतु प्रतिभा पावनी सा शुभाय ॥

## ॥ प्रतिभापदार्थः ॥

प्रतिभायाः प्रायोऽखिलैरालङ्कारिकैर्विभिन्नशब्दैर्व्यवहरद्भिः काव्यकारणत्वमङ्गीक्रियत एव। तत्र प्रतिभापदप्रयोगविषयान् कियतः समासेन वर्णयामि। तत्र काव्यघटनानुकूलशब्दार्थोपस्थितिः प्रतिभेति पण्डितराजो जगन्नाथः। प्रायः पदार्थानां स्फुटतया प्रतिपादने अद्यावधि अवतीर्णान् सर्वानपि आलङ्कारिकानतिशेतेऽयं पण्डितराजः। साहित्यशास्त्रे च साहित्यमात्रे समुपयोगिनः कतिपये पदार्थाः परिभाषिताः, बहवश्चान्यशास्त्रे व्यवहृता एव यथायथमुपयोजिताः। प्रतिभादिज्ञानार्थकपदानां स्थूलदृष्ट्या सर्वत्र समानेऽपि प्रयोगे सूक्ष्मदृष्ट्या विवेचनेऽस्ति पदार्थभेदो दर्शनभेदेन। तत्र साहित्यशास्त्रशिरोमणय एकत्र कयाऽपि दर्शनवासनयाऽन्यत्र चान्यया प्रयुञ्जते पदार्थान्। दर्शनेष्वपि विशकलितविवेचनशीलस्य नव्यन्यायस्य कतिपयशब्दा निस्सन्देहार्थतया अधिकं प्रयुज्यमाना दृश्यन्ते नवीने शास्त्रे। एवञ्च नव्यनैयायिकानां सरणिमनुसृत्य स्मृतिज्ञाने प्रसिद्धोऽपि उपस्थितिशब्दो नात्र तथा, अपितु ज्ञान मात्रे मानसे प्रत्यक्षे वा। स्मृतानां नूतनत्वासंगत्वात् नूतनानामेव काव्यघटनानुकूलत्वात्।

द्वितीयः प्रतिभापदप्रयोगविषयश्च 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' इति प्रसिद्धः। क्वचिच्च प्रज्ञापदस्थाने बुद्धिरित्यपि पाठः। साङ्ख्यदर्शने बुद्धिर्नामान्तःकरणम्, तस्यैव विषयाकारपरिणामो ज्ञानं धर्मः। शीघ्रतया नवनवविषयाकारपरिणतिर्नवनवोन्मेषशब्देनाभिहिता। नेयं काव्यघटनानुकूलैव अपितु नीत्यादिसर्वविद्यानामनुकूला। एनामेवादाय बुद्धिबलमित्यादि व्यवह्रियते, तथा च बुद्धिबलमादाय मनुष्यः शक्तिशाली समर्थ इत्यादि व्यवहारेषु प्रतिभा शक्तिसामर्थ्यादि शब्दैर्व्यवह्रियत एवेति प्रतिभायाः शक्तिपदेन व्यवहार आचार्याणां न नूतनः।

यद्यपि साङ्ख्याभिमता बुद्धिः सर्वान् पुरुषानुपदधाति न च समेषां सा प्रतिभा अपितु केषाञ्चिदेव। किञ्च प्रतिपुरुषम् अनादिकालादामुक्ति उपदधाति न च सर्वस्मिन् जन्मनि प्रतिभा अपितु क्वचिदेव कादाचित्की च। तथा च कथं सा बुद्धिः प्रतिभा भवितुमर्हति इति शङ्का जायते तथापि तद्दर्शने पुण्याद्यदृष्टम् अनुभववशा बासना च बुद्धिधर्म एव। तद्विशिष्टा च सा क्वचित्कदाचिच्च प्रतिभा सम्पद्यत इत्यदोषः। तथा च प्रतिभापदप्रवृत्तिनिमित्त-

भूतो बुद्धेर्नवनवोन्मेषो न स्वाभाविकोऽपि तु अदृष्टवासनानिमित्तक एव। तदा च निमित्तवशाद् अदृष्टे वासनायाञ्च आलङ्कारिकाणां लाक्षणिकः प्रतिभापद-प्रयोगो नापूर्व इति ध्येयम्। तत्रापि तारतम्यजिज्ञासायान्तु काव्यमार्गे इत्थम् अवधेयम्।

सत्यमदृष्टवशात् प्राचीनवासनाप्रभावाच्च नवनवोन्मेषो बुद्धेः परमस्ति तत्रापि उन्मेषे कश्चिद्विशेषः। वासना संस्कार इत्यनर्थान्तरम्। संस्कारश्चानु-भवजन्योऽनुभवसमानविषयकः स्वानुभवसमानविषयिण्याः स्मृतेर्जनकः, न भवति गजानुभवजन्यसंस्कारेण तुरगस्य स्मरणम्। तथा च यः प्राग्जन्मनि सुकविः सोऽत्र जन्मनि नाधिकेन श्रमेण साधारणोद्बोधकवशादेव बिभृयात् काव्यनिर्माणनिपुणताम्। किञ्च निपुणताप्यैहिकी गतजन्मीयां तामनुहरेदेव नातिशयीत। संस्कारवशात् स्मृतानां विषयाणां नवनवताऽपि प्रागनुभूततया न साधु संगच्छते। अदृष्टन्तु स्वकारणापेक्षविलक्षणसामर्थ्यवत् न प्राक्तनं कवित्वमनुभवं वाऽपेक्षमाणं साधु नवनवोन्मेषकारि इति विभाति। तथा च समीक्षाचक्रवर्ती श्रीमान् नागेशमहोदयः प्रदीपोद्योते काव्यप्रकाशस्थ शक्ति-पदस्य प्रदीपकृताम् 'संस्कारविशेषः' इति व्याख्यामुपेक्ष्य 'देवताराधनादि जन्य विलक्षणादृष्टं शक्नोति काव्यनिर्माणायानयेति योगाच्छक्तिरिति उच्यते' इति साधु व्याख्यात्। किञ्चादृष्टेऽपि संस्कारशब्दप्रयोगः संभवति, यथाऽनुभवेन बुद्धिः संस्क्रियते तथा कर्मणाऽपि साधुः संस्कारोऽस्यासीद् येनानायासमरण-मलभतेत्यादावदृष्टपरतया प्रयुज्यतेऽपि। एवञ्च प्रदीपस्थं संस्कारपदमपि नादृष्टं दर्शयतीति न साधयितुं शक्यते।

पूर्वोक्ता प्रतिभापरिभाषा तु न सम्यङ्न्यायसरणिमनुसरति, अत एव कदाचन पण्डितराजपरित्यक्ता भवेत्। तथाहि नैयायिकानां ज्ञानापरपर्याया बुद्धिर्न तादृक्स्थिरा येन क्रमशः स्वभावेन सहकारिसाचिव्येन वा नवनवान् विषयान् अवगाहेत। क्षणत्रयेण भङ्गुरा न सा घटविषयितां क्षणेन परित्यज्य पटविषयितां धत्ते। नापि तस्याः कश्चिदुन्मेषः संभवति व्यापारः, शब्दबुद्धि-कर्मणां विरम्य व्यापारानङ्गीकारात्। धारावाहिकतया जायमाना नवनव-विषयावगाहिनी बुद्धिः प्रतिभेति यथाकथमपि संगम्यतां नाम।

यस्तु साङ्ख्यरीत्या व्याख्याने नवनवोन्मेषपदार्थः स एव प्रतिभापदार्थ-तयाऽभिमतः पण्डितराजानामिति तु निष्कर्षः प्रतिभाति, विवेचनीयं सुधीभिः।

## विलक्षणव्युत्पत्तिः

लोकशास्त्रादिविमर्शाद् व्युत्पत्तिरिति काव्यप्रकाशादावुपलभ्यते। एषैव च व्युत्पत्तिर्निपुणता पदेनाभिहिता कारिकायाम्। तत्र का नाम व्युत्पत्तिर्निपुणता वा इति विचारे लोकशास्त्रादीनामनुभवश्चेत् क्षणद्वयस्थायी संस्कारमुत्पाद्य विनश्यतीति समयान्तरेऽव्युत्पन्नतया काव्यनिर्माणं न स्यात्, न चैतावदपेक्षते किन्तु कतिपये आलङ्कारिका जन्मान्तरीत्यामपि व्युत्पत्तिं जन्मान्तरे उपयोजयन्ति। तथा च केनचित्स्थिरेण व्युत्पत्तिपदार्थेन भाव्यम्। तत्र लोकशास्त्राद्यनुभवजन्यः संस्कारो वासनापरपर्यायो व्युत्पत्तिरित्यायाति। केचन च लोकशास्त्रादीनामनुभवपर्यवसायि श्रवणमेव कारणमित्यपि वदन्ति, तत्र श्रवणस्य संस्काररूपव्यापारद्वारा कारणत्वं बोध्यम्। अनुभवजन्यः संस्कारः कारणम् अनुभवो वा संस्कारद्वारा कारणमिति न फले विशेषः।

## अभ्यासः

काव्यप्रकाशरीत्या काव्यज्ञशिक्षया करणे योजने च साभिनिवेशं प्रवृत्तिरित्येवाभ्यासः समेषां प्रायोऽभिप्रेतः। तत्रापि व्युत्पत्तिपदार्थनिर्वचनवत् करणयोजनाद्यनुभवजन्यः संस्कार एव स्थिरतां भजमानः काव्यकारणतामात्रमवशिष्यते। अत्रापि कारणयोजनादिविषयकानुभवस्य संस्कारद्वारा तादृशानुभवजन्यसंस्कारस्य वा कारणत्वे फलाविशेषो बोध्यः। व्युत्पत्त्यभ्यासयोर्द्वयोः संस्काररूपत्वेऽपि लोकशास्त्रादिविषयकः संस्कारो व्युत्पत्तिः, करणयोजनादि विषयकश्चाभ्यास इति भेदो बोध्यः।

## अथ संक्षेपेण प्राचीनमतस्य व्याख्यानम्

कतिपये आचार्या आलङ्कारिकभाषया विषयममुं निबद्धवन्त इति पदार्थस्फोरणाय, परस्परं मतानां साम्यवैषम्ये च विवरितुं संक्षेपेण व्याव्यामि। यद्यपीदं भाषानुवादभूमिकायां साह्योचनं समुद्धृतं दर्शनीयञ्च तथापि कियता वैमत्यैन किञ्चिदाख्यातुं प्रयते।

### तत्र परमप्राचीनो दण्डिमहाभागः,

नैसर्गिकी च प्रतिभा श्रुतञ्च बहुनिर्मलम्।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः॥

न विद्यते यद्यपि पूर्ववासना "गुणानुबन्धिप्रतिभानमद्भुतम् ।
श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम् ॥" इति वदति ।

पूर्वोक्तप्रतिभापदार्थविवेचनरीत्या विलक्षणादृष्टसहिता अन्तःकरणबुद्धिः प्रतिभान्तेनोक्ता । नैसर्गिकत्वञ्च तस्यादृष्टव्युत्पत्यभ्यासभिन्नत्वमेव । यथा शक्तिर्निपुणतेत्यादि कारिकाव्याख्यानावसरे 'प्रसिद्धातिरेकिण्येव तद्धेतौ शक्ति व्यपदेशात्' इति प्रदीपः । यद्यपि जन्मान्तरीयादृष्टवशादिह किञ्चिदनायासेन समुद्भूतं नैसर्गिकमिति व्यपदिश्यते तद्रीत्या च जन्मान्तरीयादृष्टसचिवा बुद्धिरिति व्याख्यानं प्रतिभान्तस्य संभवति तथापि ऐहिकदेवप्रसादादिव शाज्जायमाना काव्यसम्पन्न संगृहीता स्यादिति न्यूनतावारणाय तादृशमेव नैसर्गित्वं वर्णितम् । तादृशवर्णने च जन्मान्तरीयानुभवनजन्या कवित्व-वासनाऽपि संगृह्यते इति गुणान्तरमेव ।

। २६।७।१९६० ईशाब्दे द्वितीयं प्रकाशनम् ॥

श्रुतञ्च शास्त्रम्, प्रकाशोक्तलोकादीनामप्युपलक्षणम् । सम्यगनुभवश्च तस्य नैर्मल्यम्, तथा च पूर्ववर्णिता व्युत्पत्तिरेवोक्ता ।

अमन्दः साभिनिवेशः करणयोजनादिविषयिणी प्रवृत्तिः, तेनापि करण-योजनाद्यभ्यास एवोक्तः । तस्य च पर्यवसानं पूर्वोक्तेऽभ्यासपदार्थे । तत्र पूर्व-पद्येन प्रतिभाव्युत्पत्त्यभ्यासानां समुच्चयस्य अनुपहसनीय काव्यं प्रति कारणतां प्रदर्श्य, व्युत्पत्त्यभ्यासयोः समुच्चयस्य मध्यमाधमकाव्यकारणतां प्रदर्शयति द्वितोयेन पद्येनेति इतरेषां व्याख्या । द्वितीया मदीया तु सामान्यतः काव्य-सम्पत्प्रयोजकत्वं त्रयाणां प्रतिपाद्य प्रतिभया सह व्युपत्त्यभ्यासयोः समुच्चया-शङ्कां व्यावर्तयितुं द्वितीयं पद्यमाह । पूर्वा व्युत्पत्त्यभ्यासजन्या वासना गुण-स्तस्य सम्बन्धिनी अद्भुता प्रतिभा यद्यपि न विद्यते इति पूर्वमतेनार्थः । पूर्वा वासना जन्मान्तरीयादृष्टं जन्मान्तरीयकाव्यकरणसंस्कारो वा गुणोऽनुबन्धी अनुकूलो यस्यैवं भूतम् अदृष्टाद्यजन्यं यद्यपि नास्ति तथापि श्रुतयत्नौ कमपि काव्यप्रतिभानरूपमनुग्रहं कुरुत एव । तथा च पण्डितराजमते पर्यवसानम् ।

काव्यं प्रति प्रतिभा कारणम्; कुत्रचित् सा नैसर्गिकी, अन्यत्र च सा व्युत्पत्त्यभ्यासजन्येति पर्यवसानात् । प्रतिभादित्रयसमुच्चयस्य कारणता वादिमते तु प्रतिभानस्याभावेऽपि श्रुतयत्नाभ्यां काव्य सम्पद्यते इत्युक्त्यैव पर्यवसाने प्रतिमानविशेषणस्य वैयर्थ्यापत्तेः, मन्मते तु पूर्ववासनागुणानु-बन्धिनः प्रतिभानस्याभावेऽपि अन्यादृशप्रतिभानसूचनाद्वारा तत्सार्थकम् ।

साङ्ख्यसरण्या बुद्धिरूपप्रतिभाया काव्यमात्रं प्रति स्वातन्त्र्येण कारणत्वे केषाञ्चिद् वैमत्येऽपि काव्यघटनानुकूलशब्दार्थोपस्थितिरूपायाः प्रतिभायाः काव्यमात्रं प्रति कारणत्वे न कस्यचिद् विप्रतिपत्तिः। अदृष्टवासनादिरूपा श्रुतयत्नसहिता वा प्रतिभा तादृशोपस्थितिं जनयतु, तां विना कस्यापि काव्यस्यासंभवात् समेषां तादृशोपस्थितेरपेक्षितत्वात्।

किञ्च पूर्वव्याख्यायां किमपि काव्यं प्रति त्रयाणां किमपि च द्वयोः कारणत्वेऽपि काव्यमात्रं प्रति किमपि कारणस्वरूपं न वर्णितमिति ग्रन्थस्य न्यूनता। काव्यवैलक्षण्यस्य प्रतिभावैलक्षण्येनैवोपपत्तेः। नैसर्गिकीं प्रतिभां बिना काव्यमेव न जायते, अतस्त्रितयसमुच्चयस्य कारणता वक्तव्येति चेत् श्रुतेन यत्नेन चेत्यादेर्वैयर्थ्यमनुसन्धत्स्व। अकाव्यं प्रति तयोः कारणत्वञ्चेत् किमनुग्रहेण ? इति समुच्चयस्य कारणतावादित्वं दण्डिनो व्याख्यातृबुद्धिविलसितमेव नाक्षराणि तदायत्तानि इति प्रतिभाति। कारणमिति एकवचनन्तु आवृत्या प्रत्येकमभिसम्बन्धाभिप्रायेण। काव्यप्रकाशे तु हेतुरित्येकवचनं समुच्चयविरोधिवाक्यशेषस्याभावाद् भवतु नाम समुच्चयस्य कारणत्वे तात्पर्यं बोधनाय। अत्र तु वर्त्तते तद्विरोधि 'न विद्यते' इत्यादि पद्यान्तरम्। कमपि अनुग्रहमिति उपासितेति च प्रयोगोऽपि पुष्णाति तादृशमित्यलं ग्रन्थविवृद्धया।

## अथ रुद्रटमतम्

मनसि सदा सुसमाधिनि स्फुरणमनेकधाऽभिधेयस्य।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः॥

सहजोत्पाद्या च सा द्विधा भवति।
उत्पाद्या च कथञ्चिद् व्युत्पत्या जन्यते परया॥

बिस्फुरणं विभान्ति पदाभ्यां प्रतिभैव निर्दिष्टा। सा च पण्डितराजपरिष्कृतैव न तु कापिलपद्धतिप्रतिबद्धबुद्धिः। शक्तिश्च संस्काररूपा अदृष्टरूपा च सहजा, ऐहिकोत्कृष्टव्युत्पतिजन्या चोत्पाद्या। यद्यपि सहजशब्दस्वारस्यं जन्मान्तरीयादृष्टपरिग्रह एव तथापि ऐहिकदेवताप्रसादादिजन्यस्य संग्रहाय सामान्यतोऽदृष्टरूपतया परिगणितम्। सहजत्वन्तु दण्डिमते नैसर्गिकत्ववद् ऐहिकव्युत्पत्त्यजन्यत्वमात्रम्। अथवा सहजा अदृष्टमात्ररूपा, उत्पाद्या तु ऐहिक व्युत्पत्तिजन्या। यत्रैहिकव्युत्पत्तिर्न दृश्यते तत्र जन्मान्तरीयमदृष्टमेव बालकवेः कल्प्यते। जन्मान्तरीयव्युत्पत्तिकल्पने मानाभावादिति यथा पण्डितराजोऽभि-

प्रेति, पूर्वमते संस्काररूपताऽपि सहजाया अङ्गीकारे तु संस्कारोपपत्तये क्वचिद् बालकवेर्गतभवीयकवित्वकल्पनाऽपि क्रियेत ।

अत्राभ्यासस्य गणना न दृश्यते अथापि तेन न न्यूनता व्युत्पत्तिपदेन लोकशास्त्रादेः करणयोजनादेश्च व्युत्पत्तेः संग्रहस्य संभवात् । व्युत्पत्त्यभ्यासयोरुभयोरपि संस्कारे पर्यवसानस्योक्तत्वाच्च । एवञ्च क्वचिच्चैहिकव्युत्पत्तिकृतसंस्कारजन्येति प्रायः पण्डितराजमते एव पर्यवस्यति ।

## ॥ ९।८।६० ईशाब्दे तृतीय प्रकाशनम् ॥

## अथ वामनमतम्

कवित्वबीजं प्रतिभानम्, कवित्वस्य बीजं संस्कारविशेषः कश्चित्, यस्माद्विना काव्यं न निष्पद्यते निष्पन्नं वा हास्यायतनं स्याद् इति वामनवचः । प्रतिभानं प्रतिभाजनकम्, बीजं कारणम् संस्कारविशेष इत्यस्य प्रतिभाद्वारेति शेषः । कश्चित् संस्कारविशेषः प्रतिभाद्वारा कवित्वस्य कारणमित्यर्थः । किमपि कारणं शब्दार्थोपस्थितिमन्तरा काव्यं घटयितुं न प्रभवतीति प्रतिभाद्वारकत्वं समेषामिष्टमेव । संस्कारपदेन अदृष्टं व्युत्पत्यादिजन्यः संस्कारश्च सर्वोऽपि गृह्यते, बालस्य कवित्वे देवताप्रसादादिजन्यमदृष्टं जन्मान्तरीयव्युत्पत्तिजन्यः संस्कारो वा कारणम् । नेदं मतमपि विरुणद्धि पण्डितराजप्रक्रियायामिति ध्येयम् । हास्यायतनम् अभ्यासरूपं हास्यपात्रम् । तथा च काव्यं प्रति प्रतिभेव कारणम्, केचन अनुपहसनीयकाव्यं प्रति प्रतिभा कारणम्, उपहसनीयकाव्यं प्रति अन्यद् व्युत्पत्त्यादिरिति व्याचक्षते परमुपहसनीयत्वनिर्वचनस्यासंभवान् न स्फुटम्, अन्यच्च तथा व्याख्यानस्य खण्डनं दण्डिमतव्याख्याने प्रदर्शितदिशाऽवसेयम् ।

## अथ मम्मटाचार्यमतम्

तदनन्तरं मम्मटाचार्यस्यापि मतमित्थमायाति, "शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् । काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ।" अस्य वहुभिर्व्याख्यातत्वात् तदुपपादने विस्तरापत्त्या किञ्चिदेव प्रदर्श्य समापयिष्यामि, शक्तिः संस्कारविशेष इति तद्वृत्तौ प्रतिपादितम् । तस्यादृष्टपरत्वेन व्याख्यानं नागेशमहोदयस्य प्रागेव प्रदर्शितम् । निपुणता पूर्वोपदर्शितव्युत्पत्तिरूपा एव । अभ्यासोऽपि करणयोजनयोः प्रतिपादित एव यद्यपि क्वचिच्छक्तिः क्वचिच्च काव्ये निपुणताऽभ्यासो कारणमिति दिशापि व्याख्यास्य दृश्यते, परमेकवच-

नान्तहेतुपदेन शक्त्यादित्रयसमुच्चयस्य कारणत्वे बहवो व्याख्यातारः, व्युत्पत्तिवादादौ अत्र च ग्रन्थे समुदितस्य कारणत्वेनैवोद्धरणं दृश्यते इति समुदितत्रयस्य कारणतावादित्वेनैव मतमिदं गृह्णामि, तत्खण्डनन्तु रसगङ्गाधरमूल एव वर्तते। तत्रापि काव्यं प्रति त्रितयस्य कारणत्वे बहवो व्याख्याः, परं काव्यानुकूलप्रतिभां प्रति त्रितयस्य कारणत्वं ग्रन्थाभिप्रेतं कल्पयामि। तथैव व्याख्यानस्य पण्डितराजाभिप्रेतत्वात्। किञ्च प्रतिभारूपां काव्यानुकूलशब्दार्थोपस्थितिमजनयन्तः शक्त्यादयः काव्यनिर्माणे किं विदध्यु ?, संस्कारश्च शक्तिविशेषः शब्दार्थस्मृतिमन्तरा किं विधास्यति काव्यस्थः। तथा च तदुद्भवे इत्यस्य प्रतिभाद्वारा काव्यनिर्माणे इत्यादिरीत्या व्याख्या विधेया। नेयं ममैव कल्पना किन्तु वस्तुस्थितिः सुधासागरस्यापि तथैव व्याख्या, अनन्यपरतन्त्रामित्यस्य व्याख्याने कवेस्तत्प्रतिभायाश्चान्यः पर इति वदन्तो व्याख्यातारः प्रतिभायाः काव्यकारणत्वं नाङ्गीकुर्वन्तीति को वक्तुं पारयेत् ? किञ्च पण्डितराजस्यापि प्रतिभां प्रत्येव समुदितत्रयस्य कारणतावादित्वेन काव्यप्रकाशमतमभिप्रेतम्। अतएव न तु त्रयमेव इत्यनेन प्रतिभां प्रत्येव समुदितत्रयस्य कारणतां खण्डयति न तु काव्यं प्रति व्याख्याति नागेशमहोदयश्च तत्र तथैव। एतादृशेऽभिप्राये 'शक्त्यादित्रयहेतुतावादिनः शक्तिमात्रहेतुतावादिनश्चेति रसङ्गाधरमूलं विरोधनञ्चेतीति न चिन्तनीयम् संस्कारमात्रहेतुतावादिनो वामनस्य शक्तिमात्रहेतुतावादिन उपग्रहे विरोधाभावात्। यद्यपि विशिष्टं काव्यं प्रति त्रितयस्य अविशिष्टञ्च प्रति द्वयोरिति नागेशस्य मतं व्याख्यानं वा तस्य परीक्षा तु गतया आगमिष्यन्त्या च परीक्षया गतार्थनीया।

यच्च शक्तिपदार्थस्यैव प्रतिभात्वेन व्याख्यानम् काव्यप्रदीपे उपलभ्यते तन्न समेषां सम्मतम्। भवेदपि शक्तिपदार्थः प्रतिभा परं न सा पण्डितराज परिष्कृता प्रतिभा, अपितु प्रज्ञा नवनवोन्मेषत्वादिना लक्षिता।

समुदितत्रयस्य हेतुता दण्डचक्रकुलालादिन्यायेन व्याक्रियते। यथा घटं प्रति चक्रत्वेन कुलालत्वेन च चक्र-कुलाल-कपालादेः कारणत्वेऽपि न केवलेन चक्रेण कुलालेन वा घटफलजननम् अपितु चक्रकुलालादिसमुदायस्यैव फलजनकता एवं काव्यप्रतिभां प्रति काव्यं प्रति वा शक्तिनिपुणताभ्याससमुदायस्यैव फलजनकता न तु प्रत्येकम्।

पण्डितराजानां तृणारणिमणिन्यायेन मतन्तु इत्थम्—यथा वह्निं प्रति क्वचित्तृणं कारणम् क्वचिदरणिमन्थनम् अन्यत्र च सूर्यकान्तो मणिः, न च त्रयः समुदिताः कमपि वह्निं समुत्पादयन्ति, तथा काव्यप्रतिभां प्रति काव्यं प्रति

वा क्वचिच्छक्तिः कारणं क्वचिच्च व्युत्पत्त्यभ्यासौ, न तु समुदिताः त्रयः क्वचिदपि काव्यप्रतिभां काव्यं वा जनयन्ति । इति ।

१९-८-९० ईशाब्दे चतुर्थं प्रकाशनम्

## अथ वाग्भटमतम्

तदनन्तरञ्च वाग्भटो ब्रूते—

प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम् ।
भृशोत्पत्तिकृदभ्यास इत्यादि कविसंकथा ॥

प्रतिभाव्युत्पत्ती सुन्दरं काव्यं जनयतः, अभ्यासस्तु अधिककाव्यरचनायामुपयुञ्जानो न काव्यसामान्यकारणतायां गणनीयतामावहति इति तदभिप्रेतं प्रतिभाति । एवञ्च सुन्दरकाव्यं प्रति समुचितकारणतावाद्येवेदमपि मतम् । एतन्मते प्रतिभा न काव्यघटनानुकूलशब्दार्थोपस्थितिः तथैव काव्यसम्पत्तौ व्युत्पत्त्यादीनां वैयर्थ्यापातात् । न च सैवोपस्थितिः प्रतिभा परं व्युत्पत्तिसहकृता सुन्दरकाव्यघटनानुकूला भवतीति वाच्यम् प्रतिभासामर्थ्यविशेषाधायिकाया व्युत्पत्तेः प्रतिभां प्रति कारणत्वापातेन काव्यं प्रति कारणत्वोक्तेरसंगत्यापत्तेः, किञ्च नाद्यावधि केनापि असुन्दरत्वघटितं काव्यत्वं लक्षितं येन काव्यघटनानुकूला शब्दार्थोपस्थितिः सुन्दरकाव्यघटनानुकूला न भवेत् । नवनवकल्पनाशालिनी अन्तरिन्द्रियरूपा बुद्धिः प्रतिभाशब्देन विवक्षिता । सा च साधारणी शास्त्रान्तरेष्वपि नवनववस्तूत्थापनशीला । सा च काव्यमार्गेऽपि नवनवान् शब्दार्थानुपस्थापयन्ती वाक्यस्य पद्यस्य वा कारणं भवन्त्यपि चमत्कृत्याधायकवाक्यस्य व्युत्पत्तिं विना नाधायिकेति व्युत्पत्तिस्तस्याः सहकारिणी अङ्गीक्रियते । प्रतिभाजन्यशब्दार्थोपस्थितौ काव्यघटनानुकूलत्वं व्युत्पत्तिसहकारसमासादितमिति भावः । तथा च विभूषाविशिष्टमेव वाक्यादिकं काव्यं विभूषारहितं वाक्यमात्रं काव्याभासं वा । तादृशञ्च काव्यमुभाभ्यामेव प्रतिभाव्युत्पत्तिभ्यां क्रियते । प्रतिभामात्रेण नवार्थशब्दघटितवाक्यसम्पादनं व्युत्पत्त्या च चमत्काराधानम् । विभूषा च चमत्कारित्वमेव ।

एतेन किन्नाम व्युत्पत्तेर्विभूषणत्वं ? चमत्कारित्वं गुणाधानं वा ? नाद्यः तद्रहितस्य काव्यत्वानङ्गीकारात् प्रतिभया काव्यस्याजननात् किं विभूषितं स्यात् ? नापि द्वितीयः प्रतिभया निर्गुणमेव काव्यं क्रियते, व्युत्पत्तेस्तु काव्य-

गुणान् प्रत्येव कारणत्वं न तु काव्यं प्रतीति पर्यवसानेन काव्यसामान्यं प्रति तयोः समुदायस्य किमपि न स्यात्। ननु निर्गुणस्य काव्यत्वाभावात् काव्यसामान्यं प्रत्येव कारणता आयाति चेत् न प्रतिभया काव्यस्याजननाद शरीरस्यैव विभूषत्वापत्तेः। इत्यादयो विकल्पाः समाहिता बोध्याः। एषा च विवेचनप्रक्रियाऽन्यत्रापि समुदितकारणतावादिमते योजनीया।

इदन्त्ववधेयम् एषा च प्रतिभा व्युत्पत्तिसध्रीचीना पण्डितराजसम्मतां प्रतिभां द्वारीकृत्य काव्यं प्रयोजयति इति काव्यमात्रे प्रतिभैव कारणमित्यंशेन न विरोधः परं प्रतिभां प्रति प्रतिभाशक्तेर्व्युत्पत्तेश्च समुच्चयस्य कारणत्वे विरोधः। स च बालकवेः प्रतिभायां पण्डितराजमते जन्मान्तरीया व्युत्पत्तिर्न कल्पनीया आपततिः, वाग्भटमते च जन्मान्तरीया कल्प्येतैताहशरूपः। प्रागुक्तप्रतिभापदप्रयोगविषयान् अधिगत्य प्रतिभापदेन अदृष्टं संस्कारो वा कथं ध्रियते इति स्फुटमवगन्तव्यम्।

आविर्भावसमयमनुरुध्य विवेचने क्रमशः १. दण्डिमतम्, २. रुद्रटमतम्, ३. वामनमतम्, ४. मम्मटमतम्, ६. पीयूषवर्षमतम्, ७. पण्डितराजजगन्नाथमतम्, ८. रसगङ्गाधरटिप्पणविधातुर्महामहोपाध्यायस्वर्गीय श्री गङ्गाधरशास्त्रिमतम् इति क्रमशः आयाति, तथापि वाग्भटमतसहृशतया अनल्पप्रतिपादनभयात् अष्टममेव मतमुद्धरामि। विशिष्टकाव्यं प्रति प्रतिभाव्युत्पत्त्यभ्यासानां समुदायस्य कारणता। विशिष्टं काव्यन्तु लोकोत्तरवर्णना निपुणताविशिष्टं कविकर्म। प्रतिभामात्रेण शब्दार्थयोर्योजनायां सम्भवन्त्यामपि निपुणतारूपव्युत्पत्तिमन्तरा शब्दार्थयोर्वैलक्षण्यस्य काव्यत्वाधायकस्या सम्भवात् निपुणता वैलक्षण्याधायिका, तथा लोकोत्तरतायाः शब्दार्थयोः सम्पादकोऽभ्यासश्च प्रतिभासहकारितयाऽङ्गीक्रियते। प्रकारान्तरेण उपपादने शक्तिर्द्विधा उत्पादिका व्युत्पादिका च। आद्या प्रतिभा उत्पादिका, द्वितीया निपुणता नाम वैलक्षण्याधायिकेति ······ प्रतिभाति। वाग्भटमतेऽभ्यासस्य भृशोत्पत्तिकारित्वमात्रमुक्तम्, अत्रतु लोकोत्तराधायकत्वम् अतोऽस्या सामान्यकार्यकारणभावे प्रवेशो विशिष्यते, परं वैलक्षण्यलोकोत्तरत्वयोः कियान् भेद इति न स्फुटं प्रतिभासते। अन्यच्च प्रतिपादनं वैलक्षण्यमादधदपि प्रायो वाग्भट्टवदेव प्रतिभाति। स्वर्गीयपण्डित श्रीपुरुषोत्तम चतुर्वेदिमहोदयास्तु भाषानुवादटिप्पणे इत्थमालोचयन्ति यद् भवतां मते विशिष्टं काव्यप्रकाशमते च अनुपहसनीयं काव्यं तदेव काव्यसामान्यं न काव्य विशेषः। केवलच्छन्दोलयादिबन्धनस्य अद्यावधि केनापि काव्यत्वानङ्गीकारात्,

यस्येतादृशं काव्यं नोत्पादयति प्रथमा शक्तिस्तदा न सा काव्योत्पादिकाऽभिधानमर्हति। यदि विशिष्टकाव्यमुत्पादयति तदा सैव काव्यकारणं, निपुणताऽभ्यासौ तु प्रतिभाशक्तिविकासायैवेति संक्षेपतस्तत्सारः।

तत्रेदं वक्तव्यम्—यथा कारणान्तरसहकारं विना घटमजनयन् कारणान्तरसहकारेण च जनयन् कुलालो घटकारणं भवति तथा व्युत्पत्त्यादि सहकारं बिना विशिष्टं काव्यमजनयन्ती, तादृशसहकारेण च जनयन्ती प्रतिभाशक्तिः काव्योत्पादिका कथन्न भवति? प्रतिभाशक्तिश्च काव्यमार्गे वाग्भट्टमतवदेव संकुचितेति समुच्चितस्य कारणत्वमप्यायाति। अन्ये चोपपादनविवेचने पूर्वमतवदेव बोध्ये तथा च समुदितकारणतावादिमते प्रतिभासं कोऽत्राऽप्रामाणिकः। अन्तरिन्द्रियबुद्धिरदृष्टादिसहकृतैव प्रतिभा भवति इति तु प्रागुक्तम्। अदृष्टञ्च एतावन्तमेव कार्यस्यांशं साधयितुं प्रभवति नांशान्तरमिति कल्पना निष्प्रामाणिकी। तादृशकल्पनया च बालकवेर्भवान्तरीय व्युत्पत्त्यभ्यासयोः कल्पनापत्तिरिति गौरवपरम्परैव दोषः। पण्डितराजप्रतिपादितप्रतिभायाः काव्यमात्रं प्रति कारणत्वन्तु न केनापि खण्डनार्हमिति तु ध्येयमेव।

## अथ पीयूषवर्षमतम्

प्रतिभैव श्रुताभ्याससहिता कवितां प्रति।
हेतुर्मृदम्बुसम्बद्धबीजोत्पत्तिर्लतामिव ॥

इति पीयूषवर्षवृष्टिः। एवपदं प्रतिभायाः प्राधान्यस्य वैलक्षण्यस्य वा द्योतनाय न तु व्युत्पत्त्यभ्यासयोर्व्यावृत्तये पण्डितराजमतापतात्, मृदम्बु दृष्टान्तासङ्गतेश्च। नहि बीजं मृदम्बुसहकारं बिना लतां प्रति प्रभवति। प्राधान्यं वैलक्षण्यम्वेत्थं दृष्टान्तबलादायाति यवलतां प्रति यवबीजम् गोधूमलतां प्रति गोधूमबीजम् इत्यादिरीत्या बीजमसाधारणम्, मृदम्बुनी तु लतान्तरं प्रत्यपि उपयुञ्जतो बीजान्तराणामपि सहकारिणी तथा प्रतिभा काव्यस्यासाधारणं कारणमिति। श्रुतशब्दस्य दण्डिमतम् इव व्युत्पत्तौ तात्पर्यमवसेयम्। उत्पत्तिपदन्तु प्रायः पादपूरकमेव त्रयाणां समुदायस्य कारणतावादिमतमिदम्। अन्यच्चापेक्षितमुपपादनं वाग्भटमतप्रतिपादनादवसेयम्। अनन्तरोक्तञ्च गौरव परम्परादूषणमनुवर्तनीयम्। एवपदमपि तादृक् सफलं न प्रतिभाति व्युत्पत्त्यभ्यासयोरपि असाधारणयोरेव काव्यमात्रप्रयोजकयोर्ग्रहणात्।

२३।८।६० ईशाब्दे पञ्चमं प्रकाशनम्

## पण्डितराजमतम्

मतमिदं रसगङ्गाधरमूल एव स्फुटभाषया प्रतिपादितम्। प्रायस्तत्सारः क्वचिच्च काश्चिदपेक्षिता व्याख्या विलिख्य समाप्यते लेखः। काव्यमात्रं प्रति पूर्वोक्ता प्रतिभा कारणम्, सा च काव्यघटनानुकूलशब्दार्थोपस्थितिरूपा। पूर्वमेव लक्षिता। प्रतिभात्वमखण्डोपाधिरूपम्। कारणताकार्यतावच्छेदकतया उपयोज्यमानो जातिसमशीलो धर्मोऽखण्डोपाधिरुच्यते। जातेः संकरादि दोष-व्यावृत्तधर्मतया जातित्वबाधके सति अखण्डोपाधि तदङ्गीक्रियते। प्रतिभा लक्षणे काव्यघटानुकूलत्वादि विशेषणं परिचायकमात्रम्, न तु कारणतावच्छेदक कोटौ प्रवेशः। काव्यघटनानुकूलत्वञ्च काव्यप्रयोज्यचमत्कृतेः परम्परया प्रयोजक-त्वम्। ततश्च कारणतावच्छेदककार्यतावच्छेदकधर्मयोः सर्वकार्यकारण वृत्तित्वं कार्यकारणभिन्ने च व्यावृत्तत्वमपेक्षितं भवति। तादृशश्च धर्मो जाति-रूपोऽखण्डोपाधिरूपो वा भवेत्। इदञ्च सर्वानुभवसिद्धं वैज्ञानिकं न तु कस्यचि-च्छास्त्रविशेषस्य कल्पना पोषितम्। तथाहि दण्डेन घटनिर्माणं पश्यन् प्रेक्षावान् सकले दण्डे कारणतां गृह्णाति न तु तद्दण्डव्यक्तावेव अतएव तद्दण्डविनाशे नूतनं दण्डं वृक्षादादात् प्रवर्त्तते। न तु दण्डादितरस्मिन् तादृशकारणतां प्रति-पद्यते, दण्डविनाशे दण्डकार्य सम्पादनाय इङ्गालादावप्रवर्तमानात्। तथा च सकले दण्डे वर्तमानं दण्डादितरस्मिश्चावर्तमानं किञ्चिदवश्यमवगच्छति। एवं दण्डस्य कार्यतां सकले घटेऽवगच्छति न तु तद्घटव्यक्तावेव, अतएव घटान्त-रोत्पादाय दण्डमादत्ते न तु पटोत्पादाय। तस्मात् सकले घटे वर्तमानं घटादि-तरस्मिश्चावर्त्तमानं किञ्चिदवश्यं प्रतिपद्यते। तदेव घटत्वं जातिः। एवं सकले दण्डे वर्तमानं दण्डादितरस्मिश्चावर्तमानं कारणतावच्छेदकं दण्डत्वं जातिः। मुक्ताबल्यादौ यथा जातिबाधकादेः प्रसिद्धस्ततो विलक्षणं व्याख्यान्तरं वैयाक-रणसिद्धान्तलघुमञ्जूषायां वर्तते, तेन आकाशत्वभूतत्वमूर्तत्वादयोऽपि जातयो भवन्ति। तादृशाभिप्रायेणैव अखण्डमिति पाठे मर्मप्रकाशो विप्रतिपद्यते, तत्तु मतान्तरमिति नालोचनया समेधये।

तादृशीं काव्योत्पादिकां प्रतिभां प्रति तु देवगुरुजनमहर्षिप्रभृतिप्रसा-दवरतपश्चरणादयः क्वचित् कारणम्, क्वचिच्च व्युत्पत्तिरभ्यासादिश्च। जातस्य तरुणस्यापि शास्त्राभ्यासेन कवितायां प्रवेशमलभमानस्य देवोपासनया महात्माशिषा तपस्यया वा कविकर्मतासिद्धिः। तत्र व्युत्पत्त्यभ्यासयोः कारण-

त्वस्य अभावेन पूर्वस्य कारणत्वम्। यत्र च व्युत्पत्त्यभ्यासानन्तरमेव प्रतिभा तत्र तयोरेव कारणता न तु देवगुरुप्रसादादेरदर्शनात्। न च जन्मान्तरीयं देव गुरुप्रसादादिकं कार्यवशात् कल्पनीयमिति वाच्यम् प्रतिभामात्रं प्रति देवगुरु-प्रसादादेः कारणत्वस्यैवाभावात्। प्रतिभाया व्युत्पत्त्यभ्यासानन्तरं दर्शनात् देवगुरुप्रसादादेरदर्शनाच्च व्यभिचारग्रहणे प्रतिभात्वापच्छिन्नं प्रति गुरुप्रसादादेः कारणत्वग्रहासंभवात्। यत्र बलवता प्रमाणेन कार्यकारणभावग्रहस्तत्र कार्यं दृष्ट्वा जन्मान्तरीयस्यापि कारणस्यानुमानं भवति। यथा सुखदुःखे प्रति धर्मा-धर्मयोः, यथा वा श्रुतिसिद्धे तत्तत्फलं प्रति यागस्य कारणत्वे चिरकालानन्तरं भाविफलस्य यागस्य विनष्टतया फलाव्यवहितपूर्वत्वाभावेन कारणत्वानुपपत्त्या व्यापारतया अपूर्वधर्मादेः कल्पनम्, अतो दृष्टकारणेन निर्वाहे अदृष्टकल्पना सर्वथा अनुचिता। नापि प्रतिभामात्रं प्रति व्युत्पत्त्यभ्यासयोः कारणत्वम् देवा-दिप्रसादप्राप्तप्रावीण्यस्य बालकवेः प्रतिभां प्रति व्यभिचारात्। न च तत्र जन्मा-न्तरीययोस्तयोः कल्पनम् तत्र व्यभिचारेण कार्यकारणभावग्रहस्यैव असम्भवेन अनुमापकहेतोरभावात्। एवञ्च नानाकारणकार्यतावच्छेदकतया प्रतिभा-गतं नानाप्रतिभात्वमङ्गीकार्यम्। एवं विविधकाव्यकारणतावच्छेदकतयाऽपि नाना प्रतिभात्वम्। यथा तृणारणिमणिकार्यतावच्छेदकं नैकं वह्नित्वं किन्तु विभिन्नं तार्णवह्नित्वादिकम्। ननु नानाकारणस्थले परस्परव्यभिचारस्य वारणाय स्वाव्यवहितोत्तरप्रतिभां प्रति देवताप्रसादादिशक्तिः कारणमित्या-दिरीत्या नानाकार्यकारणभाव एवावकल्प्यतां कथं प्रतिभात्वस्य नानात्वं कल्प्यत इति वाच्यम् कारणतावच्छेदककोटौ कार्याद्यनुप्रवेशस्य पक्षतादीधितौ निन्दितत्वात्। एवं कार्यमात्रं प्रति प्रतिबन्धकाभावस्य क्लृप्ततया विहितकति-पयप्रबन्धस्यापि वादिना विहितमन्त्रादिवाक् स्तम्भनस्य कवितायाः अभावात् प्रतिबन्धकाभावस्य सामान्यतयैव कारणत्वम्। एवञ्च स्वजनककृतिमत्त्व सम्ब-न्धेन काव्यं प्रति समवायसम्बन्धेन तत्तत्प्रतिभा कारणमित्यवसेयम्। अन्या-दृशश्च कार्यकारणतावच्छेदकसम्बन्धयोजनं रसगङ्गाधरटीकाचन्द्रिकाप्रतिपादित-मत्यन्तमशुद्धमिति पाठकैरवधेयं विस्तरभिया च नेह वितन्यते। एवञ्च अदृष्ट-शक्तेः व्युत्पत्त्यभ्यासयोश्च पृथक् कारणत्वस्थापनेन समुदितत्रयस्य कारणत्व-वादिनः काव्यप्रकाशस्य मतं खण्डितमेव।

तत्र मर्मप्रकाशः—एवकारेण क्वचित् त्रितयस्यापि कारणत्वमिति ध्वनयति। विलक्षणत्रितयजन्यप्रतिभा चाति विलक्षणा, तज्जन्यं काव्य-ञ्चातिविलक्षणमेवेति न दोष इति दिक् इत्याह। तत्तु ग्रन्थान्तरवासनया

अनुपहसनीयकाव्यं प्रति त्रितयसमुदायस्य कारणत्वाभिनिवेशेन, न तु पण्डितराजमते तस्यावश्यकता। दृष्टकारणाभावस्थल एवादृष्टस्य कल्पनात्, व्युत्पत्त्यभ्यासस्थले ताभ्यामेव काव्यप्रतिभा सम्पत्तौ किमर्थमदृष्टं कल्प्येत ? अन्यथा सर्वत्राऽदृष्टकल्पनाप्रसरे समुच्चितकारणतावादित्वमेव प्रसज्येत। नहि विलक्षणता व्युत्पत्त्यभ्यासयोः सामर्थ्यं केनापि तोलितं येन ताभ्यामुपहसनीयमेव काव्यं जन्यत इति निर्णीयेत।

एवञ्च समुदितकारणतावादिमते बालकवेर्जन्मान्तरीयव्युत्पत्त्यभ्यासयोः कल्पनागौरवं तिष्ठत्येव। किञ्चादृष्टशक्तिसहकारं बिना क्वापि व्युत्पत्त्यभ्यासयोर्न काव्यप्रतिभासम्पादकत्वमिति अदृष्टस्य परिचयाभावात्, व्युत्पत्त्यभ्यासयोर्नैष्फल्यभिया काव्यानुरागिणामपि प्रवृत्तिर्न भवेत्। यद्यपि कार्यमात्रं प्रति अदृष्टस्य कारणत्वं तथापि ततो विलक्षणमिदमदृष्टं काव्यप्रतिभा प्रयोजकम्, अतो विलक्षणव्युत्पत्त्यभ्यासाभ्यामपि क्वचित् काव्यप्रतिभा अवश्यमङ्गीकार्या इति।

अयोध्या के साप्ताहिक संस्कृतं पत्र के १९।७।१९६० ई० से
पाँच अङ्को में संस्कृतमय प्रकाशित

# काव्यकारणविचारः की हिन्दी

कविकुलहृदयविहारिणी सरसी सुकविता सरोजनिकरस्य।
मम मनसि मनागुदेतु प्रतिभा पावनी सा शुभाय॥

## प्रतिभा का परिचय

सभी आलङ्कारिक प्रायः भिन्न भिन्न शब्दों से व्यवहार करते हुए प्रतिभा को काव्य कारण मानते ही हैं, उसमें प्रतिभा पद का जिस अर्थ में प्रयोग होता है, वैसे कुछ का संक्षेप से वर्णन किया जाता है, उसपर काव्य रचना के उपयोगी शब्द और अर्थों की उपस्थिति को पण्डितराज जगन्नाथ प्रतिभा कहते हैं, प्रायः पदार्थों के स्फुट प्रतिपादन में आजतक पण्डितराज जगन्नाथ का आलङ्कारिकों में ऊंचा पद है, साहित्य शास्त्र में साहित्य मात्र में उपयोगी कुछ पदार्थों का वर्णन है, उनकी परिभाषा भी की गई है, दूसरे शास्त्रों में वर्णित बहुत विषय जिस किसी प्रकार उपयोग में लाये जाते हैं, प्रतिभा आदि ज्ञान अर्थ वाले पदों का स्थूल दृष्टि से सभी जगह समान व्यवहार होने पर भी दर्शनों के भेद से सूक्ष्म विचार द्वारा उनके अर्थों में भेद मालूम पड़ता है, उसमें साहित्य शास्त्र के बड़े विद्वान् लेखक कहीं पर किसी दर्शन की वासना से लिखे हैं तो दूसरी जगह दूसरे दर्शनों की मिलती है, और उसके अनुसार पदों का व्यवहार करते हैं, दर्शनों में भी विशकलित विवेचनवाले नव्यन्याय के निःसंदिग्ध अर्थवाले कुछ शब्द नवीन शास्त्रीय ग्रन्थों में मिलते हैं इस प्रकार नव्यन्याय में स्मृति में विशेष प्रसिद्ध उपस्थिति यहाँ वैसा लेना अच्छा नहीं हैं किन्तु सामान्य ज्ञान अथवा मानस प्रत्यक्ष लेना चाहिये। स्मरण में नया नहीं होगा, न ये हीं काव्य रचना के उपयोगी होंगे, दूसरा नये नये उन्मेष वाली बुद्धि को प्रतिभा कहना प्रसिद्ध है, कहीं कहीं बुद्धि की जगह प्रज्ञा शब्द का भी पाठ है, सांख्यदर्शन में बुद्धि नाम का

एक भीतर इन्द्रिय है, उसी का परिणाम ज्ञान धर्म है, जल्दी जल्दी नये नये विषयों का ज्ञान उन्मेष शब्द से कहा गया है, यह प्रतिभा केवल काव्य का उपयोगी नहीं है किन्तु नीति आदि शास्त्रों के भी अनुकूल है, उसी को लेकर बुद्धि बल का व्यवहार है, और ऐसे बुद्धिबल को लेकर मनुष्य शक्तिशाली है, समर्थ है इत्यादि व्यवहार होते हैं, इस लिये आलङ्कारिक आचार्यों का शक्ति शब्द से प्रतिभा का व्यवहार नया नहीं है, यद्यपि सांख्य सम्मत बुद्धि सभी के पास है तौभी वह प्रतिभा नहीं है, किसी किसी की ही बुद्धि प्रतिभा है, और भी वह बुद्धि अनादिकाल से हर एक पुरुष के पास है मुक्ति तक रहने वाली है, तौभी वह प्रतिभा नहीं होती, किन्तु कभी कहीं प्रतिभा होती है, तब वह बुद्धि प्रतिभा कैसे होगी यह शङ्का होती है, तौभी पुण्य आदि अदृष्ट और अनुभव से होने वाली वासनायें बुद्धि के ही धर्म हैं, उससे युक्त बुद्धि को प्रतिभा कहा जा सकता है, प्रतिभा पद के प्रयोग का विभिन्न नया नया उन्मेष बुद्धि का स्वाभाविक नहीं हुआ किन्तु अदृष्ट तथा वासनाओं से होने वाला हुआ। इन कारणों से अदृष्ट या संस्कार में आलङ्कारिकों का प्रतिभा पद का लाक्षणिक प्रयोग अपूर्व नहीं है, उसमें भी विशेष जिज्ञासा होने पर इस प्रकार समझना चाहिये–यह ही है कि अदृष्ट और वासनाओं से बुद्धि का नया नया उन्मेष होता है तौभी उसमें कुछ फरक है, वासना और संस्कार एक ही वस्तु है। संस्कार अनुभव से पैदा होता है, अनुभव के विषय ही इसके विषय होते हैं, जिन विषयों का अनुभव हुआ था उन्हीं विषयों की स्मृति को संस्कार पैदा करता है, हाथी के अनुभव से पैदा हुआ संस्कार घोड़े को याद नहीं कराता, जिस प्रकार जो पहले जन्म में सुकवि था वह इस जन्म में अल्प श्रम से थोड़े उद्‌बोधकों द्वारा काव्य निर्माण में निपुण हो सकता है। किन्तु उसकी इस जन्म की निपुणता भी अतीत जन्म की निपुणता का अनुसरण करेगी, बढ़ेगी नहीं, संस्कारवश स्मृत हुए विषय भी पहले जन्म में अनुभूत रहेंगे, उनकी नूतनता भी ठीक संगत नहीं होगी, अदृष्ट तो विलक्षण सामर्थ्य वाला है, वह अदृष्ट है तब उसके सामर्थ्य की परीक्षा कैसे कर सकते हैं सामर्थ्य में ननुनच भी कैसे करें ? उसके फल से ही उसकी महिमा अवगत होगी, उसके कारण जितने बलवान् होंगे उतना ही बलवान् अदृष्ट होगा; वह पूर्व जन्म कविता की अथवा अनुभव की अपेक्षा नहीं करेगा, बुद्धि में अच्छा नया उन्मेष कर सकेगा, इसीलिये समीक्षा चक्रवर्ती श्री नागेश महोदय शक्ति

पद का अच्छा व्याख्यान अदृष्ट अर्थ में करते हैं, ऐसे प्रसङ्ग में काव्य प्रकाश में आये हुए शक्ति शब्द का देवता आदि के आराधना से पैदा हुए विलक्षण अदृष्ट अर्थ करते हैं, काव्यरचना के लिये ऐसे विलक्षण अदृष्ट से समर्थ होता है इसलिये अदृष्ट शक्ति है ऐसा विग्रह बताते हैं, प्रदीप में जो शक्ति शब्द का संस्कारविशेष अर्थ किया गया है उसकी उपेक्षा करते हैं।

और भी अदृष्ट अर्थ में भी संस्कार शब्द का प्रयोग संभव है, जैसे अनुभव से बुद्धि का संस्कार होता है वैसे अच्छे कर्म से भी, लोक व्यवहार में भी संस्कार शब्द का अदृष्ट में प्रयोग मिलेगा, जैसे कि इसका अच्छा संस्कार था कि बिना कष्ट का मरण पाया, यहाँ पुण्य संस्कार शब्द से कहा गया है। अतः प्रदीप के संस्कार शब्द का अदृष्ट में तात्पर्य नहीं है ऐसा नहीं कहा जा सकता।

यह कही गई प्रतिभा की परिभाषा न्याय दर्शन का अच्छा अनुसरण नहीं कर पाती, इसीलिये शायद पण्डितराज से नहीं अपनाई गई हो, नैयायिकों का ज्ञान और बुद्धि एक ही वस्तु है, वह अस्थिर है, स्वभाव से अथवा दूसरे कारणों की सहायता से क्रमशः नये नये विषयों का उन्मेष नहीं हो सकता, तीन ही क्षण में विनाशशील वह घट प्रकाश होता हुआ तुरत घट को छोड़ कर पट का प्रकाश नहीं हो पाता, उन्मेष नाम का उसका कोई व्यापार भी नहीं हो सकता, शब्द, बुद्धि और क्रिया का विराम होकर फिर कोई व्यापार नहीं होता ऐसी प्रसिद्धि है, एक ही विषय की नई नई विशेषता को लेकर धारावाहिक बुद्धि द्वारा किसी प्रकार समन्वय किया जाय। पहले सांख्य दर्शन के अनुसार जो पहले नया नया उन्मेष कहा गया है, वही पण्डितराज के प्रतिभा पद का अर्थ है, ऐसा निष्कर्ष मालूम पड़ता है। पण्डितों को विचार करना चाहिये।

## विलक्षण व्युत्पत्ति

लोक व्यवहार और शास्त्रों के दर्शन और विवेचन से व्युत्पत्ति होती है ऐसा काव्य प्रकाश आदि में मिलता है, यही व्युत्पत्ति क्या है ? ऐसे विचार पर लोक और शास्त्र आदि का अनुभव कहें तो यह दो क्षण तक रहने वाला है। उसके बाद अव्युत्पन्न हो जायेगा, इतना ही नहीं किन्तु दूसरे जन्म की व्युत्पत्ति का दूसरे जन्म में उपयोग

करते हैं, इसलिये व्युत्पत्ति पदार्थ स्थिर होना चाहिये, लोकशास्त्र आदि के अनुभव से होने वाला संस्कार जिसका वासना दूसरा नाम है, वही व्युत्पत्ति या निपुणता होगी, कोई लोकशास्त्र आदि के अनुभवरूप श्रमण को ही कारण कहते हैं, वहाँ श्रमण को संस्कार व्यापार द्वारा कारण समझना चाहिए, अनुभव से पैदा हुआ संस्कार कारण है अथवा संस्कार द्वारा अनुभव कारण है, इस कल्प में कोई फरक नहीं पड़ता।

## अभ्यास

काव्यप्रकाश की रीति से काव्य के विशेषज्ञों की शिक्षा से करण और योजन में अभिनिवेश के साथ प्रवृत्ति को अभ्यास कहते हैं, प्रायः ऐसा ही सभी का अभिप्राय मालूम पड़ता है, व्युत्पत्ति के निर्वचन के ऐसा कारण–भोजन का अनुभव संस्कार के द्वारा कारण अथवा करण योजना आदि के अनुभव से पैदा होने वाला संस्कार कारण है ऐसा कहा जायेगा तथा उनके फलों में फरक नहीं है, यद्यपि इस प्रकार व्युत्पत्ति और अभ्यास दोनों संस्कार रूप हो गये, तो भी लोकशास्त्र आदि का संस्कार व्युत्पत्ति और करण योजना आदि का संस्कार अभ्यास ऐसा भेद समझना चाहिये।

## अब संक्षेप से प्राचीन मतों का विवेचन

कितने आचार्य आलङ्कारिक भाषा से इन विषयों का वर्णन किये हैं, उनके पदार्थों की स्फुटता के लिए और उनके मतों में परस्पर साम्य तथा वैषम्य दिखाने के लिए व्याख्यान करना है। यद्यपि यह आलोचना के साथ भाषानुवाद की भूमिका में उद्धृत है तथा देखने लायक है तो भी कुछ विभेद बताते हुए व्याख्यान का प्रयास करता हूँ।

## उसमें परम प्राचीन दण्डी महोदय

**नैसर्गिकी च प्रतिभा श्रुतञ्च बहुनिर्मलम्।**
**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥१॥**
**न विद्यते यद्यपि पूर्ववासनागुणानुबन्धिप्रतिभानमद्भुतम्।**
**श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम् ॥२॥**

स्वाभाविक प्रतिभा, शास्त्रों का शुद्ध श्रवण और तेज प्रयास इस काव्य सम्पत्ति के कारण हैं ॥१॥ यद्यपि पूर्व जन्म की वासना गुण के सम्बन्धी प्रतिभा नहीं हैं तो भी

शास्त्रों के श्रवण से तथा करण योजना आदि के प्रयास से वाणी की उपासना करने पर कुछ कृपा करती ही है ।।२।। ऐसा कहते हैं, पहले किये गये प्रतिभा पदार्थ के विवेचन की रीति से विलक्षण अदृष्ट के सहित अन्तःकरण बुद्धि द्वितीय पद्य के पूर्वार्ध से कही गई है। इस जन्म में दृष्ट जो व्युत्पत्ति और अभ्यास उससे होने वाली प्रतिभा से भिन्न प्रतिभा नैसर्गिक है। जैसे शक्तिर्निपुणता आदि कारिका के व्याख्यान प्रसङ्ग में प्रदीप कहता है कि प्रसिद्ध से भिन्न काव्य हेतु में शक्ति शब्द का व्यवहार है, यद्यपि दूसरे जन्म के अदृष्ट के कारण इस जन्म में बिना परिश्रम में प्रकट प्रतिभा नैसर्गिक कही जाती है, उस रीति से जन्मान्तर अदृष्ट सहित बुद्धि ऐसा व्याख्यान सम्भव है, तो भी वैसे व्याख्यान से इस जन्म में प्राप्त देवगुरुप्रसाद आदि से होनेवाली काव्य सम्पत्ति नहीं संगृहीत होगी, ग्रन्थ की न्यूनता होगी इसलिए वैसा नैसर्गिक कहा गया। वैसा वर्णन करने पर दूसरे जन्म के अनुभव से होनेवाली इस जन्म की कवित्व वासना भी संगृहीत होती है यह कोई दोष नहीं बल्कि दूसरा लाभ ही है।

## दूसरा प्रकाशन २६।७।६० का

श्रुत शब्द से शास्त्र भी ले सकते हैं, काव्य प्रकाश के ऐसा लोक आदि का उपलक्षण होगा, निर्मल शब्द से अच्छा अनुभव लिया गया। उस प्रकार पहले वर्णित व्युत्पत्ति कही गई। अमन्द शब्द से अभिनिवेश सूचित होता है। उससे भी करण योजना आदि में अभिनिवेश के साथ प्रवृत्ति रूप अभ्यास कहा गया, उसका भी पर्यवसान पहले के वर्णन के ऐसा करना चाहिए। इस पर दूसरे की व्याख्या है कि प्रतिभा व्युत्पत्ति अभ्यास तीनों का समुच्चय अनुपहसनीय काव्य अथवा उत्तम काव्य का कारण है, यह पहले पद्य का अर्थ है। मध्यम और अधम काव्यों के प्रति व्युत्पत्ति और अभ्यास का समुच्चय कारण है ऐसा दूसरे पद्य का अभिप्राय है। मेरा व्याख्यान है कि काव्य सामान्य का कारण तीनों को पहले पद्य से बताया गया। दूसरे पद्य से तीनों के समुच्चय को हटाया जाता है। पहली व्युत्पत्ति और अभ्यास से होनेवाली वासना गुण के सम्बन्धी अद्भुत प्रतिभा यद्यपि नहीं है ऐसा दूसरे मतों से अर्थ है। मेरे मत में पहली जन्मान्तर का अदृष्ट अथवा जन्मान्तर के काव्यनिर्माण का संस्कार वासना गुण सम्बन्ध वाली अद्भुत प्रतिभा नहीं है, तो भी श्रुत और यत्न काव्य प्रतिभा रूप किसी अनुग्रह को

करते हैं। इस प्रकार मेरे व्याख्यान से पण्डितराज के मत में इसका पर्यवसान है। काव्यमात्र के प्रति प्रतिभा कारण है। वह प्रतिभा कहीं नैसर्गिक है, दूसरी जगह श्रुत और यत्न से पैदा होती है, प्रतिभा आदि तीनों के समुच्चय को कारणता मानने वालों के मत में प्रतिभा के रहने पर भी श्रुत और यत्न से काव्य हो जाता है, इतने ही में वाक्य का पर्यवसान हो जाता है, प्रतिभान के विशेषण व्यर्थ हो जाते हैं। मेरे मत में पूर्ववासना गुण के सम्बन्धी प्रतिभा न रहने पर भी श्रुत और यत्न से दूसरे प्रकार की प्रतिभा से काव्य होगा ऐसे वाक्यार्थ के पर्यवसान में विशेषण सार्थक होंगे। सांख्य प्रसिद्ध बुद्धि रूप प्रतिभा को काव्यमात्र का कारण मानने में वैमत्य होने पर भी काव्य रचना के उपयोगी शब्दार्थ उपस्थिति रूप प्रतिभा को काव्यमात्र का कारण मानने में किसी का वैमत्य नहीं हो सकता, शब्द और अर्थ की उपस्थिति काव्य का अव्यवहित कारण है। कोई भी कारण शब्दार्थ उपस्थिति के विना काव्य को नहीं करता, शब्दार्थ उपस्थिति न रहने पर काव्य हो ही नहीं सकता, दूसरे भी कारण शब्दार्थ उपस्थिति के द्वारा ही काव्य पैदा कर सकते हैं। अदृष्ट वासना रूप प्रतिभा वैसी उपस्थिति करे अथवा श्रुत यत्न सहित प्रतिभा वैसी उपस्थिति करे, वैसी उपस्थिति तो काव्य के पहले जरूरी है। उसके बिना काव्य नहीं हो सकता।

और भी उसके व्याख्यान में सोचे--किसी काव्य का कारण तीनों का समुच्चय और किसी का श्रुत और यत्न कारण बनाया गया, काव्य सामान्य का कोई कारण नहीं वताया गया, ग्रन्थ को न्यूनता की गई, कोई कहता है कि प्रतिभा के बिना कोई काव्य नहीं होता—काव्यों में विलक्षणता प्रतिभा की विलक्षणता से होती है, इसलिए तीनों के समुच्चय को कारण कहना चाहिए कहते हैं तो कहें किन्तु वे श्रुतेन यत्नेन च इस उत्तरार्ध के वैयर्थ्य का अनुसन्धान नहीं कर पाते। यदि सभी काव्यों का कारण प्रतिभा है तो श्रुत और यत्न क्या करेगा? उन दोनों से काव्य नहीं होता किन्तु अकाव्य होता है ऐसा कहें तो अनुग्रह का क्या स्वारस्य होगा? अकाव्य करने में क्या अनुग्रह है? अकाव्य तो श्रुत यत्न विना भी होता है। इस प्रकार दण्डी को समुच्चय कारण वादी कहना व्याख्याताओं की बुद्धि का विलास है, दण्डी के अक्षर ऐसे नहीं मालूम पड़ते, ऐसा मालूम पड़ता है। कारण शब्द में एकवचन तो आवृत्ति से प्रत्येक में सम्बन्ध के लिए है, काव्यप्रकाश में हेतु शब्द से एकवचन समुच्चित की कारणता में

तात्पर्य ग्राहक हो सकता है क्योंकि वहाँ समुच्चय का विरोधी कोई वाक्य शेष नहीं है, यहाँ तो न विद्यते इत्यादि समुच्चय का विरोधी है, कमपि अनुग्रहम् उपासिता आदि कवि के प्रयोग मेरे अभिप्राय को पुष्ट करते हैं, इति ।

## रुद्रटमत

मनसि सदा सुसमाधिनि स्फुरणमनेकधाऽभिधेयस्य ।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः ॥१॥
सहजोत्पाद्या च सा द्विधा भवति ।
उत्पाद्या च कथञ्चिद्व्युत्पत्त्या जन्यते परया ॥२॥

जिसके रहने पर सदा पूर्ण सावधान मनमें अनेक प्रकार के अर्थों की स्फूर्ति और सुश्रव कोमल पदों की प्रतिभा हो वह काव्य का कारण शक्ति है ॥१॥ वह सहजा उत्पाद्या दो प्रकार की है, दूसरी उत्पाद्या उच्ची व्युत्पत्ति से पैदा की जाती है ॥२॥ विस्फुरण और विभान्ति पद से प्रतिभा का संकेत है, वह पण्डितराज से परिष्कृत शब्दार्थ की उपस्थिति रूप है। सांख्य सरणि सिद्ध अन्तःकरण बुद्धि रूप नहीं है, शक्ति संस्कार और अदृष्ट है, जन्मान्तर के अनुभव से होने वाला संस्कार और पुण्य अदृष्ट सहज शक्ति है, इस जन्म की उत्कृष्ट व्युत्पत्ति से पैदा हुई उत्पाद्या शक्ति है, यद्यपि सहजा शब्द का स्वारस्य जन्मान्तर के अदृष्ट को लेने में ही है तो भी इस जन्म के देवगुरु प्रसादों से पैदा हुए अदृष्ट के संग्रह के लिए सामान्य रूप से अदृष्ट लिया गया, दण्डी मत के नैसर्गिक के ऐसा इस जन्म की उत्कृष्ट व्युत्पत्ति से नहीं पैदा हुई शक्ति सहजा शब्द से ली जाती है। अथवा अदृष्ट रूप ही सहजा लिया जाय, बाल कवि के काव्य में जन्मान्तर के अदृष्ट से ही व्यभिचार का वारण हो, जन्मान्तर की व्युत्पत्ति कल्पना करने में प्रमाण नहीं जैसे पण्डितराज का अभिप्राय है, पहले मत के अनुसार जन्मान्तर के संस्कार को भी सहजा पद से लेने पर संस्कार की सिद्धि के लिए बाल कवि की प्राक् जन्म वाली सुकविता की भी कल्पना करते हैं।

यहाँ यद्यपि अभ्यास की गणना नहीं दीखती तो भी व्युत्पत्ति शब्द से लोक-शास्त्र-करण-योजन की व्युत्पत्ति ले लेने से अभ्यास भी संगृहीत हो जायेगा न्यूनता

नहीं आयेगी। व्युत्पत्ति और अभ्यास दोनों का उन विषयों के संस्कार में पर्यवसान कह भी दिया गया है, इस प्रकार काव्य कारण प्रतिभा है, कहीं प्रतिभा विलक्षण अदृष्ट से जन्य है, कहीं इस जन्म की उत्कृष्ट व्युत्पत्ति के संस्कार से जन्य है, प्रायः पण्डितराज के मत में ही इसका भी पर्यवसान है।

## ॥ तीसरा प्रकाशन ९।८।६० का ॥

## वामन मत

कवित्व का बीज प्रतिभान है, कवित्व का बीज कोई संस्कार विशेष है, जिसके विना कोई काव्य न वन पाये या बना हुआ भी हास्य का पात्र हो, इतने वामन के वचन हैं। प्रतिभान का प्रतिभा का जनक, बीज का कारण अर्थ है संस्कार विशेष के साथ 'प्रतिभा द्वारा' शब्द जोड़कर अर्थ करना चाहिये। कोई संस्कार विशेष प्रतिभा के द्वारा कविता का कारण है ऐसा अर्थ है। कोई भी कारण काव्य के उपयोगी शब्द अर्थ की उपस्थितिरूप प्रतिभा के बिना काव्य रचना में समर्थ नहीं है इसलिए शक्ति या संस्कार आदि कारणों के साथ प्रतिभा के द्वारा ऐसा जोड़ना समान है। संस्कार शब्द से अदृष्ट तथा व्युत्पत्ति से होने वाला संस्कार सभी ग्राह्य है। बाल कवि की कविता में देवता प्रसाद से होने वाला अदृष्ट अथवा जन्मान्तर में हुई व्युत्पत्ति का संस्कार कारण मानना चाहिए। यह भी मत पण्डितराज की प्रक्रिया से विरुद्ध नहीं होता यह ध्यान में रखना चाहिए। हास्यायतन या हास्यपात्र शब्द से अभ्यास करते समय जो कविता का रूप होता है उसका निर्देश है। इस प्रकार काव्य का कारण प्रतिभा है ऐसा मत हुआ। कोई कोई नहीं हास्य के लायक काव्य का कारण प्रतिभा है और हास्य योग्य काव्य का कारण व्युत्पत्ति और अभ्यास है ऐसा व्याख्यान करते हैं। किन्तु यह व्याख्यान स्फुट नहीं हुआ क्योंकि कैसी कविता उपहास्य है और कैसी उपहास्य नहीं है इसका निर्दोष लक्षण सुकर नहीं हुआ व्यक्ति विशेष के सम्पर्क में एक ही कविता किसी के लिए हास्यास्पद है तथा दूसरे का मनोरञ्जक है और वैसे व्याख्यान का खण्डन पहले दण्डी मत के व्याख्यान में दिखाई गई रीति से समझना चाहिए।

## मम्मट आचार्य का मत

इसके बाद मम्मट आचार्य का मत इस प्रकार आता है, शक्ति १—लोकशास्त्र और काव्य आदि के अवलोकन से निपुणता २—काव्य के जानकार शिक्षक से उपदेश द्वारा अभ्यास ३—ये काव्य के उद्भव में कारण हैं। इसका बहुतों ने व्याख्यान किया है। उनके प्रदर्शन में बहुत विस्तार हो जायेगा, अतः कुछ ही दिखा कर समाप्त करूंगा। शक्ति संस्कार विशेष है ऐसा काव्य प्रकाश वृत्ति में कहा गया है। वह एक प्रकार का अदृष्ट है ऐसा नागेश महोदय का व्याख्यान पहले दिखाया गया है। पहले जो व्युत्पत्ति का स्वरूप वताया गया है वही यहाँ निपुणता है, पदों को बैठाना आदि पद्य बनाना अभ्यास भी पहले कहा गया ही हैं। यद्यपि किसी काव्य में शक्ति कारण है किसी में निपुणता और अभ्यास कारण है ऐसा भी इसका व्यख्यान देखा जाता है तो भी यहाँ संस्कृत में हेतु शब्द से एकवचन का प्रयोग किया गया है, तथा अधिक व्याख्या-कार तीनों को साथ साथ कारण बताने वाले हैं, और व्युत्पत्तिवाद एवं प्रकृत रस गङ्गाधर में तीनों के समुदाय को कारण मानने वाला इस मत का उल्लेख आता है। अतः मैं भी इसका तीनों को मिले हुए कारण मानने वाला लेता हूँ। उसका खण्डन तो रस गङ्गाधर मूल में ही है, काव्य के प्रति तीनों कारण हैं ऐसी ही काव्य प्रकाश की बहुत व्याख्यायें हैं, तो भी प्रतिभा के द्वारा तीनों का समुदाय काव्य का कारण है ऐसा काव्य प्रकाश का अभिप्राय मुझे पसन्द है। पण्डितराज जगन्नाथ को भी ऐसा ही काव्य प्रकाश का अभिप्राय अभिप्रेत है। और क्या—शक्ति आदि तीन काव्य रचना के अनुकूल शब्द अर्थ की उपस्थिति रूपी प्रतिभा को यदि नहीं पैदा करते तो काव्य रचना के लिए क्या करें? शक्ति विशेष संस्कार है तो काव्य रचना के उपयोगी शब्द अर्थ का स्मृति के बिना काव्य रचना में क्या करेगा? इसलिए तीनों प्रतिभा के द्वारा काव्य के प्रति कारण ऐसी व्याख्या करनी चाहिए। यह केवल मेरी या पण्डितराज की ही कल्पना नहीं है वल्कि वस्तु स्वभाव ही ऐसा है। सुधासागर की भी ऐसी ही व्याख्या है। काव्य प्रकाश के 'अनन्यपरतन्त्राम्' के व्याख्यान में 'कवि और कवि की प्रतिभा से दूसरा' ऐसे व्याख्यान करने वाले प्रतिभा को काव्य का कारण नहीं मानते ऐसा कौन कह सकता है? पण्डितराज काव्य प्रकाश को काव्य प्रतिभा

का तीनों को कारण मानने वाले मानते हैं। इसीलिए 'न तु त्रयमेव' इत्यादि ग्रन्थ से काव्य प्रतिभा के प्रति ही तीनों की कारणता का खण्डन करते हैं न कि काव्य के प्रति। वहाँ नागेश महोदय पण्डितराज का अभिप्राय भी वैसा ही दिये हैं ऐसा अभिप्राय वर्णन करने पर रसगङ्गाधर में 'जो शक्ति आदि तीन को हेतु कहने वाले और शक्ति मात्र को हेतु कहने वाले' ऐसे दो मतों के उल्लेख वाले ग्रन्थ भाग से विरोध पड़ेगा ऐसी चिन्ता नहीं करनी चाहिए क्योंकि संस्कार मात्र को कारण मानने वाले वामन के मत को हेतु कहने वाला समझने पर विरोध नहीं सम्भव है। जो विशिष्ट काव्य के प्रति तीनों कारण और अविशिष्ट काव्य का निपुणता अभ्यास दो कारण ऐसा नागेश का मत या व्याख्यान है उसका पृथक् खण्डन जरूरी नहीं है, बीती हुई परीक्षा तथा आने वाली परीक्षाओं से गतार्थ है।

जो शक्ति पदार्थ से ही प्रतिभा का व्याख्यान काव्य प्रदीप में आता है वह सब को सम्मत नहीं है। हो भी प्रतिभा शक्ति किन्तु पण्डितराज से परिष्कृत प्रतिभा वह नहीं है किन्तु नये नये सुझाव वाली प्रतिभा शक्ति कही जाय। पण्डितराज की प्रतिभा सूझ रूप है।

शक्ति आदि तीनों समुदाय की कारणता दण्डचक्र कुलाल आदि न्याय से कही जाती है। घड़ा का डंटा, चाक, कुम्हार आदि तीनों स्वतन्त्र कारण हैं। किन्तु तीनों अलग रहकर घड़े को पैदा नहीं करते, तीनों एक साथ रहकर घड़े को पैदा करते हैं, वैसे ही शक्ति निपुणता और अभ्यास तीनों मिलकर काव्य अथवा काव्य प्रतिभा के कारण हैं।

पण्डितराज का मत तृण अरणि मणि न्याय से कहा जाता है। किसी आग को घासफुस से बनाया जाता है, कहीं यज्ञ आदि में दो विशेष लकड़ियों को देर तक रगड़ कर आग किया जाता है, कहीं कहीं सूर्यकान्त मणि पर सूर्य किरणों की सहायता से किया जाता है, किसी आग के लिए तीनों का एक साथ उपयोग नहीं किया जाता, वैसे ही किसी किसी काव्य प्रतिभा के अथवा काव्य के प्रति शक्ति कारण है और किसी काव्य के प्रति व्युत्पत्ति अभ्यास कारण है। तीनों मिलकर किसी भी काव्य प्रतिभा या काव्य के कारण नहीं हैं।

## चौथा प्रकाशन १६।८ ६० का

### ॥ वाग्भट का मत ॥

उसके बाद वाग्भट कहते हैं—

प्रतिभा कारणं तस्थ व्युत्पत्तिस्तु विभूषणम् ।
भृशोत्पत्तिकृदभ्यास इत्यादि कविसंकथा ॥१॥

काव्य का कारण प्रतिभा है व्युत्पत्ति काव्य के सौन्दर्य को करती है, अभ्यास अधिक और द्रुत काव्य निर्माण को करता है। इत्यादि कवियों की वाणी है, यह शब्दार्थ हुआ। प्रतिभा और व्युत्पत्ति सुन्दर काव्य को पैदा करते हैं, अभ्यास तो अधिक काव्य रचना में उपयोगी होता हुआ काव्य सामान्य कारणों में गिनाने लायक नहीं मालूम पड़ता, ऐसा उनका अभिप्राय मालूम पड़ता है। इस प्रकार सुन्दर काव्य के प्रति प्रतिभा और व्युत्पत्ति के समुच्चय को कारण कहने वाला यह मत है, इनके मत में यह प्रतिभा काव्य रचना के उपयोगी शब्दार्थ की उपस्थिति रूप नहीं है, उसी से काव्य हो जाता व्युत्पत्ति आदि व्यर्थ हो जायेंगें, यदि कहें कि वैसी उपस्थिति ही प्रतिभा है किन्तु उसको काव्य रचना का उपयोगी होने में व्युत्पत्ति की अपेक्षा है सो ठीक नहीं, तब तो प्रतिभा में विशेषता लाने वाली व्युत्पत्ति हो गयी, प्रतिभा का कारण बनेगी, काव्य का कारण कैसे होगी ?

और भी आज तक किसी ने असुन्दर काव्य का लक्षण नहीं बनाया है कि वैसी उपस्थिति असुन्दर ही काव्य को पैदा कर सकती है सुन्दर को नहीं इसकी परीक्षा हो सके, इसलिए यहाँ नई-नई कल्पना करने वाली भीतरी इन्द्रिय रूप बुद्धि ही प्रतिमा शब्द से विवक्षित है, वह साधारण है, दूसरे शास्त्रों के भी नय-नये विषयों की उपस्थिति कराने वाली है और वह साहित्य मार्ग में भी नये-नये विषयों की उपस्थिति कराती हुई वाक्य या पद्य का कारण बनती हुई भी व्युत्पत्ति के बिना चमत्कारकारी वाक्यों का कारण नहीं हो पाती इसलिए उसकी सहकारिणी व्युत्पत्ति मानी जाती है, प्रतिभा से पैदा हुई शब्दार्थ की उपस्थिति में काव्य रचना की उपयोगिता का लाना व्युत्पत्ति के सहकार से सम्पन्न होता है ऐसा भाव है, उस प्रकार

वैसा विभूषित वाक्य ही काव्य है, विभूषा से रहित वाक्य मात्र है अथवा काव्याभास है, वैसा काव्य प्रतिभा और व्युत्पत्ति दोनों से किया जाता है, प्रतिभामात्र से नये अर्थ और शब्दयुक्त वाक्य का सम्पादन और व्युत्पत्ति से उसमें चमत्कार का आधान होता है, विभूषा चमत्कार ही है। इससे नीचे लिखे सन्देहों का निराकरण हो गया, व्युत्पत्ति से विभूषण क्या है ? चमत्कारित्व या गुण लाना ? पहला नहीं हो सकता, चमत्कार से रहित काव्य ही नहीं होगा, प्रतिभा से काव्य नहीं पैदा होगा तो व्युत्पत्ति से विभूषित क्या होगा, दूसरा पक्ष भी ठीक नहीं—प्रतिभा से निर्गुण ही काव्य होता है, व्युत्पत्ति से गुण का आधान होता है ऐसा मानने पर व्युत्पत्ति गुण ही का कारण होगी काव्य का नहीं, काव्य सामान्य के वे दोनों कारण नहीं होंगे, निर्गुण काव्य ही नहीं होता इसलिए काव्य ही के दोनों कारण होंगे ऐसा यदि कहें तो केवल प्रतिभा से काव्य नहीं बनेगा, काव्य शरीर विना बने विभूषण किसका होगा ? इत्यादि विकल्पों का समाधान हो गया, इस विचार प्रक्रिया का उपयोग दूसरे समुचित कारणतावादी के मत में भी करना चाहिए।

यह ध्यान देने लायक है कि यह प्रतिभा व्युत्पत्ति का सहाय पाकर पण्डितराज सम्मत प्रतिभा के द्वारा काव्य का कारण होती है। काव्यमात्र के प्रति प्रतिभा कारण है इस अंश से विरोध नहीं है, किन्तु उस प्रतिभा के प्रति प्रतिभा शक्ति और व्युत्पत्ति का समुच्चय कारण है इस अंश में पण्डितराज से विरोध है, उसके अनुसार पण्डितराज के मत में बालकवि की प्रतिभा के लिए जन्मान्तर की व्युत्पत्ति की कल्पना नहीं करनी पड़ती, वाग्भट के मत में जन्मान्तरीय व्युत्पत्ति की कल्पना करनी पड़ती है। पहले कहे हुए प्रतिभापद के प्रयोग विषयों को समझकर प्रतिभापद से पुण्य अदृष्ट तथा संस्कार कैसे लिया जाता है ? इसको ठीक समझना चाहिए।

आविर्भाव समय के अनुरोध से क्रमशः विवेचन में १ दण्डी २ रुद्रट ३ वामन ४ मम्मट ५ वाग्भट ६ पीयूषवर्ष ७ पण्डितराज जगन्नाथ ८ रसगङ्गाधर टिप्पणी विधाता स्वर्गीय महामहोपाध्याय पं० श्री गङ्गाधर शास्त्री जी का मत आता है, तो भी वाग्भट मत के सदृश होने से अधिक न लिखना पड़े इस कारण यहाँ आठवें मत को उठाता हूँ—विशिष्ट काव्य के प्रति प्रतिभा व्युत्पत्ति अभ्यास तीनों का

समुदाय कारण है, लोकोत्तर वर्णन की निपुणता से युक्त कवि का कर्म विशिष्ट काव्य हैं, केवल प्रतिभा से शब्दार्थ की योजना सम्भव होने पर भी निपुणता रूप व्युत्पत्ति के विना शब्द और अर्थों में काव्यता को लाने वाली विलक्षणता असम्भव है, इसलिए वैलक्षण्य लाने वाली निपुणता आवश्यक है, उसी प्रकार शब्दार्थ में लोकोत्तरता का सम्पादक अभ्यास आवश्यक है, इसलिए व्युत्पत्ति और अभ्यास को प्रतिभा का सहकारी माना जाता है, दूसरे प्रकार से उपपादन करने पर शक्ति दो प्रकार की है, १. उत्पादिका २. व्युत्पादिका, पहली प्रतिभा उत्पादिका हैं, दूसरी वैलक्षण्य और अलौकिक के सम्पादक निपुणता और अभ्यास व्युत्पादिका शक्ति है ऐसा उसका सारांश मालूम पड़ता है। वाग्भट मत में अभ्यास को अधिक उत्पाद का कारण माना गया है, इस मत में लोकोत्तरता का सम्पादक कहा गया, इसलिए इसका सामान्य कार्यकारणभाव में प्रवेश है इतना विशेष है। लेकिन वैलक्षण्य और लोकोत्तरता में कितना कैसा भेद है ? यह स्फुट नहीं मालूम पड़ता, प्रतिपादन शैली में भेद होने पर भी प्रायः वाग्भट के ऐसा ही मालूम पड़ता है।

स्वर्गीय पण्डित श्री पुरुषोत्तम शर्मा चतुर्वेदी भाषानुवाद की टिप्पणी में इसकी इस प्रकार आलोचना करते हैं—जो आपके मत में विशिष्ट और काव्य प्रकाश के मत में अनुपहसनीय काव्य है वही काव्य सामान्य है, वह काव्य विशेष नहीं हैं, केवल छन्द और लय आदि की योजना को आज तक किसी ने काव्य नहीं माना है, पहली शक्ति प्रतिभा यदि ऐसे काव्य को नहीं पैदा करती है तो वह काव्य की उत्पादिका नाम के योग्य नहीं है। यदि विशिष्ठ काव्य को पैदा करती है तो वही काव्य सामान्य का कारण है, निपुणता और अभ्यास तो उस प्रतिभा शक्ति के विकास के लिए हैं, ऐसा उनका संक्षेप से सार मालूम पड़ता है।

उस पर यह कहना है—शास्त्री जी के लेख में पण्डितराज की प्रतिभा नहीं दी गई है, काव्य प्रकाश में जो शक्ति शब्द से लिया गया है उसी का यहाँ प्रतिभा शब्द से उल्लेख है, पण्डितराज की प्रतिभा तो सभी का मान्य है, उसके बिना काव्य हो ही नहीं सकता, तीनों के समुच्चय कारणतावादी के मत में भी तीनों का समुच्चय पण्डितराज की प्रतिभा के द्वारा ही काव्य का कारण होता है। जैसे दूसरे कारणों

के सहकार के विना घड़े को नहीं पैदा करता हुआ एवं दूसरे कारणों के सहकार से घड़े को पैदा करता हुआ कुलाल घड़े का कारण है, वैसे ही व्युत्पत्ति अभ्यास के सहकार के बिना काव्य को नहीं पैदा करने वाली प्रतिभा उन दोनों के सहकार से पैदा करती है इसलिए प्रतिभा काव्य का कारण हो जायेगी। प्रतिभा शक्ति काव्य मार्ग में वाग्भट मत के ऐसा ही संकुचित है इस प्रकार समुच्चित की कारणता भी आती है और दूसरे उपपादन और विवेचन पहले मत के ऐसा ही समझना चाहिए। उस प्रकार समुदित कारणतावादी के मत में प्रतिभा का संकोच अप्रामाणिक है, अदृष्ट आदि से सहकृत अन्तःकरण बुद्धि रूपी प्रतिभा का इन मतों में ग्रहण है यह लिखा गया है। अदृष्ट काव्य के इसी अंश को पूरा कर सकता है दूसरे अंशों को नहीं यह कल्पना प्रमाण शून्य है, इन मतों में वालकवि के लिए जन्मान्तर के व्युत्पत्ति अभ्यास की कल्पना करनी पड़ेगी यह गौरव परम्परा ही दोष है। पण्डितराज से प्रतिपादित प्रतिभा किसी के खण्डन के योग्य नहीं है यह तो ध्यान रहना चाहिये।

## पीयूषवर्षमत

इसके बाद पीयूषवर्ष की वर्षा है—

प्रतिभैव श्रुताभ्याससहिता कवितां प्रति।
हेतुर्मृदम्बुसम्बंधबीजोत्पत्तिर्लतामिव ॥ १ ॥

लोकशास्त्रों का श्रवण और करण योजना आदि के अभ्यास के साथ प्रतिभा ही काव्य का कारण है, जैसे मिट्टी और जल के संयोग के साथ बीज लता का कारण है ॥१॥ इसमें एव पद प्रतिभा की प्रधानता तथा विलक्षणता के द्योतन के लिए है, व्युत्पत्ति और अभ्यास की व्यावृत्ति के लिए नहीं, अन्यथा पण्डितराज मत आ पड़ेगा, मिट्टी और पानी का हटाना भी संगत नहीं होगा, बीज, मिट्टी, जल के सहकार के बिना लता का कारण नहीं होता, दृष्टान्त से प्रधानता तथा बिलक्षणता इस प्रकार आता है—यव पेड़ का यव बीज, गेहूँ पेड़ का गेहूँ बीज कारण है, इस प्रकार बीज असाधारण कारण है, पानी और मिट्टी तो सभी पेड़ों के साधारण कारण हैं, उसी प्रकार प्रतिभा काव्य का असाधारण कारण है, उससे प्रधानता आती है, दण्डी मत के अनु-

सार श्रुत शब्द से व्युत्पत्ति लेना है, उत्पत्ति शब्द का कोई स्वारस्य नहीं सूझता, तीनों के समुदाय को कारण कहने वाला यह मत है, और दूसरे उपेक्षित उपपादन वाग्भट के मत के ऐसा समझ लेना चाहिये। पहले कहे गये गौरव परम्परा दोष की भी अनुवृत्ति कर लें, वास्तव में एव पद की वैसी सार्थकता नहीं मालूम पड़ती, क्योंकि काव्यमात्र के प्रयोजक असाधारण ही व्युत्पत्ति और अभ्यास का यहाँ ग्रहण है।

## पांचवां प्रकाशन २३।८।६० का
## पण्डितराज जगन्नाथ मत

यह मत रसगङ्गाधर में स्फुट भाषा से वर्णित है, उसका सार और कहीं कुछ अपेक्षित व्याख्या को दिखाकर इस लेख को समाप्त करता हूँ, काव्यमात्र के प्रति प्रतिभा कारण है, काव्य रचना के उपयोगी शब्दार्थ की उपस्थिति उसका लक्षण आदि पहले कहा गया है, प्रतिभात्व अखण्ड उपाधि है, कारणता का अवच्छेदक होने से सिद्ध होने वाला तथा जातिके समान स्वभाव वाला धर्मविशेष अखण्ड उपाधि कहा जाता है, जातित्व के बाधक संकर आदि प्रसिद्ध दोष के रहने पर अखण्ड उपाधि माना जाता है। प्रतिभा के लक्षण में दिया गया काव्यघटनानुकूलत्व परिचायक मात्र है उसका कारणतावच्छेदक कुक्षि में प्रवेश नहीं है, काव्य से होने वाले चमत्कार में परम्परा से जो प्रयोजक होता है उसको काव्यघटनानुकूल कहते हैं, काव्य के कारणता-वच्छेदक में कार्यतावच्छेदक काव्यत्व का तथा अनेक धर्मों के प्रवेश से संभावित दोष ऐसे व्याख्यान से स्थान नहीं पाते हैं। सभी जगह कार्यकारणभावज्ञान में सभी कारणों में रहने वाला और कारण से भिन्न में वही रहने वाला अपेक्षित होता है, वही धर्म कारणतावच्छेदक होता है, इसी प्रकार सभी कार्यों में रहने वाला और कार्य से भिन्न में नहीं रहने वाला धर्म कार्यतावच्छेदक अपेक्षित होता है। वैसा धर्म कहीं जाति रूप कहीं कहीं अखण्ड उपाधि स्वरूप मिलता है, और यह सभी के अनुभव से सिद्ध वैज्ञानिक है, किसी शास्त्र विशेष की कल्पना से प्रचलित नहीं है, जैसे कि दण्ड से घटनिर्माण को देखता हुआ चतुरजीव सकलदण्ड में घटकारणता का ज्ञान पाता है एक उसी दण्डव्यक्ति में नहीं, इसीलिये उस दण्डे के टूटने पर घट बनाने के लिए

वृक्ष से दूसरा दण्डा काटना चाहता है। दण्ड से भिन्न में भी कारणता का ज्ञान नहीं करता, क्योंकि दण्डा टूटने पर दण्डे के काम के लिए कोयला आदि दूसरी वस्तुओं को नहीं लाता, वह एक ऐसी वस्तु को देखता है जो सभी दण्ड में हैं और दण्डे से भिन्न में नहीं है, वही वस्तु दण्डत्व जाति है। इसी प्रकार दण्ड की कार्यता सफल घट में समझता है न कि उसी घट व्यक्ति में, इसी लिए दूसरा घट बनाने में दण्ड का उपयोग करता है, और घट से भिन्न में दण्ड की कार्यता नहीं समझता, अतः पट पैदा करने के लिए दण्ड का उपयोग नहीं करता, इस रीति से सफल घट में रहने वाला और घट से भिन्न में नहीं रहने वाला किसी को देखता है, वही घटत्व जाति कार्यता का अवच्छेदक है।

मुक्तावली आदि में जैसे जातिवाधक का व्याख्यान है उससे विलक्षण कुछ दूसरा व्याख्यान वैयाकरणसिद्धान्तलघुमञ्जूषा में है, उस रीति से आकाशत्व, भूतत्व, मूर्तत्व आदि भी जाति हैं, उसी प्रकार अखण्ड उपाधि भी जाति हो जाते हैं, सखण्ड ही को उपाधि मानने की आवश्यकता है, उसी वासना से मर्म प्रकाश अखण्डम् ऐसे पाठ को नहीं पसन्द करता है, वह मतान्तर है, उसकी आलोचना से लेख वृद्धि को रोकता हूं।

वैसी काव्य को पैदा करने वाली प्रतिभा का कहीं कहीं देवता गुरुजन महर्षि आदि का प्रसाद, वरदान और तपस्या आदि कारण होते हैं, और कहीं व्युत्पत्ति और अभ्यास आदि कारण वनते हैं, पैदा होकर शास्त्र आदि का परिशीलन और काव्य करने का अभ्यास करते हुए तरुण हो गया, कविता में प्रवेश नहीं पाया, वाद में देवता की आराधना से या महात्मा के आशीर्वाद से अथवा किसी तपस्या से कविता में सिद्धि मिल जाती है, वहाँ व्युत्पत्ति और अभ्यास कारण नहीं रहने से देवता की आराधना आदि ही कारण होते हैं, जहाँ व्युत्पत्ति और अभ्यास के वाद ही काव्य प्रतिभा हो, देवाराधन आदि नहीं देखे जाँय, वहां व्युत्पत्ति और अभ्यास ही कारण हैं, वहाँ भी जन्मान्तर के देवाराधन की कल्पना करें सो ठीक नहीं है, सभी काव्य प्रतिभा के प्रति देवगुरुजन प्रसाद आदि की कारणता ही नहीं सिद्ध है, जहाँ व्युत्पत्ति, अभ्यास के बाद प्रतिभा देखी गई तथा देव आदि का प्रसाद आदि नहीं देखा गया,

वहाँ प्रतिभा के प्रति देव प्रसाद आदि का व्यभिचार ज्ञान होने से प्रतिभामात्र के प्रति देव प्रसाद आदि की कारणता ही नहीं निश्चित होगी।

जहाँ बलवान् प्रमाण से कार्यकारण भाव का ज्ञान होता है, वहां कार्य को देखकर और ऐहिक कारण को न पाकर जन्मान्तर के कारण का भी अनुमान होता है, जैसे दुःख और सुख का जन्मान्तर के शुभ और अशुभ कर्मों से धर्म और अधर्म का अनुमान होता है, क्योंकि नवजात शिशु का ऐहिक कर्म नहीं देखा जाता तथा सुख या दुःख देखा जाता है, और जैसे याग और स्वर्ग का कार्य कारणभाव श्रुति सिद्ध है, क्रियात्मक याग का चिर विनाश के बाद कालान्तर में स्वर्ग होता है, वहाँ स्वर्ग के अव्यवहित पूर्व में याग को नहीं रहने से व्यभिचार होगा, इस लिए याग से होने वाले एक अपूर्व व्यापार की कल्पना की जाती है जो स्वर्गरूप फल तक रहता है, अतः जहाँ दृष्ट कारणों से निर्वाह संभव है वहाँ अदृष्ट कारण की कल्पना सर्वथा अनुचित है। प्रतिभा मात्र के प्रति व्युत्पत्ति और अभ्यास कारण नहीं हो सकता, देव प्रसाद आदि से प्राप्त प्रज्ञा वाले बालकवि के प्रतिभा में व्यभिचार है, वहाँ जन्मान्तर के व्युत्पत्ति अभ्यास की कल्पना से व्यभिचार का कारण नहीं हो सकता, बल्कि व्यभिचार ज्ञान से कार्यकारणभाव ही का ज्ञान न होगा जिससे जन्मान्तर का अनुमान हो सके। इसलिये जन्मान्तर के व्युत्पत्ति और अभ्यास की कल्पना नहीं हो सकती, इस रीति से अनेक कार्यतावच्छेदक होने से प्रतिभाओं में अनेक प्रतिभात्व माना जायेगा, अदृष्ट से होने वाली प्रतिभा में दूसरा प्रतिभात्व है और व्युत्पत्ति अभ्यास से होने वाली प्रतिभा में भिन्न ही प्रतिभात्व है, उसी प्रकार प्रतिभा के कार्य काव्य अनेक प्रकार के हैं, उन काव्यों की प्रतिभा कारण भी अनेक प्रकार के होंगे, इसलिए भी अनेक प्रतिभात्व काव्य के कारणतावच्छेदक होंगे, जैसे तृण अरणिमन्थन और मणि से तीन प्रकार के आग होते हैं वहाँ वह्नित्व कार्यतावच्छेदक नहीं होता तार्णवह्नित्व आदि होता है, उसी रीति से दृष्ट और अदृष्ट कारणों से होने वाली प्रतिभा में भिन्न भिन्न प्रतिभात्व हैं। और लोग जो अनेक कारण और अनेक कार्य स्थल में सबसे अव्यवहित जोड़कर व्यभिचार का कारण करते हैं, जैसे अपने से अव्यवहित उत्तर में होने वाली प्रतिभा के प्रति देव प्रसाद आदि शक्ति कारण है इत्यादि वह रीति यहाँ नहीं अपनाई गई क्योंकि पक्षता दीधिति में वैसे कार्य कारणभाव की निन्दा है, जैसे और जगह कार्य मात्र के प्रति प्रतिबन्धक का अभाव कारण है वैसे

ही यहाँ भी काव्य के प्रति तथा काव्य प्रतिभा के प्रति प्रतिबन्धक के अभाव को कारण समझना चाहिए। इस रीति से काव्य के जनक थल वाले में वे वे प्रतिभाएं समवाय सम्बन्ध से रहती हैं, ऐसा सम्बन्ध बनाना चाहिए, काव्य कार्य का सम्बन्ध स्वजनक कृतिमत्त्व समझना चाहिए। रसगङ्गाधर चन्द्रिका टीका में अशुद्ध सम्बन्ध बनाया गया है उससे सावधान रहें, यहाँ सूचना मात्र है, विस्तार नहीं करना है। और इस रीति से काव्य प्रतिभा के प्रति अदृष्ट शक्ति और व्युत्पत्ति अभ्यास की पृथक् कारणता की व्यवस्था की गई, उसके द्वारा समुदित कारणतावादी काव्य प्रकाश आदि के मतों का खण्डन किया गया।

उस पर मर्म प्रकाश—मूल में एक शब्द दिया है, उससे सूचित होता है कि कहीं तीनों की भी कारणता है। विलक्षण तीनों से जन्य प्रतिभा भी विलक्षण होगी, उससे पैदा हुआ कार्य काव्य और विशेष विलक्षण होगा, इससे दोष नहीं है, ऐसा कहता है, वह कहना दूसरे ग्रन्थ की भावना से है, अनुपहसनीय काव्य के प्रति तीनों की कारणता में अभिनिवेश है, पण्डितराज का वैसा मत नहीं हैं, उसके लेखों में समुदित कारणता का स्पष्ट खण्डन है, दृष्ट कारण न रहने पर ही अदृष्ट की कल्पना की जाती है, व्युत्पत्ति और अभ्यास जहाँ दृष्ट कारण हैं वहाँ उन्हीं दोनों से काव्य प्रतिभा का उत्पाद हो जाएगा अदृष्ट शक्ति की क्यों कल्पना करें, अन्यथा सभी जगह अदृष्ट की कल्पना का प्रसार होने पर समुच्चित कारणतावाद की ही प्रसक्ति होगी, विलक्षण व्युत्पत्ति और अभ्यासों का सामर्थ्य किसी से तौला नहीं गया है कि उन दोनों से उपहसनीय काव्य या काव्य प्रतिभा ही पैदा होते हैं यह निश्चय किया जा सके।

इस प्रकार समुदित कारणतावादी के मत में बाल कवि की काव्य प्रतिभा के लिए जन्मान्तर के व्युत्पत्ति और अभ्यास की कल्पना का गौरव है ही, और समुदित कारणतावादी के मत में व्युत्पत्ति और अभ्यास अदृष्ट सहकार के बिना काव्य प्रतिभा को नहीं पैदा करते, अदृष्ट का परिचय नहीं रहता, सभी जगह व्युत्पत्ति और अभ्यास की विफलता जागृत होगी, काव्य के अनुरागियों की व्युत्पत्ति और अभ्यास में प्रवृत्ति नहीं होगी, यह भी अनर्थ है, जो कार्यमात्र के प्रति अदृष्ट कारण है उससे विलक्षण काव्य प्रतिभा का प्रयोजक दूसरा ही यहाँ अदृष्ट है, इस लिए विलक्षण व्युत्पत्ति और अभ्यास से भी काव्य प्रतिभा अवश्य माननी चाहिए। इति।

संस्कृत रत्नाकरः काशी

१६ वर्षे ५ अङ्कः शरत्पूर्णिमा २००८

# अथ 'रसख्यातिः'

सरसहृदयवशभोगं रोगं हरन्तमन्यविषयजातम् ।
वन्दे कविवरहृद्यं नवतां दधतं रसं कञ्चित् ॥

श्रीबालकृष्णगुरुपादजलावपूतः
केदारनाथ उदितार्थविचारनाथः ।
ख्यातिं रसस्य तनुते नयवित्सुगम्यां
नानापथां सकलदर्शनरागरम्याम् ॥

काव्यस्य दृश्यश्रव्ययोरुभयोरपि विशेषयोः सातिशयप्रवृत्त्या सहृदयतावशोन्मिषितकाव्यार्थभावनाद्वारकः कश्चिदानन्दानुभवः सिध्यन् सहृदयप्रत्यक्षश्च न किञ्चित्साधनान्तरमपेक्षते । परम्—

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥
भावानभिनयसम्बद्धान् स्थायिभावांस्तथा बुधाः ।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥

इति नाट्यशास्त्रोक्तसम्प्रदायमनुसृत्य आस्वादपदवीं दधानं रसपदाभिधेयं कमपि पदार्थमभ्युपगच्छन्ति आलङ्कारिकनिबन्धाः । तादृशे रसपदार्थस्वरूपे स्थायिभावस्य रसत्वं व्याचक्षाणानामपि आचार्याणां तत्तत्कल्पनाप्रौढिपरम्परया विप्रतिपत्तिः परिदृश्यते निबन्धग्रन्थेषु ।

तत्रालङ्कारिकमूर्धन्यश्रीमदभिनवगुप्तमतस्यापि व्याख्यानभेदाद् द्वौ पन्थानौ प्रचलतः। मार्गद्वये न स्थायिभावो रसोऽपि तु तस्यास्वाद इति समानम्।

(१) परं स्थायिभावस्य भग्नावरणेन सच्चिदानन्देन गोचरीक्रियमाणत्वमास्वाद इति प्रथमः।

(२) अन्ये तु स्थाय्युपहितात्मानन्दविषयिणी अन्तःकरणवृत्तिरास्वाद इति वदन्ति।

(३) पण्डितराजजगन्नाथस्तु—रसो वै सः, रसं ह्ययं लब्ध्वा आनन्दी भवतीत्यादितैत्तिरीयश्रुत्यक्षरस्वारस्येन स्थाय्युपहितसच्चिदानन्दं स्थायिन आस्वादं रसं व्यवस्थापयति।

त्रयाणामेषां मतानां वासनारूपेण स्थितानां शकुन्तलादिविभावविषयकाणां सामाजिकानामेव स्थायिभावानामास्वादः समानः।

(४) साङ्ख्यसरण्या व्याख्यातृत्वेन प्रसिद्धस्य भट्टनायकस्य मते सामाजिकरत्यादेरास्वादस्य साम्येऽपि स्थाय्युपहितस्य सत्त्वगुणपरिणामात्मकसुखस्य साक्षात्काररूपो भोग आस्वादरूपतामादधानो रसः। एतन्मतेऽपि आस्वादो रस इति पर्यवस्यति। एते चत्वारोऽपि रतेरास्वादका इति स्थितम्।

अग्रिमेषु स्थायिभावस्यैव रसनिष्पत्तिं वर्णयत्स्वपि चतुर्षु मतेषु अनुकरणीयेषु दुष्यन्तादिषु रत्यादयः स्थायिभावाः, रसास्वादस्तु सामाजिकेष्विति विभिन्नैव प्रक्रिया। दुष्यन्तनिष्ठरत्यादेरेव सामाजिकैरास्वाद इति भावः।

(५) भट्टलोल्लटस्य मते दुष्यन्तत्वशकुन्तलाविषयकरत्यंशेऽलौकिकेन नटरूपविशेष्यांशे लौकिकेन सन्निकर्षेण जायमानो विशिष्टो नटविशेष्यकः 'दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान्' इत्याकारकसाक्षात्काररूपः सामाजिकनिष्ठो दुष्यन्तादिवृत्तिरत्यादेरास्वादः। अत्र नये दुष्यन्तादिनिष्ठो रत्यादिरेव रसः, पूर्वोक्त आस्वादस्तु सामाजिकानाम्। आनन्दानुभवविषये न किञ्चित्प्रोच्यते।

(६) श्रीशङ्कुकमते पञ्चममतसाक्षात्कारसमानाकारिकया नटपक्षिकया दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान् इत्यनुमित्या गोचरीक्रियमाणो दुष्यन्तादिवृत्तिः स्थायिभावो रसः। पूर्वमते साक्षात्कारः आस्वादः, रसरसास्वादौ विभिन्नौ अत्रमतेऽनुमितिरास्वादोऽनुमितिविषयश्च रसः। रसो दुष्यन्त्यादिनिष्ठ आस्वादश्च सामाजिकानाम् केवलमास्वादस्य साक्षात्कारत्वानुमितित्वाभ्यां विशेषः। आनन्दश्च विषयसौन्दर्यवशादिति मतम्।

(७) नव्या अद्वैतवेदान्तप्रक्रियावासितान्तःकरणाः सर्वत्रैवानिर्वचनीयोत्पत्तिं भ्रमस्थले पश्यन्तो दुष्यन्तादिवृत्तिरत्यादिना सामाजिकान्तरात्मनि निष्पन्नस्य रसस्य रसास्वादस्य च वर्णनमभिनिविशमानाः प्रथमं दुष्यन्तत्वादिकं स्थायिभावाश्रयवृत्ति धर्ममनिर्वचनीयं सामाजिकात्मनि समुत्पाद्य दुष्यन्तत्वावच्छिन्ने तस्मिन् शुक्तिशकले रजतखण्डमिव दुष्यन्तादिनिष्ठशकुन्तलाविषयकरत्यादि तादृशं समुत्पाद्य च अन्तःकरणवृत्तिसुखादिमिव भग्नावरणचिदात्मना संसृष्टमास्वाद्यमिति वर्णयन्ति। अत्र दर्शने दुष्यन्तादिनिष्ठो रत्यादिः स्थायिभावः, सामाजिकान्तरङ्गे जायमानोऽनिर्वचनीयो नूतनः शकुन्तलालम्बनो रसः आस्वादश्च तादृशस्य साक्षात्कारः, आनन्दश्च साक्षात्कारे आत्मानन्दोदयादेव।

(८) नव्यैकदेशिनोऽक्षपादपथपक्षपातिनो व्यञ्जनावृत्तिमनिर्वचनीयख्यातिञ्चासहमानाः 'यत एषा काव्यार्थभावनाविशेषादेतादृशस्यानिर्वचनीयस्य ख्यातिरागृह्यते स एवालौकिकमहिमशाली भावनाविशेषो विषयासद्भावेऽपि दुष्यन्तादिनिष्ठानेवातीतान् रत्यादीन् सामाजिकान् न साक्षात्कारयेदिति केन तोलितोऽस्य महिमा' इति प्रौढिं पूर्वमतमपेक्ष्य ख्यापयन्तः काव्यार्थभावनावशादेव सामाजिकहृदि समुद्यन् 'अहं शकुन्तलाविषयकरतिमान् दुष्यन्तः' इत्याकारकः साक्षात्कार एव रस इति व्यवस्थापयन्ति। साक्षात्कारश्च शकुन्तला-दुष्यन्तरत्याद्यंशेऽलौकिक आत्मांशे च लौकिकः। अवाच्या अलक्ष्या च रतिर्व्यञ्जनावृत्तेरभावादनुमीयमाना ज्ञानलक्षणया सन्निकृष्यते। अनुकार्यदुष्यन्तादिनिष्ठरत्यादेः सामाजिकनिष्ठः साक्षात्कार एव पूर्वोक्त आस्वादो रसो न तु कश्चिद् रसस्य आस्वादः। प्रयोगस्तु भाक्तः। आह्लादश्च काव्यार्थभावनोत्थात् साक्षात्कारस्य वैलक्षण्यादेवेति निष्कृष्यते। इति।

अलौकिकेऽस्मिन् विषये कल्पनामात्रशरीराणां मोक्षपदवीमिव रसास्वादानन्दानुभूतिमारोहन्तीनां सोपानपरम्परामिवाचरन्तीनां प्रक्रियाणां का समीचीना का च नेति वस्तुतो वक्तुं न पार्यते सर्वेषां तैर्थिकानां स्वस्वमार्गे प्रतिष्ठितत्वात्।

अत एव प्राथमिकेषु चतुर्षु मतेषु सामाजिकरत्यादेरेवास्वादात्सहृदयानामेव रसास्वादाधिकारः सिध्यति, रसास्वादानुकूलवासनाविशेषवतामेव सहृदयत्वात् अनुकार्यदुष्यन्तादिनिष्ठरत्यादेरास्वादनयेतु सामाजिकवासनानामुपयोगाभावेन जरन्मीमांसकादीनामपि रसास्वादप्रसक्त्या सिद्धान्तव्याकोपभयात्पञ्चमादीनि मतानि हेयानीति केषाञ्चिद् व्याख्यानं मुधैव, सर्वैरपि देशिकैः

स्वस्वप्रक्रियायामन्यनिष्ठरत्यादेरास्वादस्य सहृदयतोल्लसितभावनाकार्यत्वेनैव वर्णनात्। तथा च सहृदयतां विना भावनोल्लासाभावेन रसास्वादस्यैव खपुष्पायमाणत्वात्कुतो निर्वासनानां रसास्वादप्रसक्तिः।

## वस्तुसौन्दर्यवशादानन्दः

एवमेवं प्रत्यक्षज्ञानस्यैवाह्लादहेतुतया सप्तानामपि मतानां सम्यक्त्वेऽपि षष्ठं श्रीशङ्कुकमतं न समञ्चतीति वचोऽनर्हम्, तेषां मते वस्तुसौन्दर्यायत्तस्याह्लास्यानुभवे वस्तुज्ञानगतम्परोक्षत्वं वा किं कुर्वीत ? किं पुत्रादीनामात्मीयानामुन्नतिः साक्षात्क्रियमाणेव कुण्डलीस्थग्रहवशादनुमीयमाना नाह्लादयति ? व्ययबोधकपत्रेण समृद्धिपूर्णतयाऽनुमीयमानः कोषः किं राज्ञो नानन्दाय ? अवनतिश्चात्मीयानामनुमितेव साक्षात्क्रियमाणापि क्लेशयत्येव, तस्मात्सुष्ठूक्तं श्रीशङ्कुना वस्तुसौन्दर्यवशादेवाह्लाद इति। यत्र कुत्रचिदनुमितिवशान्नाह्लादोऽनुभूयते विषयसौन्दर्यसत्त्वेऽपि तत्रानुमितौ अप्रामाण्यज्ञानास्कन्दितत्वस्य प्रभावपातो बोध्यः।

विषयसौन्दर्यवशादेवाह्लादानुभवं विविच्य विभावादिषु यस्य कस्यापि सौन्दर्यवशादानन्दानुभवमनुसंदधाना 'विभावादिषु य एव चमत्कारी स एव रसः' इति मतान्तरमवातारयत्पण्डितराजः।

यद्यपि—अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥

इत्यादिवेदान्तिडिण्डिमो वस्तूनां सच्चिदानन्दे ब्रह्मणि अध्यस्तत्वाद् विषयेष्वप्यानन्दो ब्रह्मण एवेति घोषयति, तेन च वेदान्तप्रक्रियावशात्सच्चिदानन्दसम्पर्कस्वरूप आस्वाद एवाह्लादयेत् सामाजिकान् नान्यविध आस्वाद इत्यायाति, तथापि विवेचनपरीक्षायां विषयसौन्दर्यमेव तिष्ठत्याह्लादमूलकतया अन्याश्च प्रक्रिया विशीर्णा भवन्ति।

तथाहि—प्रथममुक्तडिण्डिमस्यैव स्वरूपं विविच्यताम्। ब्रह्मण अध्यासवशादेव वस्तूनां प्रियत्वं स्वीक्रियेत तदाऽविशेषाज्जगदिदं प्रियमेव स्यान्न किञ्चिदप्रियम्। किन्तु वस्तुस्वभाववशादेवात्मानन्दाध्यासेन किञ्चित् प्रियम् अन्यच्चाप्रियमिति प्रक्रिया। अत एव स्वभाववशादेव आनन्दांशस्यारोपाभावेन दुःखं सर्वदाऽप्रियमेवावतिष्ठते। सांख्यमते सत्त्वरजस्तमसां परिणामाः पदार्था इति वस्तुनः स्वभावादेव सुखदुःखे संसिध्यत एव।

किञ्च आद्येषु त्रिषु मतेषु साक्षात्कारे आत्मानन्दोदयो यदि तर्हि काव्यातिरिक्तस्थले घटादिप्रत्यक्षे आत्मानन्दोदयोऽस्ति न वा आद्ये तत्राप्यानन्दोदये साधारणे जाते किं कृतं काव्येन ? यदि तत्र प्रकाशाय चिदंशस्यैवाध्यासो नानन्दांशस्य, काव्यस्थले तु आनन्दस्यापीति ब्रूषे, किंकृतोऽयं विशेषः ? इत्यपि ब्रूहि; काव्यकृत इति चेत् किं करोति काव्यमित्यप्यालोच्यताम्। वयन्तु ब्रूमः काव्यमलौकिकं नूतनं शब्दार्थस्वरूपमुपनयति, सहृदयोल्लसिता भावना तु तक्षेव क्लेशमोहप्रयोजकांशं तक्षन्ती सुखमात्रजनकांशं सूक्ष्मतरं सामाजिकान्तरङ्गे स्थापयति, यद्वशात् काव्यसमर्पितः सहृदय-हृदयभावितः शोको जुगुप्सा वा आह्लादायैव न क्लेशाय। तस्मात्काव्यतदर्थभावनयोर्विलक्षणवस्तुसमर्पणेनोपयोगः। वस्तुसौन्दर्याच्चानन्दानुभव इति सिध्यति।

सप्तमे नव्यमतेऽपि अन्तर्निहितो वस्तुसौन्दर्यरूपः सारः। साक्षात्कार आत्मानन्दोदयवशादाह्लाद इति तन्मतम्, तत्तु आदिममतत्रयवद्विविधविकल्पजालबद्धं सत्पूर्ववदेव न प्ररोहेत्, यदि साक्षात्कारबलेनैवानन्दोदयस्तर्हि दुष्यन्तादिनिष्ठरत्यादेरेव भट्टलोल्लटवत्साक्षात्कारेण कथं न तुष्यन्ति नव्याः ? कथञ्च नूतनस्यानिर्वचनीयस्योत्पादने प्रयतन्ते ?। न चानिर्वचनीयस्यैव साक्षात्कारो भवत्याह्लादको न तु व्यावहारिकस्येति हृशैव तथा यतन्त इति वाच्यम् व्यभिचरितत्वात्। व्यवहारिकेणापि सुन्दरवस्तुना आह्लादस्योदयात्, अनिर्वचनीयेनापि महर्घेण शुक्तिशकले रजतखण्डेन तुष्यतु नाम परं स्वीये रजतखण्डे जायमानेन शुक्तिशकलेन कीदृग् हृष्यतीति स एव जानाति। इदन्तु हृद्यं विभाति—लौकिकसामग्रीसमर्पितो दुष्यन्तनिष्ठरत्यादिर्लौकिको दुःखमोहप्रयोजकांशेनापि घटितो न समेभ्यः सहृदयेभ्यः सुखप्रदः। किन्तु सुखांशमात्रेण नूतनतया निष्पन्न एव। अन्यानिर्वचनीयापेक्षया विलक्षणं सौन्दर्यन्तु काव्यभावनावशादेवेति सर्वत्र समानम्।

इत्थमेव चतुर्थे भट्टनायकमते वस्तुसौन्दर्यमनपेक्ष्य न किञ्चिदानन्दानुभवहेतुतया पर्यवस्यति। तथाहि साङ्ख्यप्रक्रियायां तत्तत्सुखदुःखाकारेण परिणताया बुद्धेः पुष्करपलाशवन्निर्लेपेऽसङ्गे पुरुषे ऐक्याध्यासरूपभोगो दुःखादेरपि पौरुषेयः समानो न किञ्चिद् रसास्वादे वैलक्षण्यं सम्पादयति, रजस्तमसो अभिभूयोद्रिक्तस्य सत्त्वस्य सुखाकारपरिणामोऽपि सर्वत्र लौकिकसुखसाक्षात्कारे समानः सन् न भेदमावहति, अपि तु काव्यसमर्पितस्य वस्तुनः सौन्दर्यस्वभाव एव रजस्तमसोरभिभवे सत्त्वोद्रेके च प्रभवतीति किमु वक्तव्यम्।

एवं सति अष्टमे नव्यैकदेशिमते आनन्दानुभवहेतुतया वर्णितो दुष्यन्तादिनिष्ठरत्यादेर्मानससाक्षात्कारप्रभावो विषयसौन्दर्यबलादायात इति पर्यवसेयम्।

भट्टलोल्लटस्य पञ्चमे मतेऽपि प्रायः श्रीशङ्कुकमतवदेवोपसंहृतं भवेदित्यलमेकत्र विषयेऽभिनिवेशेन।

## ॥ अथानन्दस्वरूपमीमांसा ॥

वेदान्तिनये द्विविध आनन्दपदार्थः। प्रथम आत्मस्वरूपोऽलौकिकः द्वितीयश्च सुखरूपा चेतसो वृत्तिर्लौकिकी, आदिमत्रये प्रथमः, सप्तमे नव्यमते द्वितीयः। सांख्यमते बुद्धिसत्त्वस्य सुखाकारपरिणामविशेषो लौकिक एव, अन्यसुखानामपि तादृशत्वात्। स च चतुर्थे भट्टनायकमते गृहीतः।

नैयायिकानां दर्शने वस्तुनोऽनुकूलतया वेदनाजन्य आत्मवृत्तिविशेषगुणः सुखं लौकिकमेव। तच्च पञ्चमषष्ठाष्टममतेषु परिगृहीत इति तेषां वर्णितपदार्थसहचारात्प्रतीयते। तथा च आद्यमतत्रयेऽलौकिकस्य अन्येषु च पञ्चसु मतेषु लौकिकस्यानन्दस्यानुभवः तत्रापि कुत्रचिदलौकिकत्वव्यवहारस्तु उपाये काव्यार्थयोस्तद्भावनायाश्च वर्तमानेनालौकिकत्वेन प्रयुक्तो भाक्तो न तु वस्तुतः, तादृशालौकिकस्याप्रसिद्धेः समन्वयाभावाच्च।

वस्तुतः प्राथमिकेष्वपि त्रिषु मतेषु लौकिकस्य चेतोवृत्तिरूपस्य सुखस्यैवानुभवो ज्यायान्, असमाहितमनसामलौकिकात्मस्वरूपानन्दानुभवेऽनधिकारात् शास्त्रयुक्तिविरुद्धत्वाच्च। सहृदयहृदयं रसास्वादानन्दानुभवे तस्य विलक्षणसामग्रीजन्यत्वे आनन्दस्य लौकिकसुखान्तरवैलक्षण्ये सातिशयत्वे च साक्षिभवदपि अपरिचितस्य आनन्दगतालौकिकत्वस्यानुभवे कथं साक्षितामाश्रयेत्?।

पण्डितराजस्तु अभिनवगुप्तपादाचार्याणां काव्यनाटकाभ्यामानन्दानुभवाभिनिवेशं पश्यन् श्रुतिमप्युदाजहार। वस्तुतः काव्यरसस्य रस्यमानतासारत्वेन बहुभिर्वर्णनादास्वाद्यता विद्युदुद्योतवदस्थिरा। श्रुतिप्रतिपाद्य आत्मरूपोऽनुभवो न तु अनुभाव्यः। आत्मानन्दं रसं प्राप्य स्वयमेवानन्दी भवति, आनन्दाकारवृत्त्या तु लौकिक्या जीव आनन्दो भवति। तथा च लोकस्य लौकिक एवानन्द इति आनन्दीति पदेन श्रुतिः सूचयति। इत्यलमत्र दिग्दर्शनातिरिक्तेन।

इदन्त्ववधेयम्-समास्वपि रसास्वादप्रक्रियासु प्रदर्शितासु आनन्दानुभवस्य सत्यतां दधानास्वपि उपाये उपेये वा ज्ञाने अवश्यं भ्रमत्वम्, भ्रमसंपादिका च सर्वत्रैव सहृदयोल्लासिता भावनैव समाना। तत्र पञ्चमादीनां चतुर्णां मतानामुपेये ज्ञाने (ख्यातेरवसरः) भमत्वम्, आद्येषु चतुर्षु तु उपायभूते ज्ञाने एव।

तथाहि—एते आचार्याः काव्यसमर्पितां शकुन्तलादिनायिकां साधारणीकरणापरपर्यायभावनाविशेषमहिम्ना आलम्बनतां नीत्वा शृङ्गाररसेनाभिषिञ्चन्ति सामाजिकान्। यद्विषयिणी रतिः स्वस्मिन् वर्तते, यस्याश्च इयमगम्येति बुद्धिर्नोदेति सैव विभाव इति संक्षिप्तः सरलार्थः। यथाऽन्यत्र भ्रमस्थले शुक्तिरजतयोर्विशेषांशस्य ज्ञानं न भवति सामान्यांशस्तु ज्ञायते, तथाऽत्र साधारणीकरणादिव्यापारद्वारा स्वनायिकामपेक्ष्य शकुन्तलायां यो विशेषो दुष्यन्तरमणीत्वशकुन्तलात्वकण्वकन्यात्वातीतत्वादिः स तिरोधत्ते, कान्तात्वेन च स्फूर्यमाणा स्वविभावतामुपगता शकुन्तला रसोत्पादहेतुरिति शकुन्तलायां विभावभ्रमाधीनो रसास्वाद इति तेषां दर्शनम्।

अन्वेषां मते उपेयभूते रसरूपे रसास्वादरूपे वा ज्ञाने भ्रमत्वं स्फुटमेव। भ्रमस्थले ख्यातिनाम्ना दार्शनिकप्रक्रिया क्रमशः प्रसिद्धा।

## रसख्यातिः

नायिकादिषु विभावत्वप्रत्ययमालम्ब्य समनुगमयामि।

(१) तत्र प्रथमा वैयाकरणसिद्धान्तलघुमञ्जूषायां सम्यक् सप्रमाणमुपपादिता शाब्दिकसम्मता सत्ख्यातिः।

(२) विज्ञानवादियोगाचारविवृता आत्मख्यातिः।

(३) नैयायिकसम्मता अन्यथाख्यातिः।

(४) साङ्ख्यसृष्टा सदसत्ख्यातिः।

(५) वेदान्त्युपबृंहिता अनिर्वचनीयख्यातिः।

(६) अख्यातिरेव ख्यातिर्मीमांसक-प्राभाकराणाम्।

सर्वत्रैव च यस्मिन् यस्य भ्रमस्तयोर्विशेषधर्मस्यादर्शनं साधारणधर्मस्य दर्शनं लोभातिशयनिद्रादिदोषश्चापेक्ष्यत एव।

## ख्यातिपरिचयः

तेषामतिसंक्षिप्तपरिचयस्य स्थलन्तु शुक्तिशकले रजतखण्डभ्रमः, शुक्तित्वनीलपृष्ठत्वादीनामदर्शनेन साधारणचाकचिक्यादेर्दर्शनेन रजतस्मृत्या च

सहितो लोभातिशयादिदोषो रजततत्सन्निकर्षाद्यसत्त्वेऽपि रजतसाक्षात्कार साधयति।

प्रथमा तत्र रजतस्यासत्त्वेऽपि देशान्तरे सतो रजतस्य ख्यातिरिति सत्ख्यातिः। गृहीता चेयं पूर्वोक्तेन नव्यैकदेशिना अष्टमेन मतेन।

द्वितीया आत्मख्यातिस्तु आत्मनो बुद्धेर्बुद्धिसतो बुद्धितादात्म्यापन्नस्य बौद्धस्येति यावत् बहिःख्यातिः, सर्वं वस्तु बुद्धितादात्म्यापन्नम्, बाह्यानां सत्त्वे तैः सहान्तरिकबुद्धेः सम्बन्धाभावात् कथं बाह्यानवभासयेद् बुद्धिः, दृष्टश्च स्वप्नादौ बहिरसतां बुद्धौ सतां बुद्ध्या प्रकाशनम्। तथा च पूर्वोक्तसमान-सामग्रीसत्त्वे रजतवासनैव बुद्धिस्थं रजतं बहिः प्रकाशयतीति आन्तरिकस्य बाह्यत्वेन ख्यापनादन्यथाख्यातिपदेनाप्येषा व्यवह्रियते।

तृतीया दूरस्थस्य सन्निहितत्वेन शुक्तेर्वा रजतत्वेन ख्यात्या अन्यथाख्यातिः पूर्वोक्तसामग्रीसध्रीचीना रजतस्मृतिरेव ज्ञानलक्षणानामालौकिकसन्निकर्ष-रूपतया रजतस्य प्रत्यक्षप्रयोजिका। शुक्तिशकले हट्टस्थरजतस्य ज्ञानेन सन्निकृष्टस्य प्रत्यक्षमिति भावः। इदं रजतमित्याकारकप्रत्यक्षे इदमंशे लौकिकः रजतत्वांशे ज्ञानरूपोऽलौकिकः, उभाभ्यामेताभ्यां सन्निकर्षाभ्यामिदं रजतमित्या कारकं विशिष्टं प्रत्यक्षम्। इदमंशे लौकिकं रजतत्वांशेऽलौकिकम्, अलौकिकं प्रत्यक्षं बाधबुद्ध्या प्रतिबध्यते, लौकिकञ्च नेत्यनयोर्विशेषः। इत्थमेव विवृण्वते रसं रसास्वादञ्च भट्टलोल्लटा नव्यैकदेशिनश्च।

चतुर्थ्यां सदसत्ख्यात्यामेतावानेव विशेषो यत् साङ्ख्या वदन्ति यद् दोषवशात्सदसतोरेव भानमङ्गीकार्यम्, न सत एव, नाप्यसत एव, सत्यस्य प्रकृतिपरिणामभूतस्य रजतस्य अप्राकृतिकस्य असत्यस्य रजतसम्बन्धस्य च ख्यातिः, सामग्री च पूर्वोक्ता प्रायः सर्वत्रैव समाना।

पञ्चमी सत्त्वेनासत्त्वेन वा निर्वचनानर्हस्य रजतस्य ख्यातिः। शुक्ति-शकले जायमानो रजतखण्डोऽसंश्चेच्छशविषाणवत्कदापि न प्रतीयेत, सश्चेद् हट्टस्थरजतवच्छुक्तिज्ञानेन न बाध्येत, अयञ्च प्रतीयते बाध्यते चेत्युभयविलक्ष-णमनिर्वचनीयम्। प्रत्यक्षे विषयसद्भावस्यावश्यमपेक्षणात्प्रत्यक्षान्यथाऽनुप-पत्त्या अनिर्वचनीयस्य नूतनस्य रजतस्योत्पत्तिः कल्प्यते। तस्य प्रत्यक्ष प्रक्रिया तु लेखवृद्धिभिया त्यज्यते। इयं ख्यातिः सप्तमे नव्यमते सामाजिकात्मनि रसो-त्पत्तये स्फुटतया परिगृह्यते। प्राथमिकेषु त्रिषु मतेषु विभावादिप्रतीतये अन्तर्निगूढोऽस्य परिग्रहः।

षष्ठी च न ख्यातिर्भ्रमो ज्ञाने भ्रमत्वाभावो व्यवहार एव भ्रमत्वमिति तद्दर्शनम्। इदं रजतमिति भ्रमत्वेन परेषामभिमतं वस्तुतो ज्ञानद्वयम्, पुरोवर्तिनि इदमंशस्य लौकिकप्रत्यक्षात्मकम्, रजतस्य तु शुक्तिचाकचिक्यदर्शनाधीनं स्मरणमेव। शुक्तित्वादिविशेषाग्रहसहकृतदोषवशाच्च द्वयोर्ज्ञानयोस्तद्विषययोश्च भेदाग्रहादेव रजतार्थिनः पुरोवर्तिनि प्रवृत्तिरिति।

**अथ शकुन्तलादीनां सामाजिकविभावत्वोपपत्तये षड्विधख्यातीनामुपयोगप्रकारः।**

तत्र साधारणीकरणादिना शकुन्तलादेर्दुष्यन्तरमणीत्वादिविशेषस्यादर्शनं साधारणस्य कान्तात्वस्य दर्शनं सहृदयतोल्लसिता काव्यार्थभावना दोषश्चेति सामग्री सर्वाभिः ख्यातिभिरपेक्ष्यते।

(१) एषा च सर्वापेक्षिता सामग्री स्वकान्तायां सतः शकुन्तलादावर्तमानस्यापि सामाजिकविभावत्वस्य साक्षात्कारं जनयतीति सत्ख्यातिवादिनः शाब्दिकाः।

(२) बुद्धौ वासना रूपेण वर्तमाने शकुन्तलादौ बुद्धिसत एव सामाजिकविभावत्वस्याध्यक्षमनया सामाग्र्येति विज्ञानवादिबौद्धाः।

(३) अविभावरूपायामपि शकुन्तलायां ज्ञानलक्षणेन सामाजिकविभावत्वस्य सन्निकृष्टतया स्वविभावत्वेन शकुन्तलाऽऽलोचनं सामाजिकानामिति नैयायिकाः।

(४) यत्र कुत्रापि सतः स्वविभावत्वस्य शकुन्तलायाञ्चासतस्तत्सम्बन्धस्य शकुन्तलायां ख्यातिरनया सामग्र्येति साङ्ख्यवृद्धाः।

(५) अनया सामग्र्या अनिर्वचनीया सामाजिकान्तरङ्गे प्रकटिताङ्गा शकुन्तला इङ्गन्ती विभाविता सती रसास्वादहेतुः, भावनाकालमात्रे भाव्यमानत्वात् सत्त्वाभावेन सामाजिकरसोद्बोधकतया चासत्त्वाभावेन तादृशशकुन्तलाया अनिर्वचनीयत्वमिति वेदान्तिनः।

(६) प्राभाकरास्तु सत्यामेतस्यां सामग्र्यां शकुन्तलायां स्वविभावभेदस्याग्रहेण स्वविभावस्मृतिरेव सामाजिकानां रत्युद्बोधहेतुरिति शकुन्तलायां स्वविभावत्वस्य ख्यातिमन्तरेणैव अख्यात्यैव सामाजिकानां रसास्वादं निर्वाहयन्ति।

यद्यप्येवमुपेये रसास्वादेऽपि भ्रमात्मके एतादृशीनां ख्यातीनामुपयोगः संभवति तथापि लेखगौरवभिया न विवर्णये।

## ॥ अभिनवा रसतदास्वादनिष्पत्तिप्रक्रिया ॥

### अत्र शाब्दिकाः

(१) नटादिकर्तृव्यापाररूपेण नाटकेन दुष्यन्त शकुन्तला तद्व्यापाराणां कथमवगमः ।

(२) काव्येन नाटकेन वा विशेषरूपेण दुष्यन्तरमणीत्वादिना शकुन्तलाया धराधौरेयत्वादिना च दुष्यन्तस्योपस्थितौ सामाजिकानां पुरतस्तेषां कथं नायक-नायिकाभावादिना सामान्येन स्फुरणम् ।

(३) अतीतानां शकुन्तलादिविभावानुभावसञ्चारिणां परोक्षाणां संयोगस्य कथमिव समाजिकैरास्वादः ? ।

(४) रसत्वेनाभिमतायाः परोक्षायाः शकुन्तलाविषयकदुष्यन्तनिष्ठरतेः कथं सामाजिकैरास्वादनम् ? ।

(५) यदि सामाजिकनिष्ठरतेरेव वासनारुपायाः सामाजिकैरास्वादस्तदा 'इयमगम्या' इति बुद्धिगृहीतया विभावतामप्राप्नुवत्या शकुन्तलया कथं सामाजिकरतेरुद्बोधः ।

(६) अन्यसामग्री समुद्भूतयोः शोकजुगुप्सयोर्भावना चेतसो वैक्लव्यायैव, काव्यसमर्पितयोस्तु तयोर्भावना कथङ्कारमाह्लादायैव ।

इत्यादिसंदेहदोलामधिरूढास्तत्तद्दर्शनवासनावासितान्तर्वृत्तयो विभिन्नमतय आलङ्कारिका याः प्रक्रिया रसास्वादायाविरभावयन् ताः शाब्दिकदर्शनसरणिरतिशेते, शाब्दिकदर्शनञ्च महाभाष्यवाक्यपदीयपुराणेतिहासश्रुतिस्मृतियुक्तिसमन्वयानुरोधी त सिद्धान्तलघुमञ्जूषानिहितं बोद्धार्थनिरूपणमेवेति वदन्ति ।

तथाहि प्रथमे प्रश्ने नटतद्व्यापारादिना व्यक्त्या शकुन्तलातद्व्यापारादयो व्यक्ताक्रियन्त इत्यालङ्कारिकाः ।

शाब्दिकास्तु सर्वस्मिन् ज्ञाने शब्दो भासत एव, नटादितद्व्यापाराणां प्रत्यक्षं दुष्यन्तशकुन्तलादिशब्दविषयकमेव, उपस्थितैश्च तादृशैः शब्दैर्विभावादीनां प्रत्ययः ।

### ॥ ज्ञानमात्रे शब्दभानस्य साम्प्रदायिकता ॥

स्वं रूपं शब्दस्याशब्दसंज्ञेति सूत्रस्थं महाभाष्यम् ।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥

वाक्यपदीयम्। काणाद-सूत्रवृत्ति-कृतां दिङ्नागाचार्याणाम्-नाम-संसर्ग-विषयकत्वमिति सविकल्पकलक्षणम्। बोद्धार्थस्य बोद्धेन शब्देनाविभागात्तन्मूलाभेदाध्यवसायेन शब्दादर्थाकारवृत्तौ जायमानायां स्वाकारस्यापि समर्पणम्।

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्त्तत॥

हरिकारिकातः शब्दोपादानकानामर्थानां शब्दाकारत्वम्, शब्दार्थयोरविभागादेव पस्पशाह्निके 'अथ गौरित्यत्र कः शब्दः' इत्यादिना द्रव्यजात्यादीनां शब्दत्वाशङ्का संगच्छते। इति सक्षेपेण। अधिकन्तु मञ्जूषायामवलोकनीयम्। उद्धृतः समुपपादितश्चायं राद्धान्तः आलङ्कारिककुलाङ्कृतिसनाथैः पण्डितनाथैर्जगन्नाथै रसगङ्गाधरस्य द्वितीयानने कारण मालाप्रकरणे।

द्वितीये प्रश्ने आलङ्कारिकाः केचन सहृदयतोल्लसिताद् भावनाविशेषाद्, अन्ये च साधारणीकरणव्यापारान्तराङ्गीकरणाद् दुष्यन्तादेः साधारण्यं सम्पादयन्ति।

**वैयाकरणास्तु**—दुष्यन्त-शकुन्तला-नलादिशब्दानां न दुष्यन्तत्वादि-विशेषधर्मावच्छिन्ने विशेषाकारे शक्तिग्रहो बोधविषता च तादृशविशेषधर्माणां-विशेषाकाराणाञ्च प्रागननुभवात् स्मरणस्यासम्भवात्। अपितु दुष्यन्तादि-तत्तच्छब्दावच्छिन्ने बुद्धिपरिकल्पिते बौद्धे श्रुतगुणसमृद्ध्याद्यारोपाधिष्ठाने समानाकारे एव। अतएव शकुन्तलाशब्दावच्छिन्नेऽभिधां गृह्णन्नपि प्रियंवदा सखीत्वावच्छिन्नेऽगृहीतशक्तिर्न जानाति प्रियंम्वदासखीत्वेन शकुन्तलाम्। शब्दप्रवृत्तिनिमित्तप्रकारकबोधविषय आकारो विशेषधर्मेण गृहीताकाराद् भिन्न एव। अतएव काशीमधिशयानं कमपि विशिष्टं विद्वांसं श्रुतगुणाकारादिना सामान्येन परिचितवानपि प्रयागस्थः कदाचन समक्षमागतं परिपश्यन्नपि तमेवोद्दिश्य "एवं विशिष्टो विद्वान् असौ काश्यां वर्तते, तस्य दिदृक्षया काशीं जिगमिषुरस्मि" इत्यादि ब्रूते। सूचितञ्चैतत् कंसं घातयतीत्येतदुपपादनावसरे हेतुमति चेति सूत्रे महाभाष्ये।

शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते। इति हरिकारिकया चेति ब्रुवते।

तृतीयेऽपि प्रश्ने परिदृश्यतामिदम् । अतीतानां परोक्षाणां दुष्यन्तशकुन्तलादि विभावादीनां स्वप्नतुरगादीनामिव रज्जुजतादीनामिव साक्षिभास्यत्वमित्यभिनवगुप्तपादानुयायिनः । सामाजिकान्तरङ्गे स्वप्ने तुरगादीनामिव अनिर्वचनीय दुष्यन्तशकुन्तलादीनां समुत्पत्तिरिति तेषामभिप्रायः प्रतिभाति । तत्र वैयाकरणाः—योगवाशिष्ठे गाधिं प्रति उपशमप्रकरणे श्रीविष्णूक्तिः—

बहिर्न किञ्चिदप्यस्ति तेजोऽवुर्वीदिगादिकम् ।
एतत्स्वचित्त एवास्ति पत्रपुञ्जमिवाङ्कुरे ॥
फलादिः स्फारतामेति यथैव बहिरङ्कुरात् ।
बहिः प्रकटतामेति तथा पृथ्व्यादि चेतसः ॥
सत्यं पृथ्व्यादिचित्तस्थं न बहिस्थं कदाचन ।
आबालमेतत्पुरुषैः सर्वैरेवानुभूयते ॥
स्वप्नभ्रममदावेगरागरोगादिदृष्टिषु ॥

एतदभिप्रायककूर्मादिवचनैरनादिवासनाप्रवाहवशाद् बुद्धिसतामेवार्थानां वाच्यत्वं तादृशानामेव च शब्दानां वाचकत्वम्, बुद्धिसदर्थकत्वादेव शशशृङ्गादिशब्दानां सार्थकत्वेन प्रातिपदिकत्वम्, अतीतानागतादिविषयकज्ञानेच्छानां बौद्धा एव विषयाः, अ वद्यमानस्य विषयत्वादि सम्बन्धासम्भवात्, बुद्धिसदेव कार्यमुदिश्य कुलालादिप्रवृत्तिः, अतएव बुद्धिसिद्धन्तु तदसत्, इति गौतमसूत्रम् ! ध्वन्यते चेदम् ( उपदेशेऽजनुनासिक इत् ) इति सूत्रस्थभाष्येण । 'हेतुमति' पङ्क्तिविंशति मतुप्सूत्रेषु भाष्यकैयटयोः प्रायः स्पष्टम् । तथा च बुद्धिसतां विभावादीनां भ्रम नये सुलभ आस्वाद इति वदन्ति ।

एवं चतुर्थप्रश्ने दुष्यन्तादिनिष्ठरत्यादेरनुभवश्चतुर्धा तत्तदाचार्यैः सम्पादितः प्रथममेव तत्तन्मतनिरूपणावसरे सूचितः । वैयाकरणनये तु शकुन्तलाविषयकरत्यादेरपि सामाजिकबुद्धिसत्वादेवास्वादः ।

पञ्चमप्रश्नस्याप्यपनोदाय न साधारणीकरणादेरुपयोगः, बौद्ध शकुन्तलायाम् 'इयमगम्या' इति बुद्धेरनुदयादेव तस्या विभावत्वोपपत्तेः । अनुपपत्तिमूलकशाब्दप्रतीतिर्न बाधबुद्ध्यापि प्रतिबध्यते इति मञ्जूषायां निर्णीतम् । इयं विभावत्वकल्पनाऽप्यानन्दानुभवान्यथानुपपत्त्यैव । तथा चाह श्रीहर्षः—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टि दार्ष्टवैमत्यं सैव सर्वबलाधिका ।

इत्यादि। किञ्च शब्दार्थोभयाकारायाः शकुन्तलायाः शब्दप्रधाना-कारत्वेनास्वादने अग्निशब्दाद्दाह इव नागम्य-त्वबुद्ध्याः प्रसङ्गः। इति

१९४८ ईशाब्दे दरभङ्गायां सम्पन्नाया अखिलभारतीय प्राच्य विद्या परिषदो महामहोपाध्याय पंडितप्रवर श्री नारायणशास्त्रिखिस्ते महोदयाधीक्षित गोष्ठ्यां श्राविता विवेचिता च। तदीयविवरणसूच्यां सूचिता च।

●

# सारस्वती सुषमा

( ३१ वर्ष—३-४ अङ्कौ )

## आलङ्कारिकाणां रसरसास्वादौ[1]

सरसहृदयवशभोगं रोगं हरन्तमन्यविषयजातम्।
वन्दे कविवरहृद्यं नवतां दधतं रसं कञ्चित्॥ १॥

आचार्यवाग्विविधतीर्थजलावपूतः केदारनाथ उदितार्थदृशा सनाथः।
स्वादं रसस्य तनुते नयवित्सुगम्यं नानापथं सकलदर्शनरागरम्यम्॥ २॥

काव्यस्य दृश्यश्रव्ययोरुभयोरपि विशेषयोः सहृदयस्य सातिशयप्रवृत्त्या सहृदयतावशोन्मिषितकाव्यार्थभावनाद्वारकः कश्चिदानन्दविशेषानुभवः सिद्धयन् सहृदयप्रत्यक्षश्च न किञ्चित् साधनान्तरमपेक्षते, परम्—

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम्।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः॥
भावानभिनयसम्बद्धान् स्थायिभावांस्तथा बुधाः।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः॥

नाट्यशास्त्रोक्तसम्प्रदायमनुसृत्यास्वादपदवीं दधानं रसपदाभिधेयं कमपि पदार्थमभ्युपगच्छन्ति आलङ्कारिकाः। तादृशरसपदार्थस्वरूपे स्थायि-भावस्य रसत्वं व्याचक्षाणानामप्याचार्याणां तत्तत्कल्पनाप्रौढिपरम्परया महान् प्रक्रियाभेदः परिदृश्यते। तत्र पण्डितराजजगन्नाथस्य रसगङ्गाधरे नव्यन्याय-

---

१. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याष्टादश (१८) दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेनायोजितायां गङ्गानाथझाप्रवचनमालायां काशीस्थेन विदुषा पं० केदारनाथओझामहोदयेन प्रदत्तमिदं तृतीयं विशिष्टं व्याख्यानम्—सम्पादकः।

युगीनदार्शनिकभाषया विभूषितोऽस्य लेख आधुनिकमनोविज्ञानशास्त्रस्य क्रीडनमसूचयत्। भारतीयदर्शनशास्त्रेषु विविधभेदभिन्नानां ज्ञानानां क्रमिककार्यकारणकल्पनामूला मानस्यः प्रक्रिया नैकप्रकारा वर्णिता विद्यन्ते। ताः प्रक्रिया मानसशास्त्रस्य विषयः। एता अपि प्रक्रिया दर्शनभेदेन किञ्चिद् विभिद्यन्ते। इमे च दार्शनिकाः स्वस्वप्रक्रियया सुन्दरमेनं रसं सस्वदुः। तेन च प्रक्रियाभेदः प्रासिध्यत। दार्शनिको जगन्नाथोऽभिनवभारतीनिर्दिष्टाचार्याणां मतानि विशददर्शनगिरा निर्दिशन् समुत्साहितो द्वित्राणामन्येषामपि दर्शनानां प्रक्रियाः प्रादर्शयत्। तेनैव पथा तेन प्रदर्शितानि मतानि विश्लेषयितुं प्रवृत्तं मम मानसं द्वित्रा अन्यदर्शनप्रक्रिया अपि प्रदर्शयितुं समुत्सुकं विदुषां पाठकानां पुरः परिवेषयति।

तत्र रस-ध्वनिधुरन्धरस्य श्रीमदभिनवगुप्तपादाचार्यमतस्य व्याख्यातृभेदाद् द्वौ पन्थानौ निःसृतौ। मार्गद्वयेऽपि स्थायिभावो न रसः, किन्तु स्थायिभावस्यास्वादो रस इति समानम्। परम्—

(१) प्रथमे व्याख्यातारः स्थायिभावस्य भग्नावरणेन सच्चिदानन्देन गोचरीक्रियमाणत्वमूलास्वादमामनन्ति। अभिनवग्रन्थ उपलभ्यमानयोः 'स्थायिभावा न रसः, विमर्शो रसः' इति वाक्ययोः समन्वयविरोधौ विद्वद्भिश्चिन्तनीयौ। इदं तु सत्यं यदत्र रसगङ्गाधरे अद्वैतवेदान्तप्रचलिता भाषा न प्रत्यभिज्ञादर्शनस्य, पदार्थैक्यं तु प्रतिभाति। भाषाभेदोऽपि सहेतुकः, नव्यन्यायभाषा यथाऽद्वैतवेदान्तमाक्रामत, न तथा प्रत्यभिज्ञादर्शनम्। विमर्शव्यापारविवेचने आत्मना सहान्येऽपि विषया आयान्ति। 'विमर्शो रसः' इति वाक्येऽपि स्थायिभावस्य विमर्शो रस इति तात्पर्यं निहितमास्ते। 'अहं शकुन्तलाविषयकरतिमान्' इति सामाजिकानां विमर्शाकारः स्यात्। तादृशविमर्शविषयत्वमेव सच्चिदानन्देन गोचरीक्रियमाणत्वम्।

(२) अन्ये तु स्थाय्युपहितात्मानन्दविषयिणी अन्तःकरणवृत्तिरास्वाद इति वदन्ति। पूर्ववर्णितो विमर्श एव आस्वादो रसश्च। रत्याद्युपहित आत्मा तत्र भासते।

अनयोर्व्याख्यानयोर्वस्तुस्थितिरेवम्—आत्मचैतन्यमेव प्रकाशः, तस्य वस्तुना विषयेण साकं सम्बन्धेन विषयभानं भवति, आवृतं वस्तु न चैतन्येन साक्षाद् सम्बध्नाति, वृत्त्या आवरणभङ्गे चैतन्यसम्बन्धेन विषयः प्रकाशते। तथा च रतिरात्मानन्दः, उभयाकारावृत्तिः, आवरणभङ्गः, रतेरात्मसम्बन्ध-

इत्येति पञ्च वस्तून्यास्वादवेलायां विराजन्ते। प्रथममते पञ्चमः सम्बन्ध आस्वादः स्वीकृत। द्वितीये वृत्तिरास्वादः। आस्वाद एव चोभयो रसः। अग्रिमे तृतीये आवरणभङ्ग आस्वादः।

(३) आत्मानन्दो रसः, आवरणभङ्ग आस्वाद इति तृतीयं व्याख्यानं प्रादर्शयत्। तथा वर्णने 'रसो वै रसः', 'रसं ह्ययं लब्ध्वा आनन्दीभवति' इत्यादितैत्तिरीयश्रुतौ आत्मानन्दस्य रसशब्देन व्यवहारं कारणं व्यजिज्ञपत्। ततश्च स्थाय्युपहित आत्मानन्दो रसः, आवरणभङ्ग आस्वादः। एषु त्रिषु व्याख्यानेष्वभिनवगुप्तस्य मूलम्, व्याख्याप्रणाली भिद्यते। सहृदयसामाजिकेषु वासनारूपेण स्थिताः साधारणनायिकाविषयिणो रत्यादिस्थायिभावाः साधारणशकुन्तलादिविषयतां दधाना आस्वाद्यन्त इति समानम्।

**भट्टनायकमतम्**

(४) अस्य मतस्य विवरणे निबन्धग्रन्थेषु भोगभुज्यमानतादिशब्दानां प्रयोगः। सांख्यदर्शने पुरुषो न कर्ता, किन्तु 'भोक्तैति' आयाति। भोगशब्दं दृष्ट्वा सांख्यसरण्या व्याख्याता भट्टनायक इति रूढिः प्राचलत्। अत्रापि सामाजिकरतेरेवास्वादः। स्थाय्युपहितस्य सत्त्वगुणपरिणामसुखस्य साक्षात्कार-रूपो भोगः स्थायिभावस्यास्वादः। आस्वाद एव रसः। पूर्वत्र त्रिष्वात्मानन्दस्य वर्णनम्। अत्र सत्त्वगुणपरिणामसुखस्येति एतावानेव विभेदः।

वस्तुतस्तु असङ्गस्यापरिणामिनश्च सांख्यपुरुषस्य बुद्ध्यारूढविषयैः सम्बन्ध एव भोगो नान्यत् किञ्चित्। पुरुषोऽपि सच्चिदानन्दः, रस्यते, भुज्यते, आस्वाद्यते इत्यादीनां समानेऽप्यर्थे प्रयोगो भवति। एतावता भोगशब्दस्य व्यवहारः अर्थविशेषो नास्ति 'भोगो व्यक्ति' इति रसगङ्गाधरः पूर्ववदेवात्म-सम्बधं प्रख्यापयति। तेनात्राप्यात्मानन्दसम्बन्धः। आत्मन आनन्दांश सात्त्विक-वृत्तौ प्रस्फुरतीति द्योतनाय सत्त्वगुणपरिणामेत्याद्युच्यते।

चत्वारोऽप्येते स्थायिभावस्य रसपरिणामं ब्रुवते, सामाजिकरत्यादीन् आस्वादन्ते च। प्रथमे चतुर्थे चास्वादो रसश्चैक एव। द्वितीये तृतीये च स्थाय्युपहित आत्मानन्दो रसः, आस्वादो वृत्तिरावरणभङ्गश्च। केवलस्य स्थायिभावस्य रसतां न ब्रुवते, किन्त्वात्मसम्बन्धसंवलितस्यैवेत्यवधातव्यम्। चतुर्थे भट्टनायकमतेऽप्यात्मसम्बन्ध उक्तप्राय एव।

अतः परमनुकरणीयदुष्यन्तादिनिष्ठरत्यादेरेव सामाजिकैरास्वाद इति मतं प्रचलति।

भट्टलोल्लटस्य मतम्

(५) अस्य मते दुष्यन्तशकुन्तलादिविषयकरत्याद्यंशेऽलौकिकेन ज्ञानलक्षणानामकेन नटादिविशेष्यांशे च लौकिकेन चक्षुःसंयोगेन सन्निकर्षेण जायमानो विशिष्टो नटविशेष्यकः 'दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान्' इत्याकारकसाक्षात्काररूपः सामाजिकनिष्ठो दुष्यन्तादिवृत्तिरत्यादेरास्वादः। साक्षात्काररूपास्वादविषयतामापन्नो दुष्यन्तादिनिष्ठो रत्यादिरेव रसः। सामजिकानां प्रत्यक्षज्ञानस्वरूपो रत्यादेरास्वाद एव रसास्वादः। अत्रालौकिकादिशब्दे भाषानुवादस्य सरलादिटीकानां चानधिकारप्रयुक्तोऽशुद्धो लेखः। अत्रत्यविषयाणां नवीनशास्त्रपरिशीलनविधुरैर्दुर्बोधता। मीमांसकमतानुसारित्वमस्य मुधैव प्रसिद्धम्। पण्डितराजो न्यायभाषया विशदयति। चित्रतुरगादिदृष्टान्तस्यापि भ्रमज्ञान उपयोगः। यथा अतुरगेऽपि तुरगचित्रे तुरगोऽयं धावतीति धीस्तथा समक्षे दुष्यन्ताभिनेतरि नटे दुष्यन्तोऽयं शकुन्तलाविरहे विलपतीति दर्शकानां बुद्धिरुपजायते। एषु समेषु रसास्वादेषु भ्रमधियो विलासः। अत्रानन्दविषये न किञ्चिदुच्यते, परम् अग्रिममतवद् विषयसौन्दर्यवशादानन्दोऽवसेयः। विवेचयिष्यामि च पश्चाद् निष्कर्षे विषयसौन्दर्यमेवात्र प्रायःसर्वत्रानन्ददायकम् आत्मानन्दोदयस्य वर्णनं तु रसास्वादप्रशंसायै।

श्रीशङ्कुकमतम्

(६) पूर्वमते साक्षात्कार आस्वादोऽत्रानुमितिरिति विशेषः। अन्यत् सर्वं पूर्वमतसदृशम्। सोऽपि विशेषो दार्शनिकज्ञानप्रक्रियामूलकः, न तु रसप्रक्रियामूलकः। अस्यानुमितिरूपपरोक्षवादितया महती निन्दा शास्त्रतात्पर्यविधुरैर्विधीयते। अनुमितिज्ञानेनानन्दानुभवे बाधा नायास्यतीति प्रदर्शयिष्यामि। दुष्यन्तत्वरूपेण प्रत्यक्षो नटः पर्वतवत्पक्षः। शकुन्तलाविषयकरतिर्वह्निरिव साध्या। 'दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान्' इत्यनुमितेराकारः। अनुमीयमानो दुष्यन्तादिनिष्ठो रत्यादी रसः। सामाजिकनिष्ठा अनुमितिरास्वादः। अत्र विषयसौन्दर्यवशादानन्दं स्फुटं व्यवहरन्ति।

(७) पण्डितराजोहिता अनिर्वचनीयख्यात्यभिधाना अद्वैतवेदान्तप्रसिद्धा सामाजिकेषु अनिर्वचनीयं दुष्यन्तत्वादिकं सामाजिकान्तरङ्गे च अनिर्वचनीयं शकुन्तलादिविषयकं रत्यादिकञ्चोत्पादयन्ती रसगंगाधरे नव्या इत्यादिना निर्दिष्टा रसरसास्वादप्रक्रिया। दुष्यन्ते लौकिकी शकुन्तलारतिः स्थायिभावः, दुष्यन्ताभिन्नेषु सामाजिकेष्वनिर्वचनीया समुत्पद्यमाना शकुन्तलारती रसः।

सामाजिकानाम् आत्मानन्देन सह रसस्य सम्बन्ध आस्वादः। अहं दुष्यन्तः शकुन्तलाविषयकरतिमान् इति सामाजिकानामनुभवः।

आनन्दवर्णनमत्र आत्मानन्दवशात्। यथा शुक्तिशकले रजतज्ञानम्। यथा शुक्तिकात्वस्याज्ञानम् इदन्त्वेन च शुक्तिशकलस्य तत्र ज्ञानं भवति, तथा काव्यार्थभावनामहिम्ना रसगङ्गाधरवर्णितविगलितपरिमितेत्यादिरीत्या सामाजिकात्मानो विगलितचैत्रत्व-ब्राह्मणत्वगौरत्वादि विभेदकधर्माणः सामान्यनायकायमाना दुष्यन्ताभेदमापद्यन्ते। यथा स्मर्यमाणमापणस्थरजतं शुक्तिशकले समुत्पद्य प्रत्यक्षं भवति। तथा काव्यार्थभावनया भाव्यमाना दुष्यन्तनिष्ठा शकुन्तलारतिः सामाजिकात्मनि समुत्पद्य सामाजिकैरनुभूयते। प्रत्यक्षे विषयसान्निध्यमपेक्षितम् एतावता समुत्पादस्य वर्णनम्। रसगङ्गाधरस्य भाषानुवादविधाता सरला नाम टीका चैतादृशविषये भावाऽवबोधे नाधिकुर्यादिति वस्तुतो जिज्ञासुभिः प्रयासो विधीयताम्।

(८) व्यञ्जनावृत्तिम् अनिर्वचनीयख्यातिञ्च नाङ्गीकुर्वतां प्रायो न्यायप्रक्रियया व्युत्पादयतां दोषवशादसतोऽसन्निकृष्टस्य च भानमिति स्वीयां प्रौढिं द्योतयतां रसगङ्गाधरे परे शब्देन वर्णिता बौद्धदर्शनसंस्कारकल्पिता रसरसास्वादप्रक्रिया। 'अहं दुष्यन्तः शकुन्तलाविषयकरतिमान्' इति सामाजिकानां रसरसास्वादौ। एतादृशानुभवदशायां शकुन्तलारती रसतामेति। अत्र मते रसस्यास्वाद इति भेदव्यपदेशो भाक्तः। काव्यार्थभावनावशादेवान्य आचार्याः स्वप्नतुरगादीनामिव विभावादीनां प्रतीतिं शकुन्तलायाः साधारणीकरणम् अनिर्वचनीयोत्पत्तिञ्च उपपादयन्ति। तदा काव्यार्थभावनामहिम्नोऽपरिमितत्वात् तत एव वस्तूनामभावेऽप्यतीतानाम् असन्निकृष्टानां कथमपि ज्ञातानां मानसप्रत्यक्षं कथन्नाङ्गीक्रियतामिति पूर्वमतापेक्षया कल्पनालाघवं मन्वते। यद्यपि पूर्वोक्तभट्टलोल्लटमतेऽपि प्रत्यक्षम्, परं तत्र नटविशेष्यकं चाक्षुषम्, अत्र त्वात्मविशेष्यकं मानसम्। विषयसद्भावाभावोऽलौकिकप्रत्यक्षे न बाधक इत्युक्तम्। आत्मनि दुष्यन्ताभेदः काव्यार्थभावनाप्रकर्षात् पूर्वमते यथा तथाऽत्रापि, अवाच्याया अलक्ष्यायाश्च शकुन्तलारतेः प्रतीतिरानुमानिकीत्ति मूल उक्तम्। पञ्चमे सन्निकर्षविशेषणं दत्तं नोक्तमत्र। मम तु तथैव प्रतिभाति, आत्मांशे मनःसंयोगो लौकिकः, दुष्यन्ते दुष्यन्तविशेषणे रत्यादौ च ज्ञानलक्षणानामकोऽलौकिकः।

(९) रामानुजदर्शने भ्रमज्ञानं नाङ्गीक्रियते। शुक्तिरजतस्थले शुक्तावपि रजतस्यांशाः केचन वर्तन्ते, येन चाकचिक्यं प्रतिभाति। तेन शुक्तौ रजतमिति

ज्ञानं जायते। परं न सर्वत्र सर्वदा, अपि तु दोषवशाच्छुक्तित्वस्य तिरोधानेऽभान एव। तथैव काव्यार्थभावनारूपदोषवशाद् नटस्य दुष्यन्तविभेदकधर्मास्तिरोधीयन्ते।

एवं शकुन्तलाभिनेतरि शकुन्तलाविरोधिधर्मणामज्ञानम्। अभिनयवशाच्चाभेदबुद्धिरिति 'दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान्' इति प्रत्यक्षं सामाजिकानां रसास्वादः। अन्यश्च विशेषो भट्टलोल्लटप्रक्रिययेवावसेयः।

(१०) दुष्यन्तशकुन्तलारत्यादीनाञ्च परोक्षं शाब्दं ज्ञानम्। अभिनेतुश्च प्रत्यक्षं ज्ञानम्। काव्यार्थभावनाप्रकर्षाद् अभिनेयाभिनेत्रोस्तत्परोक्षापरोक्षज्ञानयोश्च भेदो न भासते। तेन साक्षाद् दुष्यन्तशकुन्तलादिदर्शनमिव सामाजिकानां रसास्वादोऽनुभवश्चानन्दस्य। एतद् भ्रमज्ञानानङ्गीकुर्वतो मीमांसकप्रभाकरस्य मतम्।

(११) सर्वं वस्तु वासनात्मकं बुद्ध्यात्मकं वा। इदं रजतमिति भ्रमस्थले बुद्ध्यात्मकमेव रजतं सन्निकृष्यते, भवति च प्रत्यक्षम्। तत्र बुद्धिस्थस्यैव भानम्, न दूरस्थस्य भानमिति न ज्ञानलक्षणासन्निकर्षस्यापेक्षा। यत्र बाह्यो विषयो न सन्निकृष्यते, प्रत्यक्षं च जायते, तत्र बुद्धिस्थस्यैव भानम्। यद्यपीदम् आत्मख्यातिनाम्ना योगाचारस्य मतं प्रसिद्धम्, परं वैयाकरणसिद्धान्तलघुमञ्जूषाग्रन्थेऽनिर्वचनीयोत्पादखण्डनप्रसङ्गेऽसतोऽपि भानमिति दृशा समाहृतम्। तेन वैयाकरणमतमिति वक्तुं शक्यते। अन्यच्च वैयाकरणमतमग्रे वर्णयिष्यामि।

अभिनयव्यापारेण काव्यार्थपरिशीलनेन च दुष्यन्तशकुन्तलारतिप्रभृतिभावा बुद्धौ समारूढाः। नटे प्रत्यक्षीक्रियमाणेऽसन्तोऽपि सामाजिकैः प्रत्यक्षीक्रियन्ते। तादृशं सामाजिकम् 'अयं दुष्यन्तः शकुन्तलाविषयकरतिमान्' इत्याकारकं प्रत्यक्षं रसास्वादः। प्रत्यक्षावस्थापन्ना च शकुन्तलारती रसः।

(१२) अन्यद् वैयाकरणमतम्। काव्यगता अभिनेतृप्रयुक्ताश्च दुष्यन्तशकुन्तलारमणीराजगौरदयाधीरवीरप्रभृतिशब्दा न विशेषार्थे गृहीतशक्तिकाः, विशेषाणामतीतानामप्रत्यक्षात्। अनुमानशब्दादिप्रमाणानां सामान्यविषयकत्वात्। प्रतीयमानोऽपि कश्चिच्छाब्दप्रत्ययभेदो न जातिगुणादिभेदभिन्नविशेषणभेदमूलकः, तादृशजाति-गुणादिधर्मणाम प्रत्यक्षादज्ञानाच्च। किन्तु तच्छब्दान् प्रवृत्तिनिमित्तीकृत्य तत्तच्छब्दवत्सु अर्थेषु आधुनिकानां शक्तिग्रहः, तत्तच्छब्दप्रकारक एव बोधः। दुष्यन्तरमणीत्वेन कण्वदुहितृत्वेन गृहीतायां शकुन्तलायाम् अगम्येति बुद्धिः सम्भवति। शकुन्तलाशब्दवत्यां नागम्येति बुद्धिः

स्यात्। भवेच्च सामाजिकानां रतेरालम्बनम्। भावनाप्रकर्षाच्च स्वात्मनि दुष्यन्तशब्दवत्त्वेन नायकत्वपरिज्ञानम्। तेन च शकुन्तलारतिविषयोऽहमिति सामाजिकानां मानसप्रत्यक्षं रसास्वादः। प्रत्यक्षदशायां तादृशरती रसः।

अत्र शक्तिग्रहवर्णनं एव किञ्चिन्नूतनम्। शब्दप्रकारको बोधः कारणमालाप्रकरणे प्रयोजनान्तराय रसगङ्गाधरे गृहीत उपपादितश्च। शाब्दबुद्धेरपि विषयविशेषेऽपरोक्षत्वमत्र रसप्रकरणे 'तत्त्वं वाक्यजबुद्धिवत्' इत्यनेन सूचितम्। प्राक्तनवैयाकरणमतमसतो भानमङ्गीचकार। अत्र च शब्दप्रकारकमिति विशेषः।

इत्थं पण्डितराजः स्वविश्लेषणशालिन्या शेमुष्या अभिनवगुप्तमतमेव त्रिधा व्याख्याय 'नव्याः—परे' इति मतद्वयं स्वयमुद्भाव्य च यन्मां समुदसाहयत् तेन दिक्प्रदर्शनमुखेन चतस्रो रसास्वादप्रक्रियाः प्रादर्शयम्। अल्पीयस्यैव सामग्र्यां नातिदृढोऽपि कथमप्यग्रेसरणं यद्भावि तद् भवतु इति न्यायेन पञ्चमीमपि प्रस्तौमि।

(१३) स्वयं महेश्वरोऽपि जीवोऽविद्यावशाद् अल्पज्ञत्व-पारतन्त्र्य-परिमितत्वादिकलाक्रान्तः समयेन विद्योदयेन महेश्वरधर्मान् सर्वज्ञत्वस्वातन्त्र्य-विभुत्वादिरूपान् स्वस्मिन् विमृशति 'स एवाहं महेश्वरः' इति प्रत्यभिजानीते च क्रमशो महेश्वररूपतामेति विमुञ्चति च बन्धमिति प्रत्यभिज्ञादर्शनशैली। तद्रीत्या सामाजिकाः सहृदयाः काव्यार्थभावनाप्रकर्षाद् दुष्यन्तनायकगुणान् स्वस्मिन् विमृशन्ति 'तादृशशकुन्तलारतिमानहम्' इति प्रत्यभिजानते। एतादृशो विमर्शो रसः, सामाजिकेषु विमर्श एव रसास्वादः। विमृश्यमाना रतिः स्थायिभावः, आनन्दश्चात्मानन्दविमर्शात्, अन्या अनुपपत्तयश्च काव्यार्थ-भावनाप्रकर्षपेषणीपेष्टव्याः।

**आसु कतमा प्रक्रिया समीचीना**

अलौकिकेऽस्मिन् विषये कल्पनामात्रशरीराणां मोक्षपदवीमिव रसास्वादानन्दानुभूतिमारोहन्तीनां सोपानपरम्परामिवाचरन्तीनां प्रक्रियाणां का समीचीना का च नेति वस्तुतो वक्तुं न पार्यते, समेषामेव तैर्थिकानां स्वस्वमार्गे प्रतिष्ठितत्वात्।

अतएव प्राथमिकेषु चतुर्षु मतेषु सामाजिकरत्यादीनामास्वादात् सहृदयानाञ्च रसास्वादाधिकारः सिद्ध्यति, रसास्वादानुकूलवासनावतामेव सहृदयत्वात्। अनुकार्यदुष्यन्तादिरत्यादेरास्वादनये तु सामाजिकवासनानामनुपयो-

गाद् जरन्मीमांसकादीनामपि रसास्वादप्रसक्त्या सिद्धान्तव्याकोपभयात् पञ्चमादीनि मतानि हेयानीति केषाञ्चिद् व्याख्यानं मुधैव, सर्वैरपि देशिकैः स्वस्वप्रक्रियायां भिन्ननिष्ठरत्यादेरास्वादस्य सहृदयतोल्लसितकाव्यार्थभावना-कार्यत्वेनैव वर्णनात्। तथा च सहृदयतां विना भावनोल्लासाभावेन रसास्वा-दस्य खपुष्पायमाणत्वात् कुतो निर्वासनानां रसास्वादप्रसक्तिः ?

एवमेव प्रत्यक्षज्ञानस्यैवाह्लादजनकतयाऽनुमितिरूपपरोक्षरसास्वादवर्णने सहृदयसाक्षिसिद्ध आनन्दो नोपपद्यत इति श्रीशङ्कुकमतं न समीचीनमिति वचोऽनर्हम्। तस्य मते वस्तुसौन्दर्यायत्तस्याह्लादस्यानुभवे वस्तुज्ञानगतं परोक्ष-त्वम्, अपरोक्षत्वं वा किं कुर्वीत ? किं पुत्रादीनां समुन्नतिः साक्षात्क्रियमाणेव कुण्डलीस्थानुकूलग्रहवशादनुमीयमाना नाह्लादयति ? व्ययबोधकपत्रेण समृद्धि-पूर्णतयाऽनुमीयमानः कोषः किं राज्ञो नानन्दाय ? अवनतिश्च पुत्रादीनामनुमि-तेव साक्षात्कृताऽपि क्लेशयत्येव। तस्मात् सुष्ठूक्तं श्रीशङ्कुना वस्तुसौन्दर्यबला-देवाह्लाद इति। यत्र कुत्रचिद् वस्तुसौन्दर्यसत्त्वेऽपि अनुमितिवशान्नाह्लादोऽनु-भूयते, तत्रानुमितावप्रामाण्यग्रहोऽवसेयः।

अत्र रसप्रकरणे **पण्डितराजः 'विभावादिषु य एव चमत्कारी स एव रसः'** इति मतान्तरमवातारयत्। तेन किं सूचयतीति विचारणीयम्। स्थायि-भावस्य रसत्वे स्थायिनः सौन्दर्यादेव आनन्द इत्यायाति। तथा च रसानुभव-वेलायां विषयसौन्दर्यवशादाह्लाद इत्यालङ्कारिकाणामनुभवः।

यद्यपि—

**अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।**
**आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥**

इति वेदान्तडिण्डिमो वस्तूनां सच्चिदानन्दे ब्रह्मण्यध्यस्तत्वाद् विषये-ष्वानन्दो ब्रह्मण एवेति ख्यापयति, तेन वेदान्तप्रक्रियावशात् सच्चिदानन्द-सम्पर्कस्वरूप आस्वाद एवाह्लादयेत् सामाजिकान्, नान्यविध आस्वाद इत्या-याति, तथापि विवेचनपरीक्षायां विषयसौन्दर्यमेव तिष्ठत्याह्लादमूलम्। अन्याः प्रक्रिया विशीर्णा जायन्ते। तथाहि—प्रथममुक्तडिण्डिमस्य स्वरूपमेव विविच्य-ताम्। ब्रह्मणोऽध्यासवशादेव वस्तूनां प्रियत्वमास्थीयेत, तदा अविशेषाद् जगदिदं प्रियमेव स्यात्, न किञ्चिदप्रियम्। किन्तु, वस्तुस्वभावादेवात्मानन्दाध्यासेन किञ्चित् प्रियम्, अन्यदप्रियमिति तेषामपि प्रक्रिया। अतः स्वभावबलादेवा-नन्दांशस्याभिव्यक्तेरभावेन दुःखं सदाऽप्रियमेवावतिष्ठते। सांख्यमते सत्त्वरजस्त-मसां परिणामाः पदार्था इति वस्तुनः स्वभावादेव सुखदुःखे संसिद्ध्यतः।

आद्येषु त्रिषु मतेषु साक्षात्कार आत्मानन्दोदयो यदि, तर्हि काव्यातिरिक्तस्थले घटादिसाक्षात्कार आत्मानन्दोदयोऽस्ति न वा ? आद्य आनन्दोदये साधारणे जाते किं कृतं काव्येन, तदर्थभावनया वा ? यदि घटादिस्थले प्रकाशाय चिदंशस्यैवोदयो नानन्दांशस्य, काव्यस्थले चानन्दांशस्थायीति ब्रूषे, किं कृतोऽयं विशेषः ? काव्यकृत इति चेत्, किं करोति काव्यम् ? वयं तु ब्रूमः—काव्यमलौकिकं नूतनं शब्दार्थस्वरूपमुपनयति। सहृदयताल्लसिता भावना तु तस्य क्लेशमोहप्रयोजकांशं तक्षन्ती सुखप्रयोजकांशं सूक्ष्मतरं सामाजिकान्तरङ्गे स्थापयति।

इदमेव रजस्तमसोरभिभवनं सत्त्वोद्रेकश्च ग्रन्थेषु वर्णितम्। यद्वशात् काव्यसमर्पितः शोको जुगुप्सा वाऽऽह्लादायैव, न क्लेशाय। तस्मात् काव्यतदर्थभावनयोर्विलक्षणवस्तुसमर्पणेनोपयोगः। तदेव सुन्दरं वस्तु। तस्यैवानुभव आस्वादो वाऽऽह्लादयति। वस्तुसौन्दर्याच्चानन्दानुभवः सिध्यति।

प्रागुक्ते नव्यमतेऽपि अन्तर्निहितं वस्तुसौन्दर्यमेव चमत्कारप्राणः प्रतिभाति। साक्षात्कार आत्मानन्दोदयवशादाह्लाद इति तन्मतम् तत्तु अनुपदमुक्तैर्विविधविकल्पजालैः प्रबद्धं कथं प्ररोहेत् ? यदि साक्षात्कारबलादेवानन्दोदयः, तर्हि दुष्यन्तनिष्ठरत्यादेर्भट्टलोल्लटवत् साक्षात्कारेण कथं न तुष्यन्ति नव्याः ? कथञ्च नूतनस्यानिर्वचनीयस्य रत्यादेरुत्पादने प्रयतन्ते ? न च अनिर्वचनीयस्यैव साक्षात्कार आह्लादकः, न व्यावहारिकस्य इति दृशा तथा यतन्त इति वाच्यम्, व्यभिचरितत्वात्। व्यावहारिकेणापि सुन्दरवस्तुनाऽऽह्लादस्योदयात्। स्वीये रजतखण्डे जायमानेन रङ्गेणानिर्वचनीयेन कीदृग् हृष्यतीति स एव जानाति।

इदं तु तस्य हृद्यम्—लौकिकसामग्रीसमर्पितो दुष्यन्तादिनिष्ठो रत्यादिर्लौकिको दुःखमोहप्रयोजकांशेनापि घटितो न समेभ्यः सहृदयेभ्यः सुखप्रदः, किन्तु सुखांशमात्रेण नूतनतया समुत्पन्न एव। अन्यानिर्वचनीयापेक्षया विलक्षणं सौन्दर्यं तु काव्यार्थभावनोत्थतयैवेति सर्वत्र समानम्।

भट्टनायकस्य मतेपि वस्तुसौन्दर्यमनपेक्ष्य न किञ्चिदानन्दानुभवहेतुतया पर्यवस्यति। तथाहि—साङ्ख्यप्रक्रियायां तत्तत्सुखदुःखाकारेण परिणताया बुद्धेः पुष्करपलाशवन्निर्लेपेऽसङ्गे पुरुष ऐक्याध्यासरूपो भोगो दुःखादेरपि पौरुषेयः समानो न किञ्चिद् रसास्वादे वैलक्षण्यमर्पयति, रजस्तमसी अभिभूयोद्रिक्तस्य सत्त्वस्य सुखाकारपरिणामोऽपि सर्वत्र लौकिकसुखसाक्षात्कारे समानः सन् न

भेदमावहति, किन्तु काव्यसमर्पितस्य वस्तुनः सौन्दर्यस्वभाव एवं रजस्तमसोरभिभवे सत्त्वोद्रेके च प्रभवतीति किमु वक्तव्यम् ।

एवं सति एकदेशि - 'परेतु' मते आनन्दानुभवहेतुतया वर्णितो दुष्यन्तादिनिष्ठरत्यादेर्मानससाक्षात्कारप्रभवो विषयसौन्दर्यबलायात इति पर्यवसेयम् ।

प्रायः श्रीशङ्कुकसपक्षभावमापन्नस्य भट्टलोल्लटस्य मतेऽपि श्रीशङ्कुकसम्मतवस्तुसौन्दर्यबलायात एवानन्दानुभव इत्यलमेकत्र विषये विशेषाभिनिवेशेन ।

**आनन्दस्वरूपविचारे किञ्चित्**

वेदान्तनये द्विविध आनन्दः सम्भवति । प्रथमः—आत्मस्वरूपोऽलौकिकः, द्वितीयः—सुखरूपा चेतसो वृत्तिर्लौकिकी ।

नन्वनेकविधसुखस्वीकारे गौरवात् समेषां वस्तूनामात्मन्यध्यस्ततयैव प्रकाशः, विषयप्रकाशनाय चिदंशेऽध्यासस्यावश्यकतयाऽऽनन्दरूपप्रियत्वाभिव्यक्तये चानन्दांशेऽध्यासोऽप्यावश्यकः । तथा चैकेनात्मानन्देन सर्वत्र प्रियत्वोपपत्त्या नानासुखस्वीकारे गौरवं स्फुटमेव । घटादिसाक्षात्तारे सर्वत्र प्रियत्वानभिव्यक्त्याऽपि न क्षतिः । नैयायिकानामिव यत्र **'इदं ममानुकूलं मम भवतु'** इति वासना वृत्तिर्वा तत्रैव प्रियत्वाभिव्यक्तेः स्वीकारात् । यत्र **'इदं मम प्रतिकूलं मम न भवतु'** इति वासना, तत्र दुःखरूपा वृत्तिरेव, न प्रियत्वाभिव्यक्तिरिति चेत्, आत्मानन्दस्यैकत्वेऽपि तदभिव्यञ्जकनानावृत्तिस्वीकारे लाघवस्य दूरापास्तत्वात्, घटादिसाधारणानन्दस्य रसस्थल आस्वादे लौकिकत्वस्यावर्जनीयत्वाच्च ।

अस्तु वा यथा तथा द्विविधं सुखं वेदान्तनये प्रसिद्धं तदादायैवात्र व्यवस्थापनीयम् । आदिमे मतत्रये नव्यमते चात्मस्वरूपानन्दस्य वर्णनम् । तस्यापि रसस्थलेऽन्यलौकिकसुखापेक्षया सातिशयत्वेऽपि लौकिकत्वमव्याहतम् । इदञ्च रसगङ्गाधरे **'सविधवर्ति' 'विषयसंवलितः'** इत्यादिशब्दैः ख्यापितम् ।

सांख्यमते बुद्धिसत्त्वस्य सुखाकारपरिणामविशेषो लौकिक एव, अन्यसुखस्यापि तादृशत्वात् । स च चतुर्थे भट्टनायकमते परिगृहीतः । आत्मस्वरूपस्य कियति विभेदेऽपि सर्वत्र दर्शने आत्मन आनन्दत्वम्, अनुकूल आत्मीये प्रियत्वञ्चाहं चिन्तयामि । असकृत् संस्कृतहिन्दीपत्रिकासु प्राकाशयञ्च । भवति

च प्रत्यक्षे वेदान्तस्येव सांख्यस्याप्यात्मसम्पर्कः तथा चैतादृशानन्दस्वरूपे सांख्य-वेदान्तयोर्न विशेषः, तथाप्यत्रान्यप्रसिद्धमार्गेणैव व्यवस्थापयामि।

न्यायनये वस्तुनोऽनुकूलतया वेदनाजन्य आत्मवृत्तिर्विशेषगुणः सुखं लौकिकमेव। तच्च पञ्चमषष्ठाष्टममतेषु परिगृह्यत इति तेषां वर्णितपदार्थसहचारात् प्रतीयते। तथा चाद्यमतत्रयेऽलौकिकस्यान्येषु पञ्चसु मतेषु लौकिकस्यानन्दस्यानुभवः। तत्रापि कुत्रचिदलौकिकत्वव्यवहारस्तूपाये शब्दार्थयोस्तद्भावनायाञ्च वर्तमानलौकिकत्वप्रयुक्तो भाक्तः, न तु वस्तुतः, तदलौकिकत्वस्याप्रसिद्धेरसमन्वयाच्च।

वस्तुत आदिमेष्वपि त्रिषु लौकिकस्य चेतोवृत्तिरूपस्यैव सुखस्यानुभवो जायात्। असमाहितचेतसामलौकिकात्मस्वरूपानन्दानुभवेऽनधिकारात् शास्त्रयुक्तिविरोधाच्चेत्युक्तप्रायमेव। सहृदयहृदयं रसास्वादानन्दानुभवे तस्य विलक्षणसामग्रीजन्यत्वे आनन्दस्य लौकिकसुखान्तरवैलक्षण्ये सातिशयत्वे च साक्षि भवदपि, अपरिचितस्यानन्दगतालौकिकत्वस्यानुभवे कथं साक्षि स्यात्? पण्डितराजस्तु अभिनवगुप्तपादाचार्याणां काव्यनाटकाभ्य आत्मानन्दानुभवाभिनिवेशं पश्यन् श्रुतिमप्युदाजहार। वस्तुतः काव्यरसस्य रस्यमानतासारत्वेन बहुभिर्वर्णनादास्वाद्यता विद्युदुद्योतवदस्थिरा वृत्तिरूपैव। श्रुतिप्रतिपाद्य आत्मरूपोऽनुभवो रसः, नानुभाव्यः। आनन्दं रसं प्राप्य स्वयमानन्दो भवति, आनन्दाकारवृत्त्या तु लौकिक्या जीव आनन्दीभवति। लौकिकस्य लौकिक एवानन्द इति आनन्दीपदेन श्रुतिः सूचयति, अलं दिग्दर्शनातिरेकेण।

**ख्यातेरवसरः**

प्रदर्शितासु समासु रसास्वादप्रक्रियास्वानन्दानुभवस्य समत्वं दधानासूपाये उपेये वा ज्ञानेऽवश्यं भ्रमत्वम्। भ्रमसम्पादिका च सर्वत्र सहृदयतोल्लसिता काव्यार्थभावना समाना, पञ्चमादीनां प्रक्रियाणामुपेये ज्ञाने भ्रमत्वम्। आद्येषु चतुर्षु मतेषूपायभूत एव ज्ञाने भ्रमत्वम्। तथाहि—एते आचार्याः काव्यसमर्पितां शकुन्तलादिनायिकां सामाजिकवृत्तेः स्वनायिकाविषयकरतेः साधारणीकरणापरपर्यायभावनाविशेषमहिम्नाऽऽलम्बनतां नीत्वा शृङ्गाररसेनाभिसिञ्चन्ति सामाजिकान्। स्वशृङ्गारविभावत्वञ्च स्वविशिष्टत्वम्, वैशिष्ट्यञ्च अप्रमात्वप्रकारकनिश्चयविशेष्यत्वाभावविशिष्टं यत् स्वागम्यत्वप्रकारकं ज्ञानं तद्विशेष्यत्वाभाववत्त्वम्, स्वरत्यालम्बनत्वञ्चेति सम्बन्धद्वयेन। यद्विषयिणी रतिः स्वस्मिन् वर्तते, यस्याञ्चेयमगम्येति बुद्धिर्नोदेति, स वै विभाव इति संक्षिप्तः सरलार्थः।

यथाऽन्यत्र भ्रमस्थले शुक्तेर्विशेष्यांशस्य ज्ञानं न भवति, सामान्यांशस्तु ज्ञायते, तथाऽत्र साधारणीकरणादिव्यापारद्वारा स्वनायिकामपेक्ष्य शकुन्तलायां यो विशेषः दुष्यन्तरमणीत्वशकुन्तलात्वातीतत्व-कण्वकन्यात्वादिः स तिरोधत्ते, कान्तात्वेन च स्फूर्यमाणा स्वविभावत्वमुपगता शकुन्तला रसोत्पादहेतुरिति शकुन्तलायां विभावत्वभ्रमाधीनो रसास्वाद इति तेषां दर्शनम्। अन्येषां मत उपेयभूते रसे रसास्वादे वा ज्ञाने स्फुटं भ्रमत्वम्। नटे दुष्यन्ताभेदस्य सामाजिकात्मनि वा दुष्यन्ताद्यभेदस्यातीतस्यान्यनिष्ठस्य च शकुन्तलादिरत्यादेर्नटे सामाजिकात्मनि वावगाहनात्।

**ख्यातिः—**

भ्रमस्थले ख्यातिनाम्ना दार्शनिकज्ञानप्रक्रिया प्रसिध्यति, तत्र काचित् ख्यातिप्रक्रिया काव्यसमर्पितनायिकादिषु विभावत्वप्रत्ययमालम्ब्य समनुयन्ति।

(१) तत्र वैयाकरणसिद्धान्तलघुमञ्जूषायां सम्यक् सप्रमाणमुपपादिता सत्ख्यातिः। एनां तत्रासतोऽपि भानभङ्गीकृत्यासत्ख्यातिमपि वक्तुं शक्ष्यन्ति। क्वचित् कदाचित् सतः ख्यातिर्भानं सत्ख्यातेरर्थः।

(२) विज्ञानवादियोगाचारविवृताऽऽत्मख्यातिर्द्वितीया। आत्मनो बुद्धेः, बुद्धिसत्तोर्वा वस्तुनो बहिः ख्यातिर्ज्ञानमर्थः। आन्तरस्य बाह्यतयाख्यानात् केचनान्यथाख्यातिमेनां व्याचक्षते।

(३) नैयायिकानामन्यथाख्यातिः, शुक्ते रजततया भानम्। अत्र ज्ञानलक्षणासन्निकर्षोपयोगः।

(४) सांख्यसृष्टा सदसत्ख्यातिः, शुक्ताविदं रजतमिति प्रत्यक्षं भ्रमः। असन्निकृष्टस्य दूरे सतो रजतस्यासतश्च रजतसम्बन्धस्य भानमित्यर्थः।

(५) वेदान्त्युपबृंहिता अनिर्वचनीयख्यातिः, इदं रजतमिति भ्रमप्रत्यक्षम्। प्रत्यक्षे चासन्निकृष्टं न भासते; अत्र च रजतं भासते, अतो नूतनं समुत्पन्नं च रजतं भासत इति अङ्गीकार्यम्। इदञ्च नूतनं रजतं न सत्, शुक्तिज्ञानेन बाध्यत्वात्। सतश्च बाधायोगात्। नाप्यसत्, असतः शशशृङ्गादेरभानादस्य च भासमानत्वात्। सत्त्वेनासत्त्वेन च निर्वक्तुं न शक्यत इति अनिर्वचनीयं रजतम्, तस्य भानमिति भावः।

(६) अख्यातिरेव ख्यातिः, अख्यातिर्भ्रमज्ञानमनङ्गीकुर्वाणानां व्यवहारे भ्रमत्वं मन्वतां मीमांसकप्राभाकराणां षष्ठी। इदं रजतमिति भ्रमस्थले

अंशद्वयम्—१. इदम्, २. रजतम्। प्रथमं सन्निकृष्टं प्रत्यक्षम्, द्वितीयं रजतमसन्निकृष्टं चाकचिक्यादिना स्मर्यते। प्रत्यक्षं स्मृतिश्च ज्ञानद्वयं प्रमा। किन्तु दोषवशाज्ज्ञानयोर्विषययोश्च भेदाग्रहात् प्रवृत्तिः।

सर्वत्र चासु यस्मिन् भ्रमस्तस्य विशेषधर्मस्यादर्शनं साधारणधर्मस्य च दर्शनम्। लोभातिशय-निद्रा-मनोऽनवधानता-भावनाविशेषानभ्यस्तताप्रभृतिषु कस्यचिद् दोषस्य समानतयाऽपेक्षा। यथा शुक्तिरजतभ्रमस्थले शुक्तित्वनीलपृष्ठत्वादेरदर्शनं साधारणचाकचिक्यादेर्दर्शनम्, रजततृष्णा, रजतस्मृतिः, रजतस्यासन्निधानं च, तेन इदं रजतम् इति भ्रमः।

प्रथमा स्फुटं कुत्रचिन्न गृहीता। किन्तु रसगङ्गाधरे 'परे तु' मते सर्वा सामग्री प्रदर्शिता। सन्निकर्षमात्रं न प्रदर्शितम्। तत्र प्रथमायाः ख्यातेः परिग्रहः प्रतिभाति, अन्यथाऽपि तस्य व्याख्यानं प्रदर्शितमेव। आत्मख्यातिर्द्वितीयाऽपि बुद्धिसतो मानाद् वैयाकरणमतेनापि प्रदर्शिता। अन्यथाख्यातिर्भट्टलोल्लटमते गृहीता।

तत्र साधारणीकरणादिना शकुन्तलादेर्दुष्यन्तरमणीत्वादिविशेषस्यादर्शनम्। साधारणस्य कान्तात्वस्य दर्शनम्, सहृदयतोल्लसिता काव्यार्थभावना दोषश्चेति सर्वाभिः ख्यातिभिरपेक्ष्यते।

एषा च सर्वापेक्षिता सामग्री स्वकान्तायां सतः शकुन्तलादाववर्तमानस्यापि स्वविभावत्वस्य सामाजिकेषु साक्षात्कारं जनयतीति प्रथमां सत्ख्यातिं मन्वते। बुद्धौ वासनारूपेण वर्तमानस्य स्वविभावत्वस्य बुद्धिस्थशकुन्तलादौ प्रत्यक्षं सामाजिकानामनया सामग्र्येत्यात्मख्यातिः। अविभावरूपायां शकुन्तलायां ज्ञानलक्षणेन सन्निकृष्टस्य स्वविभावत्वस्य शकुन्तलायां सामाजिकानामालोचनम् अविभावस्य विभावतया प्रत्यक्षमन्यथाख्यातिः। यत्र कुत्रापि सतः स्वविभावत्वस्य शकुन्तलायाञ्चासतस्तत्सम्बन्धस्य च ख्यातिः सदसत्ख्यातिः। अनया सामग्र्या अनिर्वचनीया सामाजिकान्तरङ्गे प्रकटिताङ्गा शकुन्तला इङ्गन्ती विभाविता सती रसास्वादहेतुः। भावनाविभिन्नकाले न भासमानाऽसतीं सामाजिकरतिमुद्बोधयन्ती नासती सा शकुन्तला अनिर्वचनीयेति अनिर्वचनीयख्यातिः।

प्रभाकरस्याख्यातिस्तु एवं विव्रियेत—पूर्वोक्तसामग्रीसत्त्वे स्वविभावस्य स्मृतिः। शकुन्तलायां स्वविभावभेदो न गृह्यते, एतावतैव शकुन्तलाभिनयेन

सामाजिकरतेरुद्बोधः । न शकुन्तलायां स्वविभावत्वख्यातेरावश्यकता, अख्यात्यैव सामाजिकानां रसास्वादनिर्वाहः ।

( ७ ) एका प्रत्यभिज्ञादर्शनस्य अपूर्णख्यातिः क्वचिदुपलभ्यते, सम्यगुपपादनं तु तस्या नाद्याप्युपालभे, रजते रजतस्य ख्यातिः सम्पूर्णख्यातिः, शुक्तिशकले रजतस्य ख्यातिरपूर्णा । केषाञ्चिदवयवानां तत्र सत्त्वात् । यद्यपीयं सामग्री रामानुजदर्शनेऽपि वर्ण्यते, किन्तु तत्रास्याः ख्यातेश्चर्चा नास्ति, प्रत्यभिज्ञादर्शनेऽपि क्वचिदेव दृष्टा । अनया ख्यात्या सामाजिकानां शकुन्तलादावपूर्णस्वविभावपरिज्ञानमिति रतेरुद्बोधः ।

एवं शकुन्तलादौ सामाजिकविभावत्वोपपत्तये ख्यातिप्रकारान् प्रादर्शयम् । उपेये रसास्वादेऽप्येवं ख्यातीनां समन्वयः सम्भवति, तथापि लेखविस्तरभिया कोमलमतीनां काव्यविहरणशीलानां नातिरञ्जनजनकञ्चेति परित्यजामि । रसगङ्गाधरे द्वे ख्याती स्फुटम्, अन्या अस्फुटं प्रदर्शिताः । तदध्ययनाधमर्णस्य मम ऋणविमुक्तय एतावदावश्यकं तदाकार्षम् ।

इत्थं स्वादविवेचनेन रसिकः सत्यं मुदं प्राप्स्यति
रम्यं वस्तु न दूषयेन्मम मतिः स्पर्शे न दोषो यतः ।
गङ्गावारि नु काशिकं शवगति पापारि पुण्यौषधं
तृप्तोऽयं परिवेष्य वः पुर इदं विद्याविनोदोद्यतः ॥

बुधजनोदधिवारिसमुज्ज्वलं जयशिवेति वचः पवनार्चितम् ।
सकलशास्त्रसुवर्णरसद्रुतं क्षितितलं मम काशिकमर्थितम् ॥

●

वर्ष ८ अङ्क २ चिन्तामणि बम्बई फरवरी १९७४

# रसख्याति

काव्यों के दृश्य और श्रव्य दो भेद प्रसिद्ध हैं । दोनों में सहृदय की प्रवृत्ति भी अधिक देखी जाती हैं । जो सहृदय काव्यार्थ की भावना में प्रवीण हैं वे किसी विशेष आनन्द का अनुभव करते हैं ऐसा प्रवृत्तियों से समझा जाता है । तथा वैसे आनन्दानुभव में सहृदयों का हृदय भी साक्षी है । उस आनन्द के अनुभव को सिद्ध करने के लिए

किसी दूसरे साधन की अपेक्षा नहीं है। किन्तु इसके लिए आलङ्कारिक निबन्धों में रस नाम का एक पदार्थ माना गया है। वह आस्वाद के योग्य है। उसके आस्वाद की प्रक्रिया भी बतायी जाती है। जिसको नाट्य-शास्त्र निम्नलिखित प्रकार से प्रदर्शित करता है—

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम्।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥ १ ॥
भावानभिनयसम्बद्धान् स्थायिभावाँस्तथा बुधाः।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥ २ ॥

(भारत नाट्यशास्त्र ६. ३३. ३४)

अनेक प्रकार की वस्तुओं से युक्त नाना व्यञ्जनों के साथ भात को खाते हुए भात के रसज्ञजन जैसे स्वाद लेते हैं, उसी प्रकार सहृदय विद्वान विभाव, अनुभाव और संचारिभाव के अभिनय से सम्बद्ध स्थायिभावों का मन से स्वाद लेते हैं। अतएव वे नाट्य-रस कहे गये हैं।

ऐसे रस पदार्थ का स्वरूप निबन्धग्रन्थों में अनेक प्रकार से वर्णित है। आचार्यों की प्रौढ कल्पना अनेक प्रक्रिया प्रदर्शित करती है। स्थायिभाव को रस मानने वाले आचार्यों की प्रक्रिया भी कल्पना के अनुसार अनेक स्वरूप की भी बन गयी है। पण्डितराज जगन्नाथ का रसगङ्गाधर नव्य न्याय के युग का है, भारतीय दर्शनों की ज्ञान आदि मानसिक वस्तुओं का नव्यभाषा से विशेष विशद विवेचन किया गया है। मानसिक वस्तुओं के अनेक कार्य कारण भावों के वर्णन से आधुनिक मनोविज्ञान शास्त्र का एक क्रीडा मैदान हो गया है। इसमें प्रदर्शित बहुतेरे पदार्थ मानस-शास्त्र के हैं। इस रस तथा रसास्वाद की प्रक्रिया दर्शनों के भेद से कुछ-कुछ विशेषता पाती है। सभी दार्शनिकों ने इस सुन्दर रस का अपनी-अपनी प्रक्रिया के अनुसार आस्वादन किया है तथा करना चाहते हैं। अतः प्रक्रियाओं के अनेक भेद हो गये हैं।

पण्डितराज जगन्नाथ बड़े दार्शनिक तथा कल्पक हैं। अभिनवभारती में जिन जिन आचार्यों के मतों का उल्लेख आया है, उनका नव्यदार्शनिक भाषा से विशद व्याख्यान तो किया ही परन्तु उन मतों से उत्साहित होकर दो-तीन और दार्शनिक प्रक्रियाओं का प्रदर्शन किया है। उन्हीं के मार्ग से उनसे प्रदर्शित मतोंका

विश्लेषण करता हुआ मेरा मन दो-तीन और दार्शनिक प्रक्रियाओं के प्रदर्शन के लिए समुत्सुक हुआ। उनके अध्ययन और मनन का जो प्रभाव पड़ा, तथा गुरु कृपा से जो कुछ थोड़ी शास्त्रीय विवेचन-शक्ति प्राप्त है, उसके अनुसार इनके अनेक व्याख्याताओं के व्याख्यान में अनधिकार चेष्टा कष्ट दी हैं, अतः अपने विचारों का विद्वानों के समक्ष परिवेषण आवश्यक समझकर प्रयास कर रहा हूँ।

उसमें आलङ्कारिक मूर्धन्य श्रीमान् अभिनव गुप्त पादाचार्य के एक मत के व्याख्यान में भी व्याख्याता भेद से दो रीति निकल गयी हैं। दोनों में स्थायिभाव रस नहीं है किन्तु उसका आस्वाद रस है। यह समान माना जाता है तो भी कुछ भेद हो जाता है जैसे प्रथम व्याख्याता—

( १ ) सहृदयता सहकृत काव्यार्थ भावना से आवरणभङ्ग होने पर स्थायिभाव का सच्चिदानन्द के साथ सम्बन्ध का नाम आस्वाद है। वह सम्बन्ध विषय-विषयि-भाव होता है। संस्कृत में गोचरीक्रियमाणत्व लिखा है। 'स्थायिभाव को सच्चिदानन्द का विषय होना' यह उसका शाब्दिक अनुवाद हो सकता है। इसपर विद्वानों को यह भी सोचना चाहिए कि अभिनव गुप्त के ग्रन्थों में स्थायिभाव रस नहीं है, 'विमर्श रस है' इस अर्थ वाले संस्कृत के दो वाक्य मिलते हैं। क्या उनका इन प्रक्रियाओं के साथ समन्वय या विरोध है ? यह ठीक है कि पण्डितराज की यहाँ भाषा अद्वैतवेदान्त की है, प्रत्यभिज्ञा दर्शन की नहीं है। भाषा भेद होने पर भी वस्तु एक ही मालूम पड़ती है। भाषा भेद का भी कारण हैं कि नव्य-न्याय भाषा ने जैसे अद्वैत-वेदान्त को व्याप्त किया वैसा प्रत्यभिज्ञा दर्शन से सम्बन्ध नहीं कर पायी। विमर्श-स्वरूप के विषय में विचार करने पर आत्मा के साथ अन्य वस्तुएं भी रहती हैं। विमर्श रस है इसका तात्पर्य यह है कि स्थायिभाव का विमर्श रस है। मैं शकुन्तला विषयक रतिवाला हूँ ऐसी सामाजिकों की भावना विमर्श है। उस विमर्शका विषय रति स्थायिभाव है, इसीको भग्नावरण सच्चिदानन्द से गोचरी क्रियमाणत्व कहा गया है।

( २ ) स्थायी भाव से उपहित आत्मानन्द आकारवाली अन्तःकरणकी वृत्ति आस्वाद है; ऐसा दूसरा व्याख्यान है। इसीको पूर्वोक्त विमर्श कह सकते हैं। स्थायी

भाव रति आदि से उपाधिवाला आत्मा भासता है। इन प्रक्रियाओं में इस प्रकार की वस्तुएं हैं ? आत्म-चैतन्य ही प्रकाश है, उसका विषय-वस्तु के साथ सम्बन्ध होनेपर विषय का भान होता है, आवरण से आवृत्त वस्तु चैतन्य के साथ सम्बन्ध नहीं कर पाती, अन्तःकरणकी वृत्ति से आवरण का भङ्ग होनेपर चैतन्य सम्बन्ध से विषय का प्रकाश होता है। ऐसे आस्वाद के समय पांच वस्तुएं रहती हैं। १. रति आदि स्थायीभाव, २. आत्मानन्द, ३. स्थायीभाव और आत्मानन्द इन दोनों के आकार-वाली अन्तःकरण की वृत्ति, ४. आवरणभङ्ग, ५. स्थायीभाव रति आदि का आत्म-चैतन्यसे सम्बन्ध। पूर्वोक्त प्रथम व्याख्यान में पाचवां सम्बन्ध आस्वाद माना गया है। द्वितीय में दोनों के आकार वाली वृत्ति को आस्वाद कहते हैं। इन दोनों में आस्वाद ही रस माना जाता है।

(३) यद्यपि यह भी अभिनव गुप्ताचार्य के मत का व्याख्यान ही है, तो भी पण्डितराज के शब्दों द्वारा ऐसा मालूम होता है कि पूर्वोक्त दोनों व्याख्यानों में किन्हीं प्राचीनों का अनुरोध करना पड़ा हो। अनुरोध न करनेपर यह तीसरा व्याख्यान उचित है। इसमें आत्मानन्द को रस और आवरणभङ्ग को रसास्वाद कहा गया है। इसके वर्णन में **रसो वै रसः रसं ह्येवायं लब्ध्वा आनन्दी भवति** इत्यादि तैत्तरीय श्रुति में आत्मानन्द का रस शब्द से व्यवहार बताया गया है। इस प्रकार स्थायीभाव से उपहित आत्मानन्द रस है और आवरणभङ्ग रसास्वाद। इन तीनों व्याख्यानों में अभिनव गुप्त का मत मूल है। व्याख्या प्रणाली में ही भेद हुआ। इस मत में सहृदय सामाजिकों में जो साधारण नायिका-विषयक रति रहती है वही साधारण रति शकुन्तलाविषयक बनकर आस्वादित होती है। पहले साधारण नायिका विषय की अवस्था में स्थायीभाव है और शकुन्तलाविषयक बनकर रसास्वाद हो जाती है।

### भट्ट नायक मत

(४) निबन्धग्रन्थ इसके निरूपण में भोगभुज्यमानता आदि शब्दों का प्रयोग करते हैं। सांख्य का पुरुष कर्ता न होकर भी भोक्ता माना जाता है। भोग शब्द को देखकर सांख्य-सरणि के व्याख्याता भट्ट नायक हैं ऐसी रुढि चल पड़ी है। इसमें भी सामाजिक स्थायीभाव का ही आस्वाद है। स्थायीभाव से उपहित सत्त्वगुण के परि-

णाम सुख का साक्षात्कार भोग है, वही स्थायी भाव का आस्वाद है। आस्वाद और रस एक ही है। पहले मत में आत्मानन्द का वर्णन है, इसमें सत्त्वगुण परिणाम सुख का, इतना ही भेद मालूम पड़ता है। वास्तविक सोचा जाय तो असङ्ग अपरिणामी सांख्य पुरुष का भोग ही क्या हो सकता है। बुद्धि-वृत्ति में आरूढ़ विषयों का पुरुष-सम्बन्ध ही भोग होगा; वैसा पूर्व मत में भी है। पुरुष सच्चिदानन्द-रूप ही है। संस्कृत में रस्यते, भुज्यते, आस्वाद्यते इत्यादि प्रयोग समान अर्थ में भी होते हैं, इस-लिए ही भोग शब्द का प्रयोग हुआ है। अर्थ में भेद नहीं है। स्थायी भाव से उपहित आत्मानन्द-रूप रस इसमें फलित होता है। रसगङ्गाधर में इस प्रसङ्ग को लेकर **भोगो व्यक्ति** ऐसा कहा गया है। आत्मानन्द की अभिव्यक्ति उसका अर्थ हो सकता है।

इसके बाद अभिनेय दुष्यन्त आदि में रहने वाली शकुन्तला आदि विषयक रति का सामाजिक अनुभव करते हैं या आस्वाद लेते हैं ऐसा मत चल रहा है।

**भट्टलोल्लट मत**

( ५ ) इस मत में सामाजिक शकुन्तला विषयक अतीत और परोक्ष दुष्यन्त में रहने वाली रति का कैसे आस्वाद कर सकते हैं ? यह एक समस्या है। नैयायिकों के यहाँ ज्ञान लक्षणा सन्निकर्ष से एक अलौकिक प्रत्यक्ष प्रसिद्ध है। उसी प्रक्रिया का यहाँ आश्रयण किया जाता है। नाटक में जब नट दुष्यन्त का अभिनय करता है तब सहृदय सामाजिक उसमें तन्मय हो जाते हैं। अभिनय तथा वाक्यों से नट को ही दुष्यन्त समझने लगते हैं। यह दुष्यन्त शकुन्तला विषयक रतिवाला है ऐसा उनको प्रत्यक्ष होता है। नट रूप दुष्यन्त के साथ आँख का सम्बन्ध है ही, संवाद वाक्यों से शकुन्तला-विषयक रति का भी ज्ञान हो जाता है। वही ज्ञान लक्षणा सम्बन्ध आँख का बन जाता है। वही प्रत्यक्ष दुष्यन्त में रहने वाली रति का आस्वाद है। उस आस्वाद दशा में रति ही रस है। यहाँ रस गङ्गाधर में अलौकिक शब्द लिखा है। जो सन्निकर्ष का विशेषण है। किन्तु भाषा ग्रन्थों में तथा सरला संस्कृत टिप्पणी में अर्थ का अनर्थ किया गया है। यहाँ के ग्रन्थ का अभिप्राय समझने के लिए जिज्ञासुओं को अच्छे शास्त्र-निष्णात विद्वान् की सहायता लेनी चाहिए। कुछ दूसरे ग्रन्थों की टीका में तथा तदनुसारी हिन्दी पुस्तकों में इसको मीमांसक मतानुसारी लिखा गया

है। यह मीमांसक की अन्यथा ख्याति भी है। प्रक्रिया भी अन्यथा ख्याति की है। किन्तु यहाँ का रसगङ्गाधर लेख न्याय के अनुसार है। चित्रतुरंग आदि का दृष्टान्त भी भ्रमज्ञान की प्रक्रिया बताने के लिए है। जैसे घोड़े के चित्र को देखकर घोड़ा दौड़ रहा है वैसे ही दुष्यन्त का अभिनय करते हुए नट को देखकर शकुन्तला प्रेमी दुष्यन्त है ऐसी बुद्धि हो जाती है, इन सभी रसास्वाद प्रक्रियाओं में भ्रमबुद्धि का विलास है। इस मत में आनन्द के विषय में कुछ नहीं लिखा है। आगे के मत में विषय सौन्दर्य के अधीन आनन्द है ऐसा लिखा है, उसी प्रकार इसको भी समझता हूँ। आगे मैं विचार करूँगा जिसमें सभी प्रक्रियाओं से विषय-सौन्दर्य के अधीन ही आनन्द मानना ठीक है। आत्मानन्द के उदय का वर्णन तो रसास्वाद की प्रशंसा के लिए है।

(६) पहले मत में साक्षात्कार रसास्वाद है इसमें स्थायी भाव की अनुमिति रसास्वाद है, और आकार पहले के ऐसा है। यह भी विशेषता दार्शनिक प्रक्रिया के कारण है रसास्वादकी प्रक्रिया के कारण नहीं। कुछ दार्शनिकों का सिद्धान्त है कि एक ही विषय की प्रत्यक्ष सामग्री और अनुमिति सामग्री रहने पर अनुमिति ही होती है प्रत्यक्ष नहीं। यही शङ्कुक का मत है। दुष्यन्त का अभिनय और संवाद दुष्यन्त की अनुमति सामग्री है। वह प्रत्यक्ष से प्रबल होकर अनुमिति करा देती है। इसलिए यह दुष्यन्त शकुन्तला-विषयक रतिवाला है ऐसी अनुमिति हो जाती है। वही रसास्वाद है, अथवा सामाजिकों द्वारा शकुन्तला-विषयक रति का आस्वाद है। इस आस्वाद की दशा में दुष्यन्त में रहने वाली शकुन्तला रति रस है। अनुमितिरूप परोक्ष आस्वादवादी होने से इनकी निन्दा भी कुछ लोग करते हैं, उसको मैं वास्तविक नहीं मानता क्योंकि उस तरह के विचार करने वालों में शास्त्र की व्युत्पत्ति मुझे नहीं मालूम पड़ती। अनुमिति ज्ञान भी आनन्द के अनुभव में बाधा नहीं लाता, ऐसा विचार करने वाला हूँ। इस अनुमिति में दुष्यन्त आकार वाला नट पर्वत के समान प्रत्यक्ष है और पक्ष है। शकुन्तलाविषयक रति अग्नि के समान साध्य है, इस मत में विषय-सौन्दर्यवश आनन्द है, ऐसा स्फुट लिखा है।

(७) यह मत रसगङ्गाधर में 'नव्यास्तु' शब्द से उठाया गया है, अद्वैत-वेदान्त-प्रसिद्ध अनिर्वचनीय ख्याति इसमें अपनायी गयी है सहृदय सामाजिकों में

अनिर्वचनीय दुष्यन्त धर्मों का उत्पाद होता है, जिससे सामाजिक अपने को दुष्यन्त से भिन्न नहीं समझ पाते। सामाजिकों के मन में अनिर्वचनीय शकुन्तला रति पैदा होती है। दुष्यन्त में रही लौकिक शकुन्तला रति स्थायी भाव है, दुष्यन्त से अभिन्न हुए सामाजिकों के मन में अनिर्वचनीय पैदा हुई शकुन्तला रति रस है, सामाजिकों के आत्मानन्द के साथ रस का सम्वन्ध रस का आस्वाद है। मैं दुष्यन्त-शकुन्तला विषयक रतिवाला हूँ ऐसा सामाजिकों का अनुभव होता है। आत्मानन्द ही आनन्द रहा। जैसे शुक्तिखण्ड में रजत का ज्ञान होता है वैसी ही प्रक्रिया समझनी है, जैसे शुक्तिकात्व का ज्ञान न होकर सामान्य सम्मुख वस्तुरूप से शुक्ति का ज्ञान होता है, वैसे ही काव्यार्थ भावना के प्रभाव से सामाजिकों की चैत्रत्व, ब्राह्मणत्व, गौरत्व, स्थूलत्व आदि विशेषताएँ छिप जाती हैं तथा सामान्य नायक-रूप से अपने को समझने लगते हैं। तब विरोध न होने से दुष्यन्त के साथ अभिन्न हो जाते हैं। जैसे याद आया बाजार का रजत अनिर्वचनीय पैदा होकर प्रत्यक्ष होता है वैसे ही काव्य आदि द्वारा ज्ञात दुष्यन्त में रहने वाली शकुन्तला रति सामाजिक मानस-पटलपर अनिर्वचनीय पैदा होकर प्रत्यक्ष होती है। यहाँ मैंने सरलता लाने के लिए जानबूझकर उपाधियों का ही उल्लेख किया है। वास्तविक अद्वैत-दर्शन की प्रक्रिया में उपधेय चैतन्य में अनिर्वचनीय उत्पाद होता है। प्रत्यक्ष में विषय सन्निधान आवश्यक मानकर अनिर्वचनीय उत्पाद माना गया है। यहाँ की भी सरला टीका या हिन्दी अनुवाद विषय-परिज्ञान नहीं रखते।

( ८ ) यह मत रसगङ्गाधर में 'परे तु' करके वर्णित है। व्यञ्जनावृत्ति और अनिर्वचनीय ख्याति को न मानकर भी व्यवस्थाका दावा करता है, मैं दुष्यन्त शकुन्तला- विषयक रति वाला हूँ ऐसा सामाजिकों को अनुभव होता है वही रस और रसास्वाद भी है। इस अनुभव दशा में शकुन्तला रतिरस वनती है। इस मत में रस का आस्वाद यह व्यवहार लाक्षणिक है। इनका कहना है कि दूसरे आचार्य भी काव्यार्थ भावना के प्रभाव से स्वप्न तथा चित्र-अश्व के समान विभाव अथवा शकुन्तला आदि को रति का अनिर्वचनीय उत्पाद एवं नायक-नायिका का साधारणीकरण स्वीकार करते हैं, उस काव्यार्थ-भावना का सामर्थ्य कोई तौला नहीं है कि उससे इतना ही काम लिया जा सकता है अधिक नहीं होगा। किन्तु उसी काव्यार्थ भावना से

अतीत और दूरस्थ वस्तुओं का अभाव रहने पर भी वस्तु का प्रत्यक्ष हो जायेगा। वह प्रत्यक्ष मानस होगा। न्याय प्रक्रिया का आश्रयण करने पर ज्ञानलक्षणा सन्निकर्षकी अपेक्षा होगी। उसके लिए ज्ञान काव्य शब्द से माना जा सकता है। मूल ग्रन्थों में शकुन्तला-विषयक रति की प्रतीति को आनुमानिकी कहा गया है। पूर्वोक्त पञ्चम मत में न्याय-प्रक्रिया का ग्रहण है किन्तु यह शकुन्तला-विषयक रतिवाला दुष्यन्त है ऐसा नटका चाक्षुष प्रत्यक्ष है। प्रस्तुत मत में शकुन्तलाविषयक रतिवाला दुष्यन्त हूँ ऐसा सामाजिकों के आत्मा का प्रत्यक्ष है। आत्मा का मानस प्रत्यक्ष होता है। विषय का विद्यमान न होना अलौकिक प्रत्यक्ष का बाधक नहीं होता ऐसा कहा गया है। पञ्चम मत में अलौकिक सन्निकर्ष का मूल में उल्लेख है, यहाँ नहीं है किन्तु न्याय प्रक्रिया का अनुसरण करने पर वैसा ही मानना पड़ेगा। जिसमें मन का आत्मा के साथ लौकिक और अन्यों के साथ ज्ञान लक्षणा अलौकिक सन्निकर्ष होगा। और भी दर्शन प्रक्रिया का सम्बन्ध सम्भव है उसको छोड़ देता हूँ।

(९) रामानुज दर्शन में भ्रम ज्ञान नहीं माना जाता। शुक्ति में भी कुछ रजत के अवयव विशेष रहते हैं, इसीलिये उनकी चमक में कुछ सादृश्य है और शुक्ति में यह रजत है ऐसा ज्ञान हो जाता है। वह सर्वदा नहीं होता किन्तु जब दोषवश शुक्तित्व का ज्ञान नहीं होता तभी रजत ज्ञान होता है। वैसा ही काव्यार्थ भावना दोष नाटक स्थल में भी है। उससे नट-नटी में दुष्यन्त-शकुन्तला से भेद करने वाले धर्म तिरोहित हो जाते हैं। अतएव नायिका-नायक का भेद नटी-नट में नहीं मालूम पड़ता। नायक नायिका के अभिनय से अभेद बुद्धि हो जाती है जिससे नट में यह दुष्यन्त शकुन्तला विषयक रतिवाला है ऐसा सामाजिकों को प्रत्यक्ष होता है, वही रसास्वाद है। और बातें भट्ट लोल्लट की प्रक्रिया के सदृश हैं।

(१०) यहाँ भ्रमज्ञान नहीं मानने वाले भट्ट प्रभाकर की प्रक्रिया का उपयोग करना है। उनका अनुभव है कि दोष कार्य को रोकते हैं, उसे होने नहीं देते। ऐसा नहीं हो सकता कि उनसे नया विलक्षण कार्य हो। शुक्ति रजत भ्रमस्थल में लोभ-चमकाहट आदि दोषवश शुक्ति, रजत और उनके ज्ञानों में भेद का ज्ञान नहीं हो पाता रजत-ग्रहण में रजतार्थी की प्रवृत्ति पृथक दो ज्ञानों से होती है। वैसे ही नाटक-स्थल में

दुष्यन्त शकुन्तला रति आदि का परोक्ष ज्ञान शब्द से है। नट-नटी और उनके अभिनय का प्रत्यक्ष ज्ञान हैं। काव्यार्थ भावना, अभिनय-दर्शन में तन्मयता और रसिकता आदि दोषों से नायक-नायिका और उनकी चेष्टाओं से नट-नटी और अभिनय में भेदज्ञान नहीं हो पाता, उनके परोक्ष-अपरोक्ष ज्ञानों में भी भेदज्ञान नहीं होता, उन पृथक् दो ज्ञानों से ही दुष्यन्त-शकुन्तला रति और चेष्टाओं के प्रत्यक्ष दर्शन के समान सामाजिकों को आनन्द का अनुभव होता है। उस आनन्द-अनुभव के समय रति आदि स्थायिभाव रस होते हैं। वह अनुभव रसास्वाद है।

( ११ ) सभी वस्तु वासनामय हैं या बुद्धिरूप हैं जिसको बौद्धपदार्थ कहते हैं। सीप चाँदी के भ्रमस्थल में बौद्ध चाँदी का ही बाहर प्रत्यक्ष होता है। दूरस्थ चाँदी का प्रत्यक्ष नहीं होता जिसके लिए ज्ञानलक्षणा सन्निकर्ष मानना पड़े। जहाँ बाहर वस्तु सम्मुख नहीं है और प्रत्यक्ष होता हो वहाँ बुद्धिगत वस्तु का ही बाहर प्रत्यक्ष हो जाता है। यद्यपि यह आत्मख्याति नाम से बौद्धों की प्रक्रिया प्रसिद्ध हैं तो भी वैयाकरण सिद्धान्त लघुमञ्जूषा में अनिर्वचनीय उत्पाद के खण्डन के समय असत् का भी ज्ञान होता है ऐसा लिखा है। उसे वैयाकरण मत भी कह सकते हैं, दूसरा व्याकरण मत पीछे लिखा जायेगा। अभिनय व्यापार से तथा काव्य परिशीलन से दुष्यन्त-शकुन्तला-रति-चेष्टा आदि बुद्धि में स्थान पा जाते हैं। नट के अभिनय के समय बाहर अविद्यमान भी वे सब सामाजिकों को प्रत्यक्ष होते हैं। यह दुष्यन्त शकुन्तला-विषयक रति वाला हैं ऐसा सामाजिकों का प्रत्यक्ष रसास्वाद हैं प्रत्यक्ष होती हुई शकुन्तला रति रस हैं।

( १२ ) दूसरा वैयाकरण मत यह है। काव्य में आये हुए अथवा अभिनेता नट से प्रयुक्त दुष्यन्त, शकुन्तला, रमणी, राजा, गौर, दया, धीर, वीर आदि शब्दों का विशेष अर्थ में शक्तिज्ञान सम्भव नहीं है। विशेष अतीत और अप्रत्यक्ष है वे मालूम नहीं, उनमें शक्तिग्रह कैसे हो सकेगा ? अनुमान शब्द आदि प्रमाण सामान्य के उपस्थापक होते हैं विशेष के नहीं। कहीं-कहीं शाब्दिक प्रतीतियों में जो भेद मालूम होता है वह जातिगुण विशेषणों के भेद के कारण नहीं है। किन्तु शब्द को उपाधि या प्रवृत्ति-निमित्त बनाकर शक्तिग्रह हुआ है। दुष्यन्त पद का दुष्यन्त पदवान्,

शकुन्तला पद का शकुन्तलापदवान् अर्थ है। इसीलिए प्रतीतियों में भेद होता है। वास्तविक शकुन्तला-दुष्यन्त के गुण-कर्म तो अतीत और अज्ञान हैं; उनसे शाब्दिक प्रतीति में फरक कैसे हो सकता है। इन शब्दों से उन-उन शब्दों को विशेषण करके ही बोध होना है। दुष्यन्त-रमणी रूप से या कण्वकन्या रूप से ज्ञात शकुन्तला में धर्म-शास्त्र से बोधित 'यह अगम्य है' ऐसी बुद्धि हो सकती है और वह शकुन्तला सामाजिकों का विभाव नहीं बन सकती। जो शकुन्तला शब्द वाली शकुन्तला है उसमें शास्त्र अगम्य बुद्धि बना नहीं सकता, वह शकुन्तला विभाव बन सकती है; उसके रति का आस्वाद सामाजिक कर सकते हैं। भावना की विशेषता से सामाजिकों को अपने में दुष्यन्त पदवान् नायक भाव का भी परिज्ञान हो जाता हैं। उससे शकुन्तला रति का विषय मैं हूँ ऐसा सामाजिकों का मानस प्रत्यक्ष हो जाता है। वही रसास्वाद है। मानस प्रत्यक्ष दशा में शकुन्तला रति रस है। शब्द विशेषण वाला बोध आलङ्कारिकों को भी सम्मत है। रसगङ्गाधर के करणमाला प्रकरण में दूसरे प्रयोजन को लेकर वर्णन किया गया है। शब्द से होने वाला बोध भी किसी विषय को लेकर प्रत्यक्ष हो जाता है। यह आलङ्कारिक मान्य है। यह रस प्रकरण रसगङ्गाधर में **तत्वं वाक्यज बुद्धिवत्** इस शब्द से सूचित किया गया है। पहले का व्याकरण मत असत् का मान मानकर है। यह सभी ज्ञानों में शब्द विशेषण का भान मानकर है। इसका अन्त में भी स्वतन्त्र वर्णन किया जायेगा।

पण्डितराज जगन्नाथ ने अपनी विश्लेषण वाली बुद्धि से केवल अभिनव-गुप्त के मत को तीन प्रकार से विशद किया, और दो मतों का स्वयं उद्भावन किया। उससे समुत्साहित होकर मैंने भी चार प्रक्रियाओं का वर्णन किया। उसके बाद एक और प्रक्रिया दीखा रहा हूँ जिसकी थोड़ी सामग्री अभी मिल पायी है। अत्यन्त दृढ़ नहीं है। आगे जैसी सामग्री मिलेगी वैसा होगा इस दृष्टि से प्रस्तुत कर रहा हूँ।

(१३) स्वयं महेश्वर रूप जीव अविद्या के कारण अल्पज्ञान, परतन्त्रता, लघुता आदि धर्मों से आक्रान्त होकर संसारी बना हुआ किसी समय विद्या का उदय होने पर सर्वज्ञान, स्वतन्त्रता, विभुत्व आदि महेश्वर के गुणों का अपने में विमर्श करता है, मैं वही महेश्वर हूँ ऐसी प्रत्यभिज्ञा करता है, वैसे ही सामाजिक सहृदय काव्यार्थ भावना से अपने में दुष्यन्त आदि नायक गुणों का विमर्श करते हैं,

वह शकुन्तला-रति वाला दुष्यन्त मैं हूँ ऐसी प्रत्यभिज्ञा करते हैं। ऐसा विमर्श ही रस और रसास्वाद है, विमर्श विषय रति-स्थायिभाव है। आत्मानन्द के विमर्श से आनन्द है और जो-जो कठिनाइयाँ हों उनका निवारण काव्यार्थ-भावना की महिमा से किया जायेगा।

**इसमें कौन प्रक्रिया अच्छी है ?**

यह विषय साधारण लोकप्रसिद्ध नहीं है, कल्पनाकुशल कवि पण्डितों की कल्पनाओं की दौड़ान से भरा है। मोक्ष-प्राप्ति के लिए जैसा दार्शनिक कल्पना सोपान बनी है वैसे ही रसास्वाद के लिए कल्पना सोपान सुसज्जित है। उसमें कौन श्रेणी ठीक है यह वास्तविक नहीं कहा जा सकता। सभी आचार्य अपनी प्रक्रिया में प्रतिष्ठित हैं।

कुछ आलोचकों का लेख है कि प्रथम चार प्रक्रियाएं ठीक हैं क्योंकि उसमें सामाजिक रति का आस्वाद है। इससे सहृदय को ही रसास्वाद होता है यह सिद्धान्त समन्वित होता है। रस-आस्वाद का कारण वासनावाला ही सहृदय होता है। अनुकार्य दुष्यन्त आदि के रति का आस्वाद कराने वाली जो पाँचवें से लेकर आगे की प्रक्रिया है उसमें सामाजिक सहृदयता का उपयोग नहीं। इसलिए जरन्मीमांसकों को भी रसास्वाद का प्रसङ्ग आजायेगा, जिससे सिद्धान्त का व्याकोप होगा। लेकिन ऐसी आलोचना मुझे पसन्द नहीं। आगे की भी सभी प्रक्रियाओं की काव्यार्थ-भावनाभित्ति बनायी गयी है। काव्यार्थ-भावना का प्रकर्ष तन्मयता होगी, तन्मयता सहृदयता-रसिकता के बिना हो नहीं सकती, इसलिए निर्वासन व्यक्ति में रस के आस्वाद का प्रसङ्ग नहीं है।

इसी प्रकार प्रत्यक्षज्ञान ही आह्लाद का जनक है परोक्ष ज्ञान नहीं। जिसके मत में अनुमिति रूप परोक्ष ज्ञान रसास्वाद है ऐसा श्री शङ्कुक का मत अच्छा नहीं; यह आलोचना भी मुझे पसन्द नहीं। श्री शङ्कुक के मत में विषय सौन्दर्यवश आनन्द है, वस्तु ज्ञान की परोक्षता या अपरोक्षता से कुछ फरक नहीं पड़ता। अनुमिति भी अपने अंश में परोक्ष नहीं प्रत्यक्ष है, विषय अंश में ही परोक्ष है। सुन्दर वस्तु का परोक्ष अनुभव भी आनन्द का हेतु है, असुन्दर का प्रत्यक्ष ज्ञान भी सुखद न होकर दुःखद

बनता है। अपेक्षित पुत्र आदि की समुन्नति के प्रत्यक्ष ज्ञान की तरह कुण्डली के अनुकूल ग्रहों के अनुसार परोक्ष ज्ञान भी सुखकारी होता है। क्या कागजातों के परिशीलन से कोषसमृद्धि का परोक्ष ज्ञान राजा के आनन्द के लिए नहीं होता। पुत्रादि की अवनति की अनुमिति की तरह प्रत्यक्ष भी क्लेशकारक ही होता है। वस्तु सौन्दर्य के कारण आनन्द है ऐसा श्री शङ्कुक का कथन ठीक है। यदि कहीं सुन्दर वस्तु की अनुमिति आह्लादजनक नहीं मालूम पड़ती हो तो वहाँ अनुमिति में अप्रामाण्य ग्रहका प्रभाव समझना चाहिए। इसी रस-प्रकरण में पण्डितराज का **विभावादिषु य एव चमत्कारी स एव रसः**, विभाव, अनुभाव तथा सञ्चारिभावों में जो चमत्कारी है वही रस है, वचन है, इससे मालूम होता है कि रस बनने वाली वस्तु स्वभाव से सुन्दर और आह्लादक होती है ऐसा आलङ्कारिकों का सिद्धान्त है। विषय सौन्दर्य के अधीन आनन्द है, इसका उच्च स्थान है।

**यद्यपि अस्ति भाति प्रियं रूपं नाम चेत्यंश पञ्चकम् ।**
**आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततोद्वयम् ॥**

सत्, चिद्, आनन्द, रूप और नाम ये पाँच अंश हैं। इसमें तीन अंश ब्रह्म के हैं। उसके बाद के दो अंश जगत् के हैं। कहीं-कहीं माया के हैं ऐसा भी है। इस वेदान्त-सिद्धान्त के अनुसार सभी वस्तु ब्रह्म में अध्यस्त हैं, ब्रह्म ही एक आनन्द है, विषयों में ब्रह्मरूप आनन्द की ही अभिव्यक्ति होती है। आत्मानन्द सम्पर्करूप रसास्वाद मानना ठीक है, आत्मानन्द ही सामाजिकों को आह्लादित कर सकेगा, ऐसा किसी आलोचक का वर्णन है। तो भी विवेचन करने पर विषय-सौन्दर्यवश आनन्द ही ठीक बैठता है। इस वेदान्त-सिद्धान्त को ही देखो। ब्रह्म में अध्यस्त होने से आनन्द की अभिव्यक्तिवश वस्तु प्रिय हो तो सभी वस्तु का ब्रह्म में अध्यास है तब सभी प्रिय होना चाहिए, कुछ भी अप्रिय नहीं। ऐसा नहीं होता, किन्तु वस्तुओं का स्वभाव है कि किसी में आनन्द की अभिव्यक्ति होती है उससे वह वस्तु प्रिय होती ही है। जिसमें आनन्द की अभिव्यक्ति नहीं होती वह अप्रिय रहती है। दुःख का स्वभाव है कि उस में आनन्द की अभिव्यक्ति नहीं होती उससे वह सर्वदा अप्रिय ही रहता है। आनन्द की अभिव्यक्ति या आनन्द का अध्यास सुन्दर वस्तु में ही होता है, रति

आदि स्थायिभाव स्वभाव से ही सुन्दर हैं यही आनन्द के अनुभव का कारण है। सांख्य में सत्व परिणामसुख वस्तुसौन्दर्य से ही है। सत् से सुन्दर वस्तु बनती है।

पहले के तीनों मतों में स्थायिभाव का साक्षात्कार होता है अतः आत्मानन्द का उदय होता है। ऐसा हो तो घटादि वस्तुओं के साक्षात्कार में भी आत्मानन्द प्रकट होना चाहिए। ऐसा होने पर आत्मानन्द का अनुभव साधारण बन गया, काव्य अथवा काव्यार्थभावना का कुछ उपयोग नहीं हुआ, यदि कहा जाय कि घट आदि के साक्षात्कार के समय विषय प्रकाश के लिए चिदंश ही का प्राकट्य होता है आनन्द अंश का नहीं, काव्यस्थल में तो आनन्द की भी अभिव्यक्ति होती है तो प्रश्न होगा कि यह भेद क्यों होता है? काव्य अथवा काव्यार्थभावना से होता है ऐसा कहें तो पूछा जायेगा कि काव्य या काव्यार्थभावना क्या करती है? कहना होगा कि काव्य नूतन, अलौकिक शब्द अर्थ को उपस्थित करता है, काव्यार्थभावना उसके क्लेश, मोह के कारण अंशों को छाँटकर सुख–हेतु अंश को सामाजिकों के हृदय में उतारती है। इसीलिए निबन्ध-ग्रन्थों में लिखा है कि रज तम का अभिनव और सत्त्वगुण का उद्रेक होता है। इसी कारण काव्यसमर्पित, सहृदयों की भावना से सुसंस्कृत शोक और जुगुप्सा आह्लाद ही करते हैं क्लेश नहीं देते। अतः काव्य और काव्यार्थ-भावना का विलक्षण वस्तु के समर्पण में उपयोग है, वही विलक्षण वस्तु सुन्दर है, उसी का अनुभव या आस्वाद आह्लाद का कारण है। वस्तु-सौन्दर्य से आनन्द है यह सिद्ध होता है।

पूर्ववर्णित नव्य मत में भी वस्तुसौन्दर्य से ही आनन्द होता है ऐसा गूढ़ अभिप्राय भीतर छिपा है। स्थायिभाव के प्रत्यक्ष में आनन्द का उदय है ऐसा उसमें कहा गया है। उसका खण्डन पहले हो चुका हैं, यदि साक्षात्कार से आनन्द हो तो भट्टलोल्लट की तरह दुष्यन्त आदि में रहने वाली रति का सामाजिकों द्वारा प्रत्यक्ष से ही नव्य लोग क्यों नहीं सन्तुष्ट होते? अनिर्वचनीय विलक्षण रति के उत्पाद में क्यों प्रयास करते हैं? ऐसा प्रश्न होगा। अनिर्वचनीय का साक्षात्कार आनन्द-कारण है व्यावहारिक का नहीं यह भी नियत नहीं। अपनी ही चाँदी में सीप का भ्रम हो जाने पर कैसा क्लेश होता है—सोच सकते हैं। भ्रमस्थल में अनिर्वचनीय का भान

होता है। व्यावहारिक सुन्दर वस्तु से आनन्द होता है ऐसा सर्वजन प्रसिद्ध है। यही अभिप्राय हो सकता है कि लौकिक सामग्री से सम्पन्न दुष्यन्त आदि में रहने वाली लौकिक रति क्लेश-मोह के कारण अंशों से भी समन्वित होने से सभी सामाजिकों को आह्लादित नहीं कर सकती, किन्तु सुखमात्र अंशवाली नूतन पैदा होने वाली रति ही सबको आनन्दित कर सकती है। अन्य अनिर्वचनीय की अपेक्षा इसमें विशेष सौन्दर्य काव्यार्थ-भावना से जन्म पाने की वजह से है। यद्यपि वेदान्त-प्रक्रिया में प्रत्यक्ष के लिए विषय पास में होने की अपेक्षा से अनिर्वचनीय का जन्म अपनाया गया है, किन्तु यहाँ मूल में वह नहीं लिखा है। अतः सौन्दर्य के लिए वर्णन हो सकता है।

भट्टनायक के मत में भी वस्तु सौन्दर्य के बिना आनन्द हेतु दूसरा नहीं सिद्ध हो पाता। सांख्य प्रक्रिया के अनुसार सुख-दुःखाकार रूप से परिणत बुद्धि का पुष्कर पलाशवत्, निर्लेप, असङ्ग पुरुष के साथ ऐक्याध्यास रूप भोग दुःखभोग का साधारण है उससे काव्यस्थल का भेद नहीं हो सकता। रज और तमका अभिभव होकर, सत्त्व का उद्रेक होकर, सत्त्व गुण का परिणाम सुख और सुखों की तरह साधारण लौकिक ही है, उससे कोई भी विशेषता नहीं आती, किन्तु काव्य से समर्पित सुन्दर वस्तु का स्वभाव है कि रज-तम का अभिभव सत्त्वगुण को और तरल कर देता है। इसी प्रकार एकदेशी 'परे तु' मत में दुष्यन्त आदि में रहने वाली रति आदि का मानस-प्रत्यक्ष आनन्द का कारण बताया गया है, वह भी विषय-सौन्दर्य से ही आनन्द होता है, इसी में समन्वित हो जाता है। श्री शङ्कुक के प्रतिपक्षी भट्ट लोल्लट के मत में आनन्द का कारण नहीं बताया गया है, उसमें भी श्री शङ्कुक की तरह वस्तु-सौन्दर्य के अधीन आनन्द है यही मान्यता ठीक है।

**आनन्द का स्वरूप**

वेदान्तियों का साधारण रूप से दो प्रकार का आनन्द कहा जा सकता है। पहला आत्मारूप परम आनन्द जो अलौकिक है। दूसरा चित्त की वृत्ति अथवा धर्म जिसको सुख कहते हैं।

इस पर ऐसा कह सकते हैं--अनेक प्रकार का सुख मानने में गौरव है। विषय-प्रकाश के लिए चिदंश में सभी का अध्यास अवश्य है ही। आनन्द अंश में

भी अभ्यास मान लिया जाय तो आनन्द अंश की अभिव्यक्ति से सभी में प्रियता आ जायेगी। एक ही आत्मानन्द से सभी जगह प्रीति की सिद्धि हो जायेगी, अनेक सुख का स्वीकार व्यर्थ है। यदि कहें कि घट आदि के प्रत्यक्ष होने पर सभी जगह प्रीति नहीं हो पाती तो इस पर भी कहा जायगा कि आनन्द की अभिव्यक्ति का कारण दूसरा भी है। नैयायिकों की तरह यह मेरे लायक है, मुझे हो; ऐसी वासना या वृत्ति जहाँ होती है वहाँ प्रीति होती है और जहाँ यह मेरे लायक नहीं है, मुझे न हो, ऐसी वासना या वृत्ति होती है वहाँ द्वेष पैदा होता है अथवा दुःख होता है; प्रीति नहीं प्रकट होती।

इस पर भी कहा जाता है कि आनन्द को एक रहने पर भी उसका अभिव्यञ्जक अनेक मानने में गौरव है। घट आदि साधारण स्थल पर भी जिस आनन्द की अभिव्यक्ति होगी वह लौकिक ही होगा। अथवा यह विचार यहाँ आवश्यक नहीं, प्रसिद्ध, द्विविध सुख को मानकर व्यवस्था करनी है। पहले के तीन और नव्यमत में आत्मस्वरूप सुख का वर्णन है। वह भी रसस्थल में अन्य लौकिक सुख की अपेक्षा उत्तम होता हुआ भी लौकिक ही हैं। अतएव रसगङ्गाधर में 'सविधवर्ति' शब्द से ब्रह्मानन्द के सदृश बताया गया है। तथा 'विषय सम्वलित' शब्द से ब्रह्मानन्द से भिन्न कहा गया है।

सांख्यमत में बुद्धिसत्त्व का सुखाकार परिणाम भी लौकिक सुख ही है। दूसरे सुख भी वैसे ही हैं। वह चतुर्थ भट्टनायक मत में स्वीकृत है। सभी दर्शनों में कुछ कुछ आत्म स्वरूप में भेद होने पर भी सभी की आत्मानन्द और अनुकूल आत्मीय वस्तु में प्रियत्व को अभिव्यक्ति होती है ऐसा मैं सोचता हूँ, संस्कृत-हिन्दी पत्रिकाओं में प्रकाशित भी किया है। वेदान्त की तरह सांख्य-प्रत्यक्ष-प्रक्रिया में भी चैतन्य का सम्बन्ध है। अतः आत्मरूप आनन्द में वेदान्त-सांख्य प्रक्रिया का कुछ भेद नहीं है।

न्याय-मत में अनुकूल वेदना से पैदा हुआ आत्मा का विशेष गुण सुख लौकिक ही है। यह पञ्चम-षष्ठ-अष्टम मत में स्वीकृत है ऐसा उनकी प्रक्रिया के वर्णन से मालूम पड़ता है। इस प्रकार पहले के तीन मतो में अलौकिक और पाँच मतों में लौकिक आनन्द का परिग्रह हुआ। कहीं-कहीं इनमें अलौकिक शब्द का व्यवहार

वास्तविक नहीं किन्तु गौण है। काव्यार्थ-भावना में विलक्षणता के कारण वैसा व्यवहार हो जाता है। अलौकिक आनन्द अप्रसिद्ध है तथा उसका समन्वय भी नहीं होता।

वास्तव में पहले के तीनों मत में भी चित्तवृत्ति विशेष रूप लौकिक सुख का अनुभव मानना ही अच्छा है। मनः समाधि के विना आत्मानन्द-अनुभव में अधिकार नहीं है। शास्त्र और युक्ति का विरोध है। सहृदयों का हृदय रसास्वाद, आनन्द का अनुभव, इनकी विलक्षण सामग्री से उत्पाद, अन्य लौकिक सुखों से विलक्षणता और उत्तमता में साक्षी भले बने किन्तु सर्वथा परिचय के बिना आनन्द की अलौकिकता में कैसे साक्षी हो सकता है? पण्डितराज ने तो अभिनवगुप्त पादाचार्य का काव्य नाटकों में आत्मानन्द के अनुभव में अभिनिवेश देखकर श्रुति को भी उद्धृत कर दिया। किन्तु अनेक निबन्धकारों ने काव्यरस को, 'रस्यमानता' सार बताया है, रस्यमानता आस्वाद्यमानता या आस्वाद है। वह आस्वाद विजली की चमक की माफिक चञ्चल, अस्थिर है। श्रुतिओं से वर्णित आत्मरूप रस अनुभव है, अनुभाव्य या अनुभव का विषय नहीं, वह स्थिर कूटस्थ है। आनन्द रूप रस को पाकर स्वयम् आनन्द ही रहता है। आनन्द आकार वाली लौकिक वृत्ति से जीव आनन्दी होता है। लौकिक रसिकों को लौकिक ही आनन्द होता है, ऐसी सूचना श्रुति आनन्दी-पद से देती हैं। बस इतना दिग्दर्शन के लिए पर्याप्त है।

### ध्यान देने योग्य कुछ

अभी तक बतायी गयी सभी रसआस्वाद की प्रक्रियाएं समान रूप से आनन्द-अनुभव को धारण करती हैं, तथा भ्रमज्ञान के सहारे खड़ी है। किसी के कारण ज्ञानों में दूसरों के फलीभूत ज्ञान अथवा रस-आस्वाद में ही भ्रमत्व है। सहृदयता की सहायता से विकसित काव्य-अर्थ की भावना सभी में समान रूप से भ्रम की जननी बनी है। पहले के अभ्यस्त को भुला देती है और कुछ नया दिखा देती है। प्रथम आये हुए चार मतों में कारणज्ञान भ्रम हुआ है। क्योंकि ये आचार्य सामाजिकों को अपने-अपने रतियों के आस्वाद से रस-आस्वाद कराते हैं। सामाजिकों की रति आलम्बन अपनी-अपनी नायिकाएं हैं, काव्य-समर्पित शकुन्तला नहीं। एक

में गुण नहीं मानते, व्यवहार दशा में अध्यास के कारण व्यवहार मात्र मानते हैं, विशिष्टाद्वैतियों के यहाँ ज्ञानस्वरूप आत्मा में प्रकाश या प्रभा नाम का गुण मानते हैं, ऐसे गुण आत्मा में संभव नहीं होते, नैयायिकों की आत्मा में परिगणित कुछ गुण रहते हैं, माधुर्य आदि गुणों का वहाँ संभव नहीं, उनके यहाँ ज्ञान स्वरूप आत्मा भी नहीं है, दूसरे पक्ष में स्थायिभाव चित्त वृत्ति रूप है, और माधुर्य आदि चित्तवृत्ति के कारण हैं, इसलिये स्थायिभाव में माधुर्य आदि गुण नहीं रह सकते, 'दीप्त्यात्म विस्तृते:' इत्यादि से काव्य-प्रकाश में भी वृत्तिहेतुता स्वीकृत है। पण्डितराज जगन्नाथ तो वृत्ति गुण है, गुण में गुण नहीं रहता इसलिये गुणों को रस वृत्ति नहीं मानना चाहिये, और क्या कहें ?, अनेक आलङ्कारिक गुणों को रसवृत्ति मानकर भी ऐसे गुण का लक्षण करते हैं जिससे शब्द अर्थ में गुणों का रहना स्फुट होता है, इससे भामह ने ठीक कहा है कि यह गुण और अलङ्कार का विवेक गड्डलिया प्रवाह है।

**तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ॥**

"जो उस अङ्गी वस्तु का अवलम्ब करें वे गुण कहे गये हैं, कटक आदि के ऐसा अलङ्कार तो अङ्ग शब्दार्थ में रहने वाले हैं," 'ऐसा ध्वन्यालोक में काव्य-प्रकाश के ऐसा ही मालूम पड़ता है, तोभी उनका वैसा अभिनिवेश नहीं मालूम पड़ता, कहीं-कहीं गुणों के शब्दार्थवृत्तित्व का व्यवहार करते हैं, जैसे कि—'परं शृङ्गार एव परः प्रह्लादनो रसः', इस वृत्ति में 'प्रह्लादन का हेतु होने से' ऐसा विवरण किया गया है, प्रह्लादन स्वरूप रस में प्रह्लादन का हेतु नहीं रह सकता, इससे रस में अवृत्ति गुण की सूचना मिलती है, फिर 'श्रव्यत्वमोजसोऽपि साधारणम्' इस ग्रन्थ से शब्द वृत्ति ओओगुण कहा गया, शब्द में रहे विना श्रव्य नहीं हो सकता, 'वाच्य वाचक मात्राश्रयिणि' इत्यादि प्रथम उद्योत के शब्द से भी सूचित ही है, आगे भी विचार परम्परा में संघटनावृत्ति भी कह चुके हैं।

और भी—रीतियां गुणों के अभिव्यञ्जक हैं तथा शब्दार्थवृत्ति हैं यह काव्य-प्रकाश को भी अभिमत है, यथासंभव व्यङ्ग्य और व्यञ्जकों का सामानाधिकरण्य उचित है, जब रीतियां अङ्गवृत्ति हैं तो गुण को अङ्गी में वृत्ति बताना कैसे पसन्द

आता है, यदि गुण रस का अभिव्यञ्जक होने से रसवृत्ति माना जाय तो शब्द-अर्थ-रीति और अलङ्कार भी रस के अभिव्यञ्जक होते हैं इनको भी रसवृत्ति मानें कौन रोकता है ?, दीप्ति आदि चित्तवृत्ति का हेतु आत्मा में रहने वाला नहीं हो सकता, किसी दूसरी वस्तु को लक्ष्य करके चित्तवृत्तियां पैदा होती हैं, किसी प्रकार विवेक हो किन्तु अनेक गुणों को रसवृत्ति नहीं मानते, भामह वामन आदि अत्यन्त विरोधी हैं। उसी प्रकार काव्य-प्रकाश के अनुयायी साहित्य दर्पणकार तथा दर्पण की टीका करने वालों का अलङ्कार का लक्षण—

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ।**
**साक्षात् परम्परया वा रसाद्युत्कर्ष जनकत्वे**
**सति अनियतशोभातिशायिकाव्यधर्मत्वम् ॥**

अर्थ—शब्द और अर्थ के अस्थिर धर्म शोभाको पढ़ाने वाले रस आदि के उत्कर्ष को करने वाले अङ्गद आदि के ऐसा अलङ्कार कहे जाते हैं, साक्षात् या परम्परा से रस आदि के उत्कर्ष को करने वाले अनियत शोभा को बढ़ाने वाले काव्य के धर्म अलङ्कार हैं, इत्यादि लक्षणों का विवेचन समाप्त हुआ समझना चाहिये, पहले ही के ऐसा रीति और गुणों में अतिव्याप्ति है।

इस समय दो अवच्छेदकताओं से डरते हुए आलङ्कारिकंमन्यों से विशेष आदर के साथ सम्मानित **'रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्'**

अर्थ—रस आदि से भिन्न जो व्यङ्ग्य उससे भिन्न हो शब्द या अर्थ में रहने वाली जो चमत्कार की जनकता की अवच्छेदकता उसका अवच्छेदक अलङ्कार है। ऐसा कुवलयानन्द टीकाकार का लक्षण विचारमार्ग पर उतरता है, आलङ्कारिकों के ग्रन्थ में व्यङ्ग्य अलङ्कार के विषय में दो प्रकार का क्रम स्पष्ट मालूम पड़ता है, एक अलङ्कार ध्वनि, दूसरा गुणीभूत व्यङ्ग्यअलङ्कार, पहले अलङ्कार प्रधान व्यङ्ग्य है, कोई उपस्कार्य नहीं है, अलङ्कार को उपस्कारक होना जरूरी है, वास्तव में

अलङ्करण क्रिया न होने से ब्राह्मण श्रमण न्याय से अलङ्कार का व्यवहार है, दूसरे में वाच्य या दूसरे व्यङ्ग्य का उपस्कारक होने से अलङ्कार व्यवहार वास्तविक है, वह व्यङ्ग्य है, रस आदि व्यङ्ग्य से भिन्न व्यङ्ग्य है अतः अव्याप्ति होगी। जैसे काव्य-प्रकाश में--

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता॥

अर्थ—सोने के मृग के लोभ से मुग्ध बुद्धि से जङ्गलों में घूमा और सोने के झूठे लोभ से अन्ध बुद्धि वाला वस्तियों में घूमा, सीता हरण के बाद वियोग में पग पग पर हे वैदेहि, ऐसा रोता हुआ प्रलाप किया, और जरूर दो ऐसे वचन को पग पग पर रोता हुआ कहा, मैंने रामत्व तो पाया, कुश-लव पुत्रवाली सीता को नहीं पाया, और अच्छी धनिकता नहीं पाया, यह शब्द शक्ति व्यञ्जना द्वारा राम के साथ उपमान उपमेय भाव वाच्य अङ्ग बना है। चित्रमीमासां में उपमा प्रकरण के अन्त में अलङ्कार से उपमा ध्वनि का उदाहरण—

यैर्दृष्टोऽसि ललाटपट्टपतितप्रासप्रहारो युधि
स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान् दारयन्।
तेषां दुःसहकामदेहदहनप्रोद्भूतनेत्रानल-
ज्वालालीभरभासुरे पुररिपावस्तंगतं कौतुकम्॥

अर्थ—संग्राम में शत्रुओं को मारते हुए शिर पर पड़े प्रास अस्त्र के चोट वाले तेज रक्त के टपकने से लाल किया हुआ आगे भाग वाले तुम जिनसे देखे गये हो, उनका कठिन कामदेव के देह को जलाने के लिए उठी हुई आँख की आग की ज्वाला की पक्तिओं से प्रकाशमान शङ्कर में कुतूहल समाप्त हो गया यहां दूसरे कार्य को करने हुए का दूसरा कार्य का करना रूप विशेष अलङ्कार है, वर्णित रूप तुमको देखते हुए का वर्णित रूपवाले शिवजी का दर्शन हुआ ऐसा वर्णन है, अतः तुम पुररिपु के ऐसा हो ऐसी उपमा व्यङ्ग्य है, समासोक्ति और प्रस्तुत प्रशंसा व्यङ्ग्य ही हैं।

इसी प्रकार साहित्य दर्पण में भी आया कि दीपक और तुल्ययोगिता आदि में उपमा अलङ्कार व्यङ्ग्य है और वह गुणीभूत है, इत्यादि, कुछ प्राचीन गुणीभूत को भी ध्वनि मानते हैं किन्तु सर्वत्र नहीं, दूसरे व्यङ्ग्य की अपेक्षा गुणीभूत होने पर भी वाच्य की अपेक्षा प्रधान हो वहीं, जहां वाच्यार्थ का गुण व्यङ्ग्य अलङ्कार है वहां अलङ्कार ही है अलङ्कार ध्वनि नहीं है, रसगङ्गाधरकार तो दीक्षित के अव्यङ्ग्यत्व विशेषण के खण्डन के लिए व्यङ्ग्य उपमा का उदाहरण भी दिये हैं, रूपक प्रकरण में दीक्षित मत खण्डन में और संदेहालङ्कार को गुणीभूत कहे हैं।

और भी विशेष्य दल की दूसरी अवच्छेदकता उसी में जायेगी जिससे विशिष्ट शब्दार्थ की भावना चमत्कार को पैदा करती है जो शब्दार्थ का विशेषण है, उसमें शब्दार्थ से प्रधान व्यङ्ग्य अलङ्कार दूसरी ध्वनि का अंग वना हुआ लक्ष्य है, उस पर छाती पर हाथ देकर सोचे कि वह व्यङ्ग्य अलङ्कार चमत्कार करने में शब्दार्थ की अपेक्षा अपनी प्रधानता रखता है अथवा शब्दार्थ का गुण वन जाता है ?, दूसरा पक्ष है तो ठीक है उसमें लक्षण समन्वय होगा, प्रथम पक्ष में अवच्छेदकता उसमें नहीं जायेगी अव्याप्ति होगी, रीति और गुण में अतिव्याप्ति भी होगी। इसी प्रकार दूसरी अवच्छेदकता का अवच्छेदक सम्वन्ध नहीं दिया गया है, सभी अलङ्कार भिन्न-भिन्न सम्वन्धों से अवच्छेदक होकर उपस्कारक होते हैं, अनुगत कोई सम्वन्ध नहीं मिलता, इसलिये सम्वन्ध का निवेश नहीं होगा, शब्द और अर्थ के असाधारण धर्म में अतिव्याप्ति होगी, यदि ऐसा विचार करें कि विशेष्य विशेषण भाव में विनिगमक का अभाव है, गुरु धर्म से अवच्छिन्न दो कारणता की आपत्ति होगी, उसकी अपेक्षा लाघव मानकर शब्दार्थ ज्ञान और अलङ्कार ज्ञान को स्वतन्त्र कारण मानना अनुभव करें तो प्रायः इस लक्षण का प्राण ही चला जाता है, क्योंकि शब्दार्थ में विशेषण होकर अलङ्कार ज्ञान चमत्कार का कारण नहीं होता। इस रीति से अलङ्कार सामान्य का लक्षण नहीं है तो न हो, अनुगत एक लक्षण के विना भी उन-उन विशेष लक्षणों से ही व्यवहार वन जायेगा, लक्षण आवश्यक होने पर भी कवि समय सिद्ध अनुप्रास-उपमा आदि का अनुगम करके इनका अन्यतम अलङ्कार है ऐसा लक्षण बना लें, मुक्तावली आदि में प्रत्यक्ष आदि के लक्षणों के ऐसा अनुगत व्यवहार से सिद्ध अलङ्कारत्व जाति

को लेकर अनुप्रास, उपमा आदि में रहने वाली जो चमत्कार की जनकता का अवच्छेदक जाति उस जातिवाला अलङ्कार है, गुण की व्यावृत्ति करनी है और गुण तथा अलङ्कार साधारण जाति संभव है तो गुण आदि में अवृत्ति यमक और उपमा आदि में वृत्ति जो चमत्कार की जनकता का अवच्छेदक जाति उस जाति-वाला अलङ्कार है ऐसा लक्षण करना चाहिये।

भामह का नीचे लिखा अभिप्राय है—अच्छा कवि यदि कुछ अलौकिक वस्तु की भावना करके शब्दार्थ रचना में प्रवृत होता है वही रचा हुआ वाक्य सुन्दर अलङ्कृत काव्य होता है, स्वभावोक्ति नहीं मानते, यदि मानें तो गाय जाती है इत्यादि साधारण वाक्यों से व्यावृत्त कुछ अलौकिक इसमें है ही, माधुर्य और अनुप्रास आदि के विवेक में प्रयास नहीं करना चाहिये, किसी भी प्रकार चारुत्व का सम्पादन करना चाहिये, इति।

इसलिये फिर पहले से चलें तो बहुतों ने वक्रत्व का अतिशय अर्थ किया है, उसके अनुसार शब्दार्थ रचना का प्रयोजक जो चमत्कार जनक भावना उसका विषय अतिशय अलङ्कार है, जहाँ शब्द का परिवर्तन न सहने वाला अतिशय होगा वहाँ शब्दालङ्कार होगा, उससे भिन्न होगा तो अर्थालङ्कार होगा यह व्यवस्था होगी, आहार्य आरोप अतिशय है ऐसा श्री वैद्यनाथ सूरि कहते हैं, उच्चारण भेद से अथवा अर्थ के भेद से शब्दों का भेद है, उनमें अभेद का आरोप होता है, अथवा अर्थों में शब्दों के तादाम्य का आरोप होने पर शब्दालङ्कार होता है, अर्थों में परस्पर अनेक प्रकार का आरोप स्फुट रहता है, जहाँ खोजने पर भी कहीं अन्त तक आरोप मूल नहीं मिले वहाँ काव्यत्व ही नहीं है, यदि काव्य माने भी तो भी अलङ्कृत नहीं है ऐसा इसका सिद्धान्त है, यद्यपि कुछ शब्दालङ्कार रीतियों के सदृश मालूम पड़ते हैं, उनको प्रसिद्ध रीति विशेष मानें, अथवा दूसरी प्रकार की रीति ही मानें शब्दालङ्कार न मानें, ऐसा भी कोई मत है तो भी विस्तार के भय से उसकी परीक्षा छोड़ी जाती है।

दूसरों की व्याख्यान परम्परा के अनुरोध के विना विचार करने वाले स्वतन्त्र लोग कहते हैं कि—स्वच्छन्दोच्छलदच्छ इत्यादि काव्य प्रकाश के अधम काव्य में भी

कवि की भागीरथी भक्ति की अभिव्यक्ति में अभिनिवेश दीखता है, इस ध्वनि युग में व्यङ्ग्य सम्बन्ध के विना काव्य का सौन्दर्य तो दूर रहे काव्यता ही मानना अच्छा नहीं मालूम होता, गौणी वृत्ति से प्रतिपादन को वक्रोक्ति कहते हैं ऐसा बहुतों का व्याख्यान देखते हैं इस लिये उन स्वारस्यों से शब्द और अर्थ में रहने वाला व्यञ्जकत्व ही अलङ्कार है, यही भामह की भाषा का अभिप्राय है, वह यदि अनुप्रास और उपमा आदि को छोड़ कर व्यञ्जना रूप पड़ता है तो वैसा ही हो, व्यञ्जना प्रकार के भेद में उन उन विशेष अलङ्कारों का व्यवहार भी हो, व्यङ्ग्य अर्थ को लेकर सुन्दर काव्य का व्यवहार होने से उसमें अलङ्कारता अवश्य है ऐसा समर्थन भी करते हैं।

पहले वर्णित अतिशय के ऐसा उपमैषा शैलूवी पद्य से प्रतिपादित सादृश्य को भी मत विशेष या व्याख्या विशेष मानें तो उसके अनुसार उसका भी लक्षण बनाना चाहिये, जैसे कि शब्दार्थ रचना का प्रयोजक जो चमत्कार का जनक भावना उसका विषय सादृश्य अलङ्कार है ऐसा कहना चाहिये, इन दोनों को निर्दुष्ट बनाने की अपेक्षा होने पर और लक्षणों में जैसे दोष दिया गया है और वारण के लिये जैसा निवेश किया गया है उसका ऊहापोह स्वयं कर सकते हैं। उसको यहाँ छोड़ा जाता है।

## लक्षणों का निमाण

अव वामन के वचन का विवेचन करें तो जैसे शास्त्र ज्ञान शरीर को सुशोभित करता है वैसे इसके उत्कर्ष को करने वाले भी गुण शब्दार्थ की शोभा करते हैं वैसे ही अलङ्कार भी रस आदि का पोषक होता हुआ शब्दार्थ काव्य शरीर को सुशोभित करता है। इस प्रकार गुण और अलङ्कार दोनों शब्दार्थ की शोभा करने वाले हुए, किन्तु गुण से जो शब्दार्थ की शोभा उससे अलङ्कार द्वारा शोभा उत्कृष्ट होती है, इस रीति से गुण से होने वाली जो काव्य शोभा उससे अच्छी काव्य शोभा को करने वाले अलङ्कार हैं ऐसा लक्षण हुआ। उत्कर्ष या अच्छाई शोभा की अनुभव गम्य है शब्द से वर्णनीय नहीं हैं। स्वर्गप्राप्तिरनेन इत्यादि पद्य में ओजोगुण से अनुविद्ध भी प्रसाद गुण काव्य को थोड़ी शोभा करता ही है, दोनों अलङ्कार उस शोभा को बढ़ाते हैं। रीतियाँ गुणों से होने वाली शोभा में ही सहायक हैं, गुणों से होने वाली शोभा से विलक्षण शोभा को नहीं पैदा करती हैं इस लिये उनमें अति

व्याप्ति नहीं है, अङ्गी रसादि में भी अतिव्याप्ति नहीं क्योंकि शरीर की सजीवता और शोभा भिन्न वस्तु हैं, इसलिये सजीवत्व सम्पादक शोभा के आधायक नहीं हैं, यदि शब्दार्थ शरीर के शोभाधायक हैं तो अलङ्कार ही हैं अङ्गी वहीं ऐसा भेद कर लेना चाहिये, यदि सजीवत्व के सम्पादक भी शोभा के आधायक हैं ऐसा अनुभव हो तो अङ्गिभिन्न ऐसा विशेषण अलङ्कार लक्षण में जोड़ना चाहिये। किन्तु गुणीभूत व्यङ्ग्य दो प्रकार के हैं, एक अलङ्कार दूसरा वस्तु, उसमें यदि दूसरा रस आदि से भिन्न है तथा वाच्यार्थ का उपस्कारक होने से वाच्यार्थ की शोभा का आधायक भी है, उसमें अतिव्याप्ति होगी, उसके वारण के लिये वैद्यनाथ सूरि का दिया हुआ रस से भिन्न जो व्यङ्ग्य उससे भिन्न विशेषण कार्यकारी नहीं होगा। व्यङ्ग्य अलङ्कार में अव्याप्ति हो जायेगी, अलङ्कार भी वस्तु है इसलिये व्यङ्ग्य वस्तु से भिन्न ऐसा विशेषण भी नहीं दिया जा सकता, अलङ्कार भिन्न जो वस्तु व्यङ्ग्य उससे भिन्न भी नहीं कहा जा सकता, अलङ्कार के लक्षण में अलङ्कार का प्रवेश हो जाने से आत्माश्रय दोष हो जायेगा; अलङ्कार रूप से अलङ्कार का प्रवेश न करके अनुप्रास-उपमा आदि अन्यतम रूप से प्रवेश करने पर पृथक् लक्षण करना व्यर्थ हो जायेगा। तो भी इतना फरक करें कि अलङ्कार अव्यङ्ग्य होता हुआ भी शोभा का सम्पादक है, वस्तु तो व्यङ्ग्यतादशा में ही शोभा करता है, वस्तु की शोभाधायकता उसकी व्यङ्ग्यता का व्याप्य है, इस प्रकार शोभाधायकता का व्याप्य उसकी व्यङ्ग्यता होगी, अपनी शोभाधायकता का व्याप्य व्यङ्ग्यता वाली से भिन्न अथवा अपनी शोभाधायकता के व्याप्यता सम्बन्ध से जो व्यङ्ग्यतावृत्ति उससे भिन्न विशेषण दिया जायेगा, रसवद् आदि अलङ्कार व्यङ्ग्यता दशा में ही काव्य शोभा करते हैं और उनका संग्रह आवश्यक है तब रस आदि से भिन्न जो व्यङ्ग्यता वृत्ति उससे भिन्न ऐसा विशेषण दिया जायेगा, गुण भी व्यङ्ग्य हैं काव्य शोभा भी करते हैं, इसी विशेषण से गुणों की व्यावृत्ति सिद्ध हो जायेगी शोभा में गुण से होने वाली ऐसा विशेषण व्यर्थ है ऐसा न समझें रीति की व्यावृत्ति के लिये सार्थक समझा जाय, पहली काव्यशोभा पद से गुण और अलङ्कार दोनों से होने वाली शोभा लेने पर उस शोभा को बढ़ाने वाला अलङ्कार नहीं हुआ अव्याप्ति होगी ऐसा न समझें किसी शोभा को लेकर समन्वय हो जाने पर अव्याप्ति नहीं होगी। उस शोभा की व्यावृत्ति करनी ही हो

तो उस शोभा में स्वाभाव विशिष्ट विशेषण दिया जायेगा, स्व शब्द से अलङ्कार लेना है, उसका अभाव शोभाधायकतावच्छेदक सम्वन्ध से लेना है। जिस सम्वन्ध से जो अलङ्कार रहकर काव्य शोभा को पैदा करता है वह शोभाधायकतावच्छेदक सम्वन्ध कहा जाता है, वैशिष्ट्य सामानाधिकरण्य सम्बन्ध से है, जहाँ अभाव है वहाँ शोभा भी है। अलङ्कार ज्ञान शोभा का जनक है, स्वरूप से अलङ्कार नहीं, इसलिये अलङ्कार में रहने वाली शोभा की जनकतावच्छेदकता विषयित्व सम्वन्ध से अवच्छिन्न होगी, जनक और जनकतावच्छेदक दोनों में रहने वाले प्रयोजकत्व का निवेश होने पर अलङ्कारत्व में अतिव्याप्ति होगी, इसलिये अङ्गी से भिन्न रस आदि से भिन्न जो व्यङ्ग्यता वृत्ति उससे भिन्न होते हुए स्व से विशिष्ट अलङ्कार है ऐसा लक्षण कलित हुआ, वृत्ति का सम्वन्ध पहले कहा हुआ है, , वैशिष्ट्य दो सम्बन्ध से, स्वतादात्म्य और २ अपने अभाव से विशिष्ट जो गुण से होने वाली काव्य शोभा उससे अच्छी जो काव्य-शोभा उसकी जन्यता निरूपित जनकता की जो विषयित्व सम्वन्ध से अवच्छिन्न अवच्छेदकता सम्वन्ध है, यद्यपि चमत्कार से भिन्न कोई काव्य-शोभा नहीं मालूम पड़ती, चमत्कृति जनकता में उत्कर्षक कहा जायेगा ?, इसलिये चमत्कार से युक्त ही लक्षण अच्छा है ऐसा वहुतों का अनुभव है, इसी से कुवलयानन्द के टीकाकार चमत्कृति से युक्त ही लक्षण किये हैं, तो भी वामनाचार्य काव्यशोभा स्पष्ट कहे हैं, उसका सर्वथा परित्याग अच्छा नहीं है, सुन्दर काव्य चमत्कार करता है इस प्रतीति से चमत्कार जनकता से भिन्न सौन्दर्य मालूम भी पड़ता है, आगे चमत्कार युक्त-लक्षण का परिष्कार करना ही है इसलिये इसका विस्तार छोड़ता हूँ।

काव्य-प्रकाश के लक्षण का यह अभिप्राय है कि गुण अङ्ग की शोभा के द्वारा अङ्गी का अवश्य उपकार करते हैं, अलङ्कार तो अङ्ग की शोभा जरूर करते हैं किन्तु अङ्गी का उपकार सभी जगह नहीं करते, इसलिये वामन के ऐसा ही गण भी काव्य-रूप अङ्ग को शोभा के आधायक अवश्य इष्ट है, यदि गुण अङ्ग शोभा के सम्पादक नहीं होते, अङ्ग शोभा के कारण अलङ्कार ही होते तो अङ्ग शोभा का आधायक मात्र अलङ्कार का लक्षण हो जाता पूर्वार्ध व्यर्थ हो जाता, इस प्रकार अङ्गी के अङ्ग-शोभा का आधायक होते हुए कभी अपने से होने वाली शोभा के द्वारा अङ्गी का उपकार न

होना लक्षण है, तं सन्तम् इत्यादि ग्रन्थ के स्वारस्य से रस आदि रूप अङ्गी से विशिष्ट लक्षण होगा।

## ४ चौथा प्रकाशन ४५ अङ्क ३।९।५७

वैशिष्ट्य—अपना उपकारक जो अङ्गशोभा उसकी जन्यता से निरूपित जनकता की विषयित्व सम्बन्ध से अवच्छिन्न अवच्छेदकता उससे निरूपित जो अवच्छेदकता उस अवच्छेदकता वाला जो धर्म उस धर्म वाला होना, तथा अपने में रहने वाला जो शोभाधायतावच्छेदक धर्म उससे और विषयित्व सम्बन्ध से अवच्छिन्न, जो अवच्छेदकता उससे निरूपित जो जनकता उससे निरूपित जन्यता उस जन्यता वाली जो शोभा उससे होने वाले उपकार्यत्व के अभाववत्त्व सम्बन्ध से अपने (अङ्गी) में वृत्ति होना, इन दोनों सम्बन्ध से। पहले सम्बन्ध में अवच्छेदकता का अवच्छेदक अनुप्रासत्व-उपमात्व आदि का ग्रहण है। दूसरे सम्बन्ध के पहले स्वपद सेअलङ्कार लेना है और दूसरे स्वपद से रस आदि अङ्गी लिया जायेगा। रीति और गुणों में दूसरा सम्बन्ध न होने से अतिव्याप्ति नहीं होगी। जो अलङ्कार उस उदाहरण में अङ्गी का उपकारी नहीं भी है किन्तु कहीं किसी उदाहरण में अङ्गी का उपकारी है, उसमें भी अलङ्कारत्व या उपमात्व आदि धर्म लेकर लक्षण समन्वय हो जायेगा, जो अलङ्कार किसी भी उदाहरण में अङ्गी का उपकारी नहीं हुआ है उसके अलङ्कारत्व में प्रमाण नहीं है, रस-भाव आदि के विना भी व्यङ्ग्य वाच्य का उपस्कारक हो, अथवा सर्वथा व्यङ्ग्य सम्बन्ध न होने पर भी यदि उसको काव्य मानते हैं तो उसके अलङ्कार में अलङ्कार लक्षण का समन्वय हो जायेगा, जब कभी किसी उदाहरण में अलङ्कार से रस आदि अङ्गी का उपकार लेकर सभी अलङ्कारों में लक्षण समन्वय हो जायेगा, पहले के कहे गये दोष भी नहीं आयेंगे, कभी रस आदि अङ्गी का उपकारी वाच्य के शोभा को करने वाली वस्तु का धर्म गुणीभूत व्यङ्ग्य का भी धर्म वैसी जनकतावच्छेदकता से अतिरिक्त वृत्ति हो जायेगा अवच्छेदक नहीं होगा, उसको लेकर अतिव्याप्ति नहीं होगी, दूसरे विशेषण प्रवेश की आवश्यकता नहीं है। अङ्गी से होने वाली काव्य की शोभा दूसरी ही है, उससे कोई अङ्गी का उपकार नहीं होता इसलिये अङ्गी में अतिव्याप्ति नहीं होगी, जहाँ वीर आदि रस में माधुर्य

आदि शृङ्गार आदि में ओज आदि विपरीत गुण आये हैं वहाँ अपकृष्ट होने से रस आदि अङ्गी ही नहीं हैं, रस का अपकर्षक होने से दोष हो गया गुण ही नहीं रहने से गुण में अतिव्याप्ति नहीं होगी, यदि कवियों का शास्त्र का आश्रयण नियत नहीं है, अधिक स्फुट दूसरे कारणों के कौशल से अनुकूल गुण के नहीं रहने पर भी रस का परिपोष हो जायेगा, गुणों में रसों का अवलम्ब होना आवश्यक नहीं है, इसी को ध्वन्यालोक में कवि शक्ति तिरोहितत्व आदि से कहा गया है, तो भी जो जो गुण उन उन रसों के अनुकूल कवियों के आचरण में प्रसिद्ध हैं, वे वे गुण उन उन रसों के रहते रसों का परिपोष करते ही हैं, उस प्रकार काव्य-प्रकाश के वे ही अङ्गी पद से अभिप्रेत हैं जो गुण से उपस्कृत हैं, उससे गुण से विशिष्ट जो रस आदि रूप अङ्गी उससे विशिष्ट अलङ्कार हैं ऐसा परिष्कार है, पहला वैशिष्ट्य दो सम्बन्ध से, १. स्व-व्यङ्ग्यत्व, २. स्वव्यङ्ग्यत्व प्रकार वाली जो कविसमय की सिद्धि उसका विशेष्यत्व, दूसरा वैशिष्ट्य पहले कहे गये ही की तरह हैं, यदि गुण अङ्गी के ही उपकारक हैं, अङ्ग शोभा को नहीं करते ग्रन्थकार ने अङ्गी में अतिव्याप्तिवारण के लिये ही प्रथम दल को दिया है ऐसा सोचें तो अङ्गी वैशिष्ट्य के दूसरे सम्वन्ध का प्रवेश नहीं करना चाहिये।

श्री वैद्यनाथ सूरि के लक्षण में रस से भिन्न जो व्यङ्ग्य उससे भिन्न इस विशेषण की जगह बहुतों के सम्मत उपस्कारक ऐसा कहना ही पहले कहे गये दोषों के निवारण के लिये अच्छा है, वाक्य का तात्पर्य विषय जो अर्थ उसमें जो मुख्य प्रधानता उससे निरूपित अप्रधानता उपस्कारकत्व कहलाता है, ऐसे वर्णन से अलङ्कार के सम-शील उपस्कारकत्व के निवेश से आत्माश्रय आदि पड़ने वाले दोष नहीं पड़ेंगे, दूसरे दोष के वारण के लिये शब्द-अर्थ अन्यतर में रहने वाली जो अवच्छेदकता उससे निरूपित जो भावना में रहने वाली जनकता उससे निरूपित जो विषयित्व सम्वन्ध से अवच्छिन्न अवच्छेदकता उसका निवेश करना चाहिये, शब्दार्थ की अपेक्षा अलङ्कार की भावना जहाँ चमत्कार को पैदा करती है वैसी अवस्था में पहले दोष दिया गया है उसी दोष का वारण के लिये अन्यतर सम्बन्ध में यह दूसरा सम्वन्ध है, रीति और गुण में अतिव्याप्ति वारण के लिये रीतिविशिष्टभिन्न ऐसा विशेषण देना चाहिये,

वै० दो सम्बन्ध से, १. स्वतादात्म्य, २. स्व व्यङ्ग्यत्व अन्यतर सम्बन्ध से। इस रीति से उपस्कारक होते हुए रीतिविशिष्ट से भिन्न होते हुए शब्द और अर्थ से विशिष्ट अलङ्कार है, रीति का वैशिष्ट्य स्वतादात्म्य-स्वव्यङ्ग्यत्व अन्यतर सम्बन्ध से, दूसरा वैशिष्ट्य, १. अपने में रहने वाली जो विषयित्व सम्बन्ध से अवच्छिन्न चमत्कार जनकता की अवच्छेदकता उससे निरूपित जो शोभाधायकता के अवच्छेदक सम्बन्ध से अवच्छिन्न अवच्छेदकता, २. अपने में रहने वाली जो अवच्छेदकता उससे निरूपित जो भावनानिष्ठ जनकता की विषयित्व सम्बन्ध से अवच्छिन्न अवच्छेदकता, इन दोनों में एक सम्बन्ध से; दूसरी अवच्छेदकता शोभाधायकता के अवच्छेदक सम्बन्ध से अवच्छिन्न ली गई है, उससे शब्दार्थ वृत्ति धर्म में जो अतिव्याप्ति दी गई है उसका वारण हुआ, अलङ्कार जिन जिन सम्बन्धों से काव्य में रहकर शोभा करते हैं वे सम्बन्ध शोभाधायकता के अवच्छेदक होते हैं।

शब्दार्थ ज्ञान और अलङ्कार ज्ञान चमत्कार के प्रति स्वतन्त्र कारण हैं, विशेषण विशेष्य भाव से कारण नहीं हैं तब सहकारिकता से युक्त लक्षण करना चाहिये, शब्दार्थ भावना से सहकृत अलङ्कार ज्ञान चमत्कार को पैदा करता है ऐसा अभिप्राय है, उपस्कारक होते हुए रीति विशिष्ट शब्दार्थ भावना की सहकारिता से निरूपित जो विषयित्व सम्बन्ध से अवच्छिन्न चमत्कार जनकता की अवच्छेदकता वही अलङ्कारत्व है, तद्वान् अलङ्कार है, शब्दार्थ भावना के नहीं रहने पर अलङ्कार ज्ञान चमत्कार का जनक नहीं होता यही सहकारिता का अभिप्राय है, सव्यभिचार गदाधरी और उसकी टीका में सहकारिता का लक्षण विस्तार के भय से परिष्कृत नहीं करता हूँ, इति। इस पर विद्वानों की दृष्टि पड़ने पर मेरे विचार निर्दोष ही हैं ऐसा नहीं मानता, यदि इस प्रवृत्ति से बड़े विद्वानों के वचनों का विवरण हो जाय तो वह मेरी प्रवृत्ति सफल है, बड़े आचार्यों से पैदा हुई शैली बड़ी सूक्ष्म रूप में है, मेरे हृदय में सुख को पैदा करती है, व्याख्या के बिना इसकी स्फुटता नहीं हो पाती, इसका परिष्कार भाषा के द्वारा विवेचन है। इति। मेरा दूसरा लेख 'आलङ्कारिकाणां प्रस्थानभेदाः' है, उससे इसके विषय कुछ मिलते जुलते हैं। इति।

राजस्थान संस्कृत अकादमो ( संगम ) उदयपुर प्रकाशित–
स्वरमङ्गलाया द्वितीयवर्षद्वितीयाङ्के अप्रैल १९७६ ईशाब्दे प्रकाशितम्

# चित्रमीमांसाया अर्थचित्रम्

ध्वनिगुणोभूतव्यङ्ग्ययोर्निरूपणानन्तरं 'यदव्यङ्ग्यमपि चारु तच्चित्रम्' इति तृतोयं काव्यं संल्लक्ष्योदाहृत्य च 'शब्दचित्रमर्थचित्रमुभयचित्रम्' व्यभजत्। तत्र शब्दचित्रस्य नोरसतया निरूपणोगतां निषिध्य अव शिष्टोभयचित्रानुगततया अर्थचित्रं लिलक्षयिषुरलङ्कारान् निरूपयति, तेन अर्थचित्रत्वं सर्वालंकारान् व्याप्नुवन्तं धर्ममङ्गीकरोति इति प्रतिभाति।

तत्र किमर्थचित्रत्वमस्याभिप्रेतमिति विचारणोयमापतति। रसेऽलङ्कारेऽन्यवस्तुनि च व्यङ्ग्यत्वप्रयुक्त चमत्कारित्वापरपर्यायं चारुत्वं, परमर्थचित्ररूपेषु अलङ्कारेषु व्यङ्ग्यत्वप्रयुक्तचारुत्वभिन्नमपरं किमपि चारुत्वं, तथा च साधारणतो व्यङ्ग्यत्वप्रयुक्तचारुत्वभिन्नचारुत्ववत्त्वमलङ्कारत्वमिति निष्कर्षः प्रतिफलति। शब्दचित्रस्य व्यावर्तनीयत्वे व्यङ्ग्यत्वप्रयुक्तचारुत्वभिन्नचारुत्वकार्थत्वमिति बोध्यम्।

तत्रत्यचारुत्वस्य परिचायकं गुणरीतिचारुत्वव्यावर्तकं किमपि रूपं वर्णयितुं शक्यते न वा? वर्णनशक्येषु रूपेषु किं रोचते दीक्षिताय? इति अन्वेषणदृष्टिरपेक्ष्यते। तत्र दिक्प्रदर्शनं करोमि, यथारुचि च अभिलषितेन अध्वना आलोचकेन गन्तव्यम्।

( १ ) 'गुणालङ्कारविवेकप्रकारो गड्डलिकाप्रवाह एव' इत्यादि भामहभणितरोतिमनुसरन् दोक्षितो गुणालङ्कारविवेकं न रोचयते। अतएव अलङ्कारसामान्यलक्षणमनुक्त्वैव चित्रमोमांसायां कुवलयानन्दे च अलङ्कारविशेषान् लक्षयति समुदाहरति च। चित्रमोमांसायां ध्वनिगुणीभूतव्यङ्ग्ययोरन्यत्रास्माभिः प्रपञ्चः कृतः, 'अर्थ चित्रमोमांसा प्रसन्नविस्तोर्णा प्रस्तूयते' इत्यादिवचोभ्यामस्य गुणालङ्कारादिविवेकेऽभिनिवेशो न दृश्यते। अन्यथा गुणादिव्यावृतमलङ्कारसामान्यमपि लक्षयेत्। कुवलयानन्दटोकायामुपलभ्यमानमलङ्कारसामान्यलक्षणन्तु टोकाकर्तुरेव न तदभिप्रैति दोक्षितः। तादृशैरन्यैश्च लक्षणैर्न वस्तुतो

गुणादिविवेको घटते। अलङ्कारलक्षणान्यपि गुणान् अतिव्याप्नुवन्ति। वस्तुतो विवेकस्य असंभवादेव आचार्या गुणानां रसवृत्तित्वं शब्दार्थवृत्तित्वं चेति विवदन्ते।

(२) गुणालङ्कारविवेकं वामनप्रभृतयः विपश्चितो विदधत्येव। अलङ्कार-सामान्यम् अन्यैर्लक्षितमेव अथवा मास्तु अनुगतं किमपि अलङ्कारत्वं, व्यवहारस्तु अन्यतमत्वेनापि संभवति। प्रामाणिकैर्मम्मटादिभिराचार्यैर्गुणविविक्तस्य अलङ्कारस्य निरूपणे प्रयासः क्रियते, तदेव यथासंभवं दोषपरिहाराय परिष्करणीयम्। अतोऽलङ्कारसामान्यलक्षणमुपेक्ष्य विशेषलक्षणान्येव व्याकरोति दीक्षितः।

(३) अथवा अलङ्कारबीजं सामान्यं सादृश्यं दिदर्शयिषुः दीक्षितः—

उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान्।
रञ्जयति काव्यरंगे नृत्यन्ती तद्विदां चेतः॥

इति विलिख्य उपमोपमेयोपमादिषु कतिपयालङ्कारेषु साहश्यव्याप्तिं समनुगमय्य च—

तदिदं चित्रं विश्वं ब्रह्मज्ञानादिवोपमाज्ञानात्।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा।

इत्यादिना एकेन विज्ञातेन सर्वं विज्ञातं भवतीति श्रौतप्रकारेण ब्रह्मोपादानज्ञानात् विश्वविज्ञानमिव सादृश्योपमाज्ञानात् विश्वचित्रविज्ञानं प्रतीजानीते। तथा च यथाकथमपि सदृशवस्तुनः संघटनं सर्वालङ्कारव्यापीति अभिप्रैति। सादृश्यञ्च अलङ्कारसामान्यं तद्विशेषा एव अलंकारविशेषा इति सूचयति।

यद्यपि—वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः इत्यादिभामहः। वक्रोक्तेः काव्यजीवत्वस्याभिनिवेशिनि निखिलालङ्कृतिमूलताया वादिनि वक्रोक्तिजीविते कतिपयप्रकारान् सोदाहरणान् प्रदर्श्य सर्वनाम्ना शब्दार्थौ शरीरं परामृश्य

उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः॥
वक्रोक्तिरेव वैदग्धभङ्गीभणितिरुच्यते॥ इत्युक्तम्।

बहवो 'वक्रत्वमतिशयः' इतिरीत्या व्याचक्षते। अतिशयश्च आहार्यारोपः' इति वैद्यनाथसूरिनिष्कर्षादायाति।

विशेषप्रसंगे अतिशयस्य प्राणत्वसमर्थनमुखेन काव्यप्रकाशादौ

८

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविभिः कार्यः कोऽलङ्कारोऽनयाविना॥

इति भामहादिसम्मतिरुदाहृता। तथा च शब्दार्थरचनाप्रयोजकीभूता या चमत्कृतिजनिका भावना तद्विषयातिशयत्वमलङ्कारत्वमिति मतमायाति।

अलङ्कारान्तराणामप्येकमाहुः परायणम्।
वागीसहितामुक्तिमिमामतिशयाह्वयाम्॥

इति दण्डिवचोऽपि एतदनुकूलम्।

तथापि अतिशयस्थाने सादृश्यं समुपस्थाप्य अलङ्कारत्वं निर्वचनीयम्। ग्रन्थानामेकवाक्यतायै वक्रत्वं सादृश्यं वाच्यम्, अतिशयश्च आरोपः, स च सदृशे सदृशान्तरस्य प्रसिद्धः। तथा च अतिशयस्यापि मूलं सादृश्यमायाति, अतः सादृश्यस्यैव सर्वालङ्कारबीजत्वं युक्तम्। इत्यभिप्रायः।

(४) यद्वा–अलङ्काराणां विकासक्रममनुसरन्त इतिहासविवेचनाचणाः अलकाराणां वर्गीकरणं रोचयन्ते।

(१) सादृश्यमूलाः सामान्यतो भेदाभेदमुख्याः अभेदमुख्याः गम्यौपम्याश्रयाश्चेति त्रिविधाः—तत्र भेदाभेदमुख्या उपमा, उपमेयोपमा, अनन्वयः स्मृतिमान् च। अभेदमुख्येषु आरोपमूला अध्यवसायमूलाश्च द्विविधाः—रूपकम्, परिणामः, सन्देहः, भ्रांतिमान्, उल्लेखः अपह्नुतिः आक्षेपातिशयोक्तिः, आध्यवशायिक्यौ। गम्यौपम्याश्रयाश्च तुल्ययोगिता, दीपकम्, प्रतिवस्तूपमा, दृष्टान्तः निदर्शना, व्यतिरेकः सहोक्तिः, विनोक्तिः, समासोक्तिः, परिकरः, श्लेषः, अप्रस्तुतप्रशंसा, अर्थान्तरन्यासः, पर्यायोक्तम्, व्याजस्तुतिः, आक्षेपः।

(२) विरोधमूलाः—विरोधः, विभावना, विशेषोक्तिः अत्यन्तातिशयोक्तिः, असंगतिः, विषमः, समः, विचित्रम्, अधिकः, अन्योन्यः, विशेषः, व्याघातः।

(३) शृङ्खलाबन्धाः-कारणमाला, एकावली, मालादीपकम्, उदारः; सारः।

(४) तर्कन्यायमूलाः—काव्यलिङ्गम्, अनुमानम्।

(५) वाक्यन्यायमूलाः—यथासंख्यः, पर्यायः, परिवृत्तिः, परिसंख्या, अर्धोक्तिः, विकल्पः, समुच्चयः, समाधिः।

(६) लोकन्यायमूलाः—प्रत्यनीकः, प्रतीपः, मीलितः, सामान्यः, तद्गुणः, अतद्गुणः, उत्तरः।

(७) गूढार्थप्रतीतिमूलाः—संश्लेषमूलाश्च प्रथमं द्विविधाः सूक्ष्मः, व्याजोक्तिः वक्रोक्तिः, स्वभावोक्तिः, भाविकः, उदात्तः, रसवत्प्रेयउर्जस्विप्रभृतिः, भावोदयः, भावशान्तिः, भावसन्धिः, भावशबलता, गूढार्थप्रतीतिमूलाः। संश्लेषमूलाः—संकरः, संसृष्टिः।

एवं केचन कयाचिद् वासनया त्रिधा चतुर्धा वा विभजन्ते। अस्तु तत्तथा, नात्र विभागालोचनेऽभिनिवेशः, किन्तु एतद् सिध्यति यत् न समेषामलङ्काराणां सादृश्यमूलकत्वमतिशयमूलकत्वं वा। अतएव अप्पयदीक्षितोऽपि सादृश्यमूलान् अलङ्कारान् समुदाहृत्य 'एवमुक्तानेकालङ्कारविवर्तवतीयमुपमा' इति लिखन् निर्दिष्टकतिपयालङ्कारव्याप्तित्वं बहुविधालङ्कारप्राणत्वं वा सूचयति।

रसगङ्गाधरे अलङ्कारकौस्तुभे च प्रकृतप्रसिद्धेषु अतिशयोक्तिभेदेष्वपि अनुगतमतिशयत्वं नास्तीति निष्कृष्य कतिपयभेदानाम् अलङ्कारान्तरता व्यवस्थापिता। तथा च नातिशयमूलकत्वं समेषामलङ्काराणामिति बहूनामाचार्याणां सम्मतम्, इत्यभिमतं वा।

तत्र प्रथमे तावत् किञ्चिदुच्यते वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिरित्यादि प्राचीनालङ्कारलक्षणेषु वक्रत्वस्य निर्वचनमेव वक्रम्। वक्रोक्तिजीविते वैदग्ध्यं कविकर्मकौशलं तस्य भङ्गी विच्छित्तिस्तया भणितिः। विचित्रैवाभिधा वक्रोक्तिरिति विवरणं समुपलभ्यते। ततश्च प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधेति सारो निष्कृष्यते। तत्रापि अभिधा प्रसिद्धा वृत्तिरभिधानमात्रं वेति स्फुटं न प्रतिपाद्यते। वृत्तिपक्षे व्यङ्ग्यमुपस्कारकमलङ्कारं न व्याप्नोति। यथाकथञ्चिदभिधानमिति पक्षे व्यङ्ग्यौ गुणरसौ न व्यवच्छिनत्ति। स्वरूपतः कयाचिद्वृत्त्या वाऽभिधानं समेषामविशेषः। निर्वचनमन्तरा विचित्रशब्दोपादानमात्रेण वस्तु न स्फुरति। भङ्ग्यन्तरेणाभिधानमित्यादिशब्दैः बहव आलङ्कारिकाः पर्यायोक्तमेवालंकुर्वन्ति। एवमेव बहूनाम् अलौकिकभङ्गिनिवेशितत्वम्, गौण्या वृत्त्या प्रतिपादकत्वं वा वक्रत्वमिति वचनमपि न निर्णायकम्।

आलङ्कारिकाणामाचार्याणां विवेकप्रयासोऽपि न फलेग्रहिः। तत्र 'काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः' इति वामनवचो विक्रियते चेत् तत्पदेन गुणकृतशोभायाः परामर्शः शुद्धाया वा काव्यशोभायाः? प्रथमे—

'स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि।
अस्या रदनच्छदरसो न्यक्करोतितरां सुधाम्।

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्तकौ' इति काव्यप्रकाशवचसा खण्डनम्। तेन काव्यशोभाया जनकावपि विशेषोक्तिव्यतिरेकौ न गुणकृतशोभाया जनकाविति सूचनात्। तत्र काव्यप्रकाशकृता अन्यप्रकारेण खण्डयते मया तु अन्यथेति तु अन्यत्। रसरीत्योरतिव्यापनाच्च। न च संघटनात्मकाया रीतेर्न पृथक् शोभाधायकत्वमिति वाच्यम्? समीचीनशरीरावयवसन्निवेशेन शरीरशोभासम्पादनस्य प्रसिद्धत्वात्। तथापि शोभासम्पत्तयोऽपि रीतयो गुणान् अभिव्यञ्जयन्त्यो न गुणकृतशोभा अतिशाययन्तीति कथञ्चिदुच्येत तथापि रसातिव्याप्तिस्तदवस्थैव, रसेन जीवनेन सर्वविधशोभातिशयस्य सर्वैरङ्गीकर्तव्यत्वात्, वामनमते काव्यस्य रसात्मकत्वासंभवेऽपि रसपदार्थस्यावश्यं स्वीकारात्। द्वितीये तु गुणेऽतिव्याप्त्या गुणविवेकस्यासंभवात्। न च धर्मा गुणा इति स्फुटमेवोक्तम्। न हि अङ्गदादयः शरीरधर्मा इति वाच्यम्? सामान्यतो धर्मपदस्य वृत्तिमति प्रसिद्धत्वात्, विशेषनिर्वचनमन्तरा धर्मपदस्याकिञ्चित्करत्वात्। संयोगसमवायाभ्याम्, अयुतसिद्धत्वादिपदानामुपयोगेन च केषाञ्चन व्यवस्थापनं स्थवीयः, नियतार्थकानां तेषां पदानां स्वारस्यासंभवात्।

नापि गुणं विना काव्यं न संभवति अलङ्कारं विना तु न तादृगिति वासनया काव्यस्यासाधारणो धर्मो गुणस्य काव्यत्वव्यापकत्वं विवक्षितम्। प्रकृतार्थोपयोगिगुणाऽभावेऽपि स्वर्गप्राप्तिरित्यादौ काव्यत्वस्य पूर्वमुक्तत्वात्। एवम् 'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्' इति काव्यप्रकाशस्य जातुचित् पदेनापि गुणव्यावृत्तेरसिद्धिः।

'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः।' इत्यादौ गुणेषु सत्स्वपि काव्यव्यवहारस्य अनिष्टत्वात्। गुणविशेषा रसविशेषेषूपदिष्टा न तथाऽलङ्कारा इति कस्यचिद्विवरणमपि न विनोदयति रीतेः रसविशेषायत्तत्वात्। रसानुपयोगिनोऽलङ्काराः काव्यप्रकाशकृता समुदाहृता इति चेत्तादृशा गुणा अपि प्रदर्शिताः रसानुपकारकत्वस्य अलङ्कृतिषु स्वीकृतौ कस्य व्यावृत्तये 'उपकुर्वन्ति' इत्यादिविशेषणम्। अङ्गशोभाकारित्वमेव कथन्न पर्याप्तमासीत्? इति त्वन्यदेव।

तथैव—साहित्यदर्पणकृतस्तट्टीकाकृतश्च लक्षणम्—

शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्॥

साक्षात्परम्परया वा रसाद्युत्कर्षजनकत्वे सति अनियतशोभातिशायिकाव्यधर्मत्वम् इत्यादिविवेचितमवसेयम् । पूर्ववदेव गुणाद्यव्यावृत्तत्वात् ।

इदानीमवच्छेदकताद्वयेन बिभ्यद्भिरालङ्कारिकंमन्यैरत्यादरेण समाश्रितं श्रीवैद्यनाथसूरीणां लक्षणमप्यालोचनीयम्, तथा हि तद्ग्रन्थः—अलङ्कारत्वञ्च रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्तरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्, अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिशिष्टार्थज्ञानाच्च चमत्कारोदयात् तेषु लक्षणसमन्वयः । शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकताया विषयतयाऽवच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात् । रसवदाद्यलङ्कारसंग्रहाय व्यङ्ग्योपमादिवारणाय च भेदद्वयगर्भसत्यन्तोपादानम् ।

द्विविधो हि क्रमो व्यङ्ग्यालङ्कारविषये ग्रन्थेषु स्फुटं प्रतिभासते । एकोऽलङ्कारध्वनिः; द्वितीयो व्यङ्ग्यालङ्कारस्य गुणीभूतता । तत्र प्रथमे प्रधानतयोपस्कारकत्वघटितस्यालङ्कारत्वस्य उपस्कार्यस्याभावादसंभवेन ब्राह्मणश्रमणन्यायेनालङ्कारत्वव्यपदेशः । द्वितीये तत्र व्यङ्ग्यतायाः सत्त्वात् रसादिभिन्नव्यङ्ग्यभिन्नत्वं नास्तीत्यव्याप्तिः । यथा काव्यप्रकाशे—

'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना,
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः ।

चित्रमीमांसायामुपमाप्रकरणान्ते—'अलङ्कारेणोपमाध्वनिर्यथा—

यैर्दृष्टोऽसि ललाटपट्टपतितप्रासप्रहारो युधि,
स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान् दारयन् ।
येषां दुःसहकामदेहदहनप्रोद्भूतनेत्रानल—
ज्वालालीभरभासुरे पुररिपावस्तं गतं कौतुकम् ॥

अत्रान्यत्कार्यं प्रकुर्वतोऽशक्यान्यवस्तुकरणात्मको विशेषालंकारः । उक्तरूपं त्वां पश्यतो यथोक्तविशेषणविशिष्टपुररिपुदर्शनमासीदिति निबन्धनात्करणस्य क्रियासामान्यात्मना दर्शनेऽपि सद्भावाद्, यद्यप्ययमर्थो न वाच्यस्तथापि तस्मिन् कौतुकास्तमयवर्णनाद् व्यङ्ग्यः । तेन तदा त्वं तथाभूतः पुररिपुरिव स्थितोऽसीत्युपमा व्यज्यते ।

प्राचीनैर्यद्यपि क्वचिद्गुणीभूतस्यापि ध्वनित्वमङ्गीकृतं तथापि व्यङ्ग्या-न्तरापेक्षया यत्र प्रधानता वर्तते तत्रैव यत्र तु वाच्यार्थगुणीभूतत्वं तत्रालङ्कार-त्वन्तु तेषामपि सम्मतम्। रसगङ्गाधरकृतस्तु दीक्षितोक्ताव्यङ्ग्यत्वविशेषणं खण्डयन्तो व्यङ्ग्योपमालंकारस्योदाहरणमप्यदुः।

किञ्च विशिष्टदलीया द्वितीयावच्छेदकता शब्दार्थयोर्विशेषणीभूते तद्धर्मे प्रयाति। तदा असाधारणे शब्दधर्मे च कथं न प्रयायात्? उपस्कारकत्वं विशेषणत्वञ्चान्यत्। तेन वाच्यार्थस्यैवोपस्कारके वाच्यार्थापेक्षया प्रधाने व्यङ्ग्येऽव्याप्तिः। रीतीनां शब्दगुणानामर्थगुणानाञ्च शब्दार्थविशेषणतयैव चमत्कारितया तत्र द्वितीयाऽवच्छेदकता कथं न प्रसरेत्? शब्दालङ्काणामर्था-लङ्काराणाञ्च शब्दार्थयोर्भिन्नसम्बधेन वृत्तितया अनुगतस्य एकस्य सम्बन्धस्य निवेशासंभवात्। सम्बन्धान्तरेण शब्दार्थवृत्तिधर्मेऽतिव्याप्तिरपि। अलङ्कार-शब्दार्थयोर्विशेष्यविशेषणभावे विनिगमनाविरहात् गुरुधर्मावच्छिन्नकारणता-द्वयपरिहारेण अलङ्कारज्ञानं शब्दार्थज्ञानञ्च स्वतन्त्रमेव कारणमिति यदि कल्प्यते तदा प्राण एवापसरति अस्य लक्षणस्येति 'गुणालङ्कारविवेकप्रकारो गड्डुलिका-प्रवाह' इति भामहभणितिः सारवती।

२. द्वितीये चेत्थं वक्तुं शक्यते—न भामहस्य गुणालङ्कारविवेकासंभवेऽ-भिनिवेशः किन्तु गुणालंकारविवेको न कविकर्म किन्तु तटस्थस्य आलोचकस्य। किमप्यलौकिकं वस्तु भावयित्वैव सत्कविः शब्दार्थरचनायां प्रवर्तते। तदेव वाक्यरूपं काव्यं रचितमलङ्कृतं सुन्दरञ्च जायते। स्वभावोक्तिर्नाङ्गीक्रियतां, गौश्चलतीत्यादिवाक्यव्यावृत्तं सहृदयवेद्यं किमप्यलौकिकं वस्तु तत्रापि वर्तते इति वा वक्तव्यम्।

श्रीमद्वामनवचसस्त्विदं विलसितम्—भूषयति श्रुतं वपुरित्यादिरीत्या आत्मन उत्कर्षसाधका गुणालंकारा वपुर्भूषयन्त्येवेत्यनुभवेन रसस्य व्यङ्ग्यान्त-रस्य वा पुष्टौ पर्यवसायिनोऽपि गुणालंकाराः काव्यं शोभयन्त्येव। तत्र गुणेन या काव्यशोभा तदपेक्षया स्वरूपेण संख्यया वा उत्कृष्टा शोभा अलङ्कारैः सम्पाद्यते। तथा च गुणप्रयोज्या या काव्यशोभा तदुत्कृष्टशोभाप्रयोजकत्वम-लङ्कारत्वमिति लक्षणम्। स्वर्गप्राप्तिरित्यादौ ओजसानुविद्धोऽपि प्रसादोऽल्पीयसीं काव्यशोभां जनयत्येव,तान्चालङ्काराबुत्कर्षतः। रीतयस्तु गुणप्रयोज्यकाव्यशो-भाविलक्षणशोभां नार्जयन्तीति नातिव्यापनीयाः अङ्गिन रसादावपि नातिव्याप्तिः यतो हि शरीरशोभा सजीवत्वञ्च अर्थान्तरम्, सजीवत्वसम्पादकाश्च न शोभा-धायकाः, शोभाधायकत्वे तु अलंकारत्वमेव नाङ्गत्वमिति विवेकः। यदि

सजीवत्वाधायका अपि शोभाधायका इत्यनुभवस्तदा अङ्गिभिन्नत्वेनापि विशेषणीयं लक्षणम्। व्यङ्ग्यस्य अलङ्कारस्य विषये वामनस्याभिप्रायो विशेषतोऽन्वेषणीय आस्ते, नैतावति लघौ निबन्धे स्थानमर्हति। रसवदाद्यलङ्कारस्य व्यङ्ग्योपस्कारकस्य चालङ्कारस्य संग्राह्यत्वे अनुपस्कारकस्य च व्यङ्ग्यस्य व्यावर्तनीयत्वे 'रसभिन्नं यद् व्यङ्ग्यतावृत्ति तद्भिन्नत्वं देयम्। व्यङ्ग्यतादशायामेव यच्छोभाधायकं, स्वनिष्ठशोभाधायकताव्याप्यतासम्बन्धेन व्यङ्ग्यतावृत्तित्वं बोध्यम्, अन्यानि वस्तूनि व्यङ्ग्यतादशायामेव काव्यशोभाधायकानि, अलङ्कारास्तु वाच्यतादशायामपीति धियेदं विशेषणम्। रीतिव्यावर्तनाय गुणप्रयोज्येत्यादिविशेषणमपि सार्थकम्। न च काव्यशोभाया अलङ्कारोत्कृष्टाया अपि धर्तुं शक्यतया तदतिशायकत्वाभावादलङ्कारेष्वव्याप्तिरिति वाच्यम्? तदनुत्कृष्टशोभामादायैव लक्षणसमन्वयात्। अथवा स्वपदेन अलङ्कारान् प्रवेश्य स्वप्रयोज्यत्वाभावविशिष्टा काव्यशोभा निवेश्या। शोभा चमत्कृतिश्च अर्थान्तरम्। शोभा हि मानसचमत्कृतिजनिका शब्दार्थवृत्तिः। तथा च स्वरूपतोऽप्यलङ्काराः काव्यशोभाधायका न ज्ञायमाना एव। चमत्कृतावेव स्वज्ञानमपेक्षन्ते, अतोऽत्र विषयितासम्बन्धावच्छिन्नावच्छेकत्वादीनां प्रवेशस्य नावश्यकता।

एवमेव काव्यप्रकाशलक्षणस्यापि व्याख्या कार्या। गुणस्यापि काव्यशोभाधायकत्वमिष्टम्, तथा च अङ्गिनोऽङ्गशोभाधायकत्वे सति कदाचित् स्वप्रयोज्याङ्गशोभाप्रयोज्याङ्गिप्रत्युपकारकत्वाभावो लक्षणम्। अथवा तं सन्तमित्यादि स्वारस्येन रसादिरूपाङ्गिविशिष्टत्वमलङ्कारत्वम्। वैशिष्ट्यञ्च स्वप्रयोजकाङ्गशोभानिष्ठजन्यतानिरूपितजनकतानिरूपितविषयितासम्बन्धावच्छिन्नावच्छेदकतावच्छेदकधर्मवत्त्वम्। स्ववृत्तिकाव्यशोभाधायकतावच्छेकधर्मावच्छिन्नविषयित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितजनकतानिरूपितजन्यतावच्छोभाप्रयोज्योपकार्यत्वाभाववत्त्वसम्बन्धावच्छिन्नस्ववृत्तित्वम् इत्युभाभ्यां सम्बन्धाभ्याम्। रीतिगुणयोरुत्तरसम्बन्धाभावान्नातिव्याप्तिः। अङ्गिनोऽनुपकारिष्वपि अलङ्कारेषु तादृशजनकतावच्छेदकतावच्छेदकोपमात्वादिमादाय लक्षणसमन्वयः। येन कदाप्युपकारिता नासादिता तस्यालङ्कारत्वे मानाभावः। रसभावादि विनाऽपि व्यङ्ग्यवस्तुनः प्राधान्ये व्यङ्ग्यस्य वाच्योपस्कारकत्वे सर्वथाव्यङ्ग्यस्पर्शशून्यत्वे वा काव्यत्वाङ्गीकरणेऽपीदंलक्षणं समन्वेति। यदा कदाचित् कुत्रचित्प्रबन्धे तत्तदलङ्कारोपकृतिमद्रसादिध्वनिमादायैव सर्वालङ्कारेषु लक्षणप्रसङ्गात्।

यत्र वीरादौ रसे माधुर्यादिः शृंगारादौ चौजसो विपरीतगुणस्य निवेशस्तत्रापकृष्टतया रसादिरूपांङ्गित्वमेव नांङ्गीकुर्वते। अथवा रसापकर्षकतया दोषतया गुणत्वमेव नेति न गुणेष्वतिव्याप्तिः। यदि च न नियतशास्त्राश्रयणमेव कवीनाम्, तेन स्फुटतरकारणान्तरकूटकौशलेनानुगुणस्य गुणस्याभावेऽपि तत्तद्रसपरिपोषसिद्धौ न नियतं गुणेषु रसावलम्बितत्वं तदेव ध्वन्यालोके कविशक्तितिरोहितादित्यत्राभिहितम्, तथापि ये गुणास्तत्तद्रसानुगुणाः कविसमयसिद्धास्ते काव्ये निवेशितास्तदीयरससद्भावे रसादीनुपकुर्वन्त्येव। तथाचाङ्गिपदेन तेऽभिप्रेताः प्रकाशकृतां ये गुणैरुपकृता एव। तथा च गुणविशिष्टरसादिरूपाङ्गिविशिष्टत्वं परिष्कारः। स्वव्यङ्ग्यत्वस्वप्रकारककविसमयसिद्धिविशेष्यत्वाभ्यां प्रथमं वैशिष्ट्यम्। द्वितीयन्तु पूर्ववदेव।

श्रीवैद्यनाथसूरिलक्षणे रसभिन्नव्यङ्ग्यभिन्नत्वे सतीत्यस्य स्थाने बहुसम्मतमुपस्कारकत्वनिवेशनमेव पूर्वोक्तदूषणशोषणाय समीचीनम्। उपस्कारकत्वञ्च काव्यतात्पर्यविषयीभूतार्थनिष्ठमुख्यप्रधानतानिरूपिताऽप्रधानत्वम्। अतो नालङ्कारसमशीलतामादाय आत्माश्रयादिदोषोद्भावनम्।

रीतिगुणयोरतिव्याप्तिवारणाय स्वतादात्म्यस्वव्यङ्ग्यत्वान्यतरसम्बन्धेन रीतिविशिष्टभिन्नत्वं निवेश्यम्। अलङ्कारनिष्ठावच्छेदकता च शोभाधायकतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या। अर्थाद्येन सम्बन्धेन काव्ये वर्तमाना अलङ्काराः काव्यशोभां विदधति। शब्दार्थप्रधानीभूतालङ्कारभावना यत्र चमत्कृतिं जनयति तदर्थम् अन्यतरत्वघटकतया शब्दार्थनिष्ठावच्छेदकतया परम्परया निरूपिता या भावनानिष्ठचमत्कृतिजनकता तन्निरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकत्वन्निवेश्यम्। तथा च उपस्कारकत्वे सति रीतिविशिष्टभिन्नत्वे सति शब्दार्थान्यतरविशिष्टत्वमलङ्कारत्वं फलितम्। द्वितीयं वैशिष्ट्यं स्वनिष्ठा या विषयित्वसम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तन्निरूपितशोभाधायकतावच्छेदकसंबंधावच्छिन्नावच्छेदकत्वस्वनिष्ठावच्छेदकतया निरूपिता या भावनानिष्ठचमत्कृतिजनकता तन्निरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकत्वं एतदन्यतरसम्बन्धेन। स्वतन्त्रकार्यकारणभावपक्षे तु सहकारिताघटितं लक्षणं विधेयम्। शब्दार्थभावनासहकार्यलंकारज्ञानं चमत्कृतिं जनयतीत्यभिप्रायात्। तथा चोपस्कारकत्वे सति रीतिविशिष्टभिन्नत्वे सति शब्दार्थभावनासहकारितानिरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकत्वं फलितम्। शब्दार्थभावनायाः असमवधाने अलङ्कारज्ञानं चमत्कृतिं न जनयतीति सहकारितापदाभिप्रेतम्। सव्यभिचारगदाधरीतट्टीकास्थं सहकारित्वं विस्तरभयान्न परिष्क्रियते।

(३-४) तृतीयचतुर्थयोस्तु विशेषविवेचनामपेक्षितामेव सतीं श्रोतॄणां पाठकानां च पुर उपढौकयन्, विस्तरभिया न व्याकरोमि। स्मरन्तु श्रीमन्तः समये कदाचन कश्चित् कुर्वीत। विशेषाग्रहश्चेत् सादृश्यमूलकत्वमेव समेषामलङ्काराणां तृतीयरीत्या दीक्षिताभिप्रेतमवसेयम्। विरोधादिमूलकालङ्कारेष्वपि अन्ततः कथमपि सदृशवस्तुष्वेव कल्पितो विरोधादिः कवीनां चमत्कारीति गवेषणीयम्, मननीयम् मिलिष्यतीति विश्वसिमि।

अन्यच्च किञ्चिद् विस्तृतं गुणानां रसवृत्तित्वं शब्दार्थवृतित्वं वेति, विवेचनञ्च, मम अलङ्कारसामान्यलक्षणविचारः' इति निबन्धे वर्तते। सति सौविध्ये परीक्षणीयं समीक्षकैः। स च अयोध्यास्थसंस्कृतपत्रे साप्ताहिके २०१४ वैक्रमाब्दभाद्रकृष्णतृतीया प्रभृतिषु ४२-४३-४४-४५ अङ्केषु प्रकाशितो वर्तते।

इत्थमियं विविधविचारमांसलापि अर्थालङ्कारमीमांसापरा चित्रमीमांसा द्वादशालङ्कारपर्वपरिमिता बालैव जनकवियुक्तेति प्रतीयते। लघुकायापि प्राचीनानपि आलङ्कारिकान् सर्वान् समीक्षाकटाक्षेण आक्षिप्तहृदयान् विदधाना असाधारणवैभवा लक्ष्मीरिव युवानं जगन्नाथममोहयत्। रसैर्गङ्गाधरमसेचयत्। यदीयमेवं नोद्भविष्यत् चेद् रसगङ्गाधरो नोदैष्यदिति न तिरोहितम्, ग्रन्थद्वयं समानभावेन परीशीलयताम्, अर्द्धापीयमलङ्कारमीमांसकस्य मीमांसा धूर्जटेरर्धेन्दुरिव आलङ्कारिकानलङ्करोत्येव। अस्याः सहोदरोऽपि अवलोकनीयः, कुवलयानन्दः।

काव्यकुतूहलिनोऽस्य मीमांसकस्य कुवलयानन्दं विना पीयूषवर्षचन्द्रालोकं पश्यतो रसिकस्य कविकुवलयानन्दोऽयं चन्द्रालोकस्य शतालोकान् सपादान् कुर्वन् कुवलयस्याप्यानन्द इति तस्यापि कतिपयसौरभान् परिचयाय प्रस्तौमि। समासोक्तिप्रकरणे प्रस्तुतव्यवहारसादृश्याद् यत्राप्रस्तुतव्यवहारः प्रतीयते। तस्योदाहरणम्—उत्तररामचरितस्य श्रीरामोक्ति लिखति।

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरिताम्,
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदम्
निवेशः शैलानां तदिदमिति वुद्धिं द्रढयति ॥२।२७॥

अत्र वनवर्णने प्रस्तुते तत्सारूप्यात् कुटुम्बिषु धनसन्तानादि समृद्धयसमृद्धिविपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयते। इति-मूलम्। ग्रामे यत्र प्रागगृहादिस्तत्र क्षेत्रम्, यत्र क्षेत्रं तत्र गृहारामादिः। कुटुम्बिषु यः प्रागसमृद्धः सः इदानीं समृद्धः। यश्च समृद्धः सोऽसमृद्धः। एवं ग्रामवनयो-

वृत्तान्तयोः साम्यम्, तच्च साम्यम्, घनविरलभावविपर्यासशब्दाभ्यामुत्तिष्ठति इति स्फुटार्थः। अत्र पण्डितराजजगन्नाथस्य मुग्धकलह आकर्ण्यताम्। समासोक्तिप्रकरणे एनमुद्दिश्येत्थमस्य वचोविलासः—यत्तु कुवलयानन्दे सारूप्यादपि समासोक्तिर्दृश्यते, यथेत्यादिना ग्रन्थमुद्धृत्य तदसत् समासोक्तिजीवातोर्विशेषणसाम्यस्यात्राभावेन समासोक्तिताया एवात्रानुपपत्तेः। न च विशेषणसाम्यात् सादृश्याद्वा यत्राप्रस्तुतव्यवहारः, प्रस्तुतेन व्यज्यते सा समासोक्तिरिति लक्षणं निर्मास्यते इति वाच्यम्? समासोक्तौ हि प्रकृतवृत्तान्तोऽप्रकृतवृत्तान्ताभेदेन स्थित इति सर्वसम्मतम्। त्वयापि प्रकृतधर्मिणि अप्रकृतव्यवहार आरोप्यते" इत्युक्तम्। एवं स्थिते न ह्यत्र स्रोतोवृक्षादिविपर्यासौ धनसन्तानविपर्यासाभेदेन प्रतीयते, नापि वनादौ धनसन्तानविपर्यास इति। समासोक्त्यन्तरात् सत्यपि वैलक्षण्ये यद्यसौ शपथः क्रियते तदा अलङ्कारान्तरमपि समासोक्तिकुक्षावेव निक्षिप्यताम्। एवं तर्हि पुरा यत्र स्रोतः पुलिनमधुना तत्र सरिताम्' इत्यत्र कोऽलङ्कारः? अप्रकृतेन वाच्येन प्रकृतव्यवहाराभिव्यक्तिरूपायाः अप्रस्तुतप्रशंसायाः अत्रासंभवात् प्रकृतस्यैव वाच्यत्वादिति चेत्, साधु पृष्टमायुष्मता, समाधानमस्य सप्रपञ्चमप्रस्तुतप्रशंसाप्रकरण एव निवेदयिष्यामः। अप्रस्तुतप्रशंसाप्रकरणे तु—न तावदियम्, प्रस्तुतस्यैव प्रशंसनात्, नापि समासोक्तिः, तज्जीवातोर्विशेषणसाम्यस्य सकलालङ्कारिकसम्मतस्यात्राभावात्, न च विशेषणसाम्यप्रकार इव शुद्धसादृश्यमूलोऽपि तस्या एव प्रकारो वाच्यः, एकधर्मावलीढत्वमन्तरेणैवालङ्कारत्वे सर्वेषामेकालङ्कारत्वापत्तेः। व्यवस्थापकैस्तद्भेदताया अनुक्तेश्च अतएवालङ्कारसर्वस्वकारादिभिर्विशेषणवाचिशब्दसाम्यं संरक्ष्यैव समासान्तराश्रयेण सादृश्यमूलत्वं प्रदर्शितम् न तु तदुपेक्ष्येति चेद् उच्यते अप्रस्तुतप्रशंसैवात्रालङ्कारः। अप्रस्तुतस्य प्रशंसेति न तदर्थः किन्त्वप्रस्तुतेनेति, सा च अर्थात् प्रस्तुतस्यैव। एवञ्च वाच्येन व्यक्तेन वा अप्रस्तुतेन वाच्यं व्यक्तं वा प्रस्तुतं यत्र सादृश्याद्यन्यतमप्रकारेण प्रशस्यते साऽप्रस्तुतप्रशंसेति, न तु वाच्येनैव व्यङ्ग्यमेवेति। एवञ्च पुरायत्र स्रोत इत्यादिपद्ये अप्रस्तुतप्रशंसया भाव्यं न तु समासोक्तिः पण्डितराजविजृम्भितम्।

परं दीक्षितस्यैव मीमांसादाक्षिण्यं येन तन्मीमांसाश्रद्धाभाजो नाधिकेन प्रयासेन परेषां मोहमूलमस्य सूक्ष्मेक्षणञ्च सहसैवावबुध्यन्ते। तत एव तदनुवर्तिनः समर्थका विशेषेण दृश्यन्ते। तत्र गुरुमर्मप्रकाशे श्रीनागोजिभट्टमहोदयानां परिमितभाषिणां गम्भीरभावं वचनम् समासोक्तिप्रकरणे अप्रस्तुतप्रशंसायाञ्च—

चिन्त्यमिदं युक्त्यसत्त्वात्, तथाहि प्रशंसनमत्र किमुत्कर्षाधानं प्रतीतिमात्रम् वा? नाद्यः प्रतीयमानार्थानध्यारोपविषयेष्वप्रस्तुतप्रशंसोदाहरणेष्वव्याप्तेः। न हि ताटस्थ्येनावस्थितोऽप्यर्थं उत्कर्षंकर इति युक्तम्। नान्त्यः प्रकृतेऽभावात्। न ह्यत्राप्रस्तुतेन प्रस्तुतस्य प्रतीतिः वाच्यत्वात्, न चान्यतमत्वादिना अप्रस्तुतप्रशंसया संग्रहः समासोक्तेरेवान्यतरत्वघटितलक्षणकरणे बाधकाभावात्, अतिशयोक्त्यादिषु तथा क्लृप्तत्वाच्च इति। न ह्यत्र अप्रस्तुतं प्रस्तुतप्रत्यायने किञ्चित्करम्। अतोऽत्राप्रस्तुतप्रशंसाया नावसरः। अतिशयोक्त्यादिवदन्यतरत्वघटितं समासोक्तेरेव लक्षणं निर्मेयमिति भावः।

अलङ्कारकौस्तुभकर्त्ता विश्वेश्वरविपश्चित्तु पद्यमिदमस्पृशन्नपि अप्रस्तुत' प्रशंसामन्यतमत्वघटितां परिष्कुर्वन् तुल्यस्येति व्याकुर्वंश्च रसगङ्गाधरमेवानुकुर्वन् प्रकटीभवति।

अलङ्कारचन्द्रिकाकारश्रीवैद्यनाथसूरिस्तु 'यत्र प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाम्यबलादप्रस्तुतवृत्तान्तस्यापि परिस्फूर्तिस्तत्र समासोक्तिरलङ्कारः'। इति मूलविशेषणसाम्यबलात्पदेन 'विशेषणसाम्यगम्यसादृश्यगम्यमपि संगृह्णाति। स्वमूलग्रन्थस्य सारूप्यगमकत्वोपदर्शनं प्रधानं सादृश्यमादाय समर्थयते। मूलव्याख्यानमपि तथैव संगमयति। तथा च अन्यतरत्वनिवेशमन्तरैव दीक्षितसमर्थने प्रभवति। पण्डितराजः क्वचिद् दीक्षितलेखमुपरि उपरि प्लवते, खण्डनाय। एवं परिकरं बध्नाति येन दीक्षितवचसोऽकिञ्चित्करत्वमवभासते, परं मार्मिकाः यदि दीक्षितस्य मूललेखानपि आलोडयन्ति तर्हि एवं रत्नमुपलभन्ते येन पण्डितराजस्योपरिप्लवनं स्फुटं जायते। तादृशमेकं कुवलयानन्दविरोधिनं रसगङ्गाधरसन्दर्भमुपस्थापयामि ४६९ पृ० काव्यलिङ्गप्रकरणस्थ।

यत्तु 'समर्थनीयस्यार्थस्य काव्यलिंगं समर्थकम्' इति कुवलयानन्दकारो लक्षणमकार्षीत् तदपि सामान्यविशेषभावानालिङ्गितत्वविशेषणरहितं चेदर्थान्तरन्यासे स्यादेवातिप्रसक्तम्। यदपि—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्,
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारः शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥

मृग्यश्च दर्भांकुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन् माम्।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि॥

पूर्वत्र पादत्रयार्थोऽनेकवाक्यार्थरूपश्चतुर्थपादार्थे हेतुः। उत्तरत्र तु सम्बोधने व्यापारयन्त्य इति मृगीविशेषणत्वेनानेकपदार्थो हेतुरुक्तः। इत्यलङ्कारसर्वस्वकृतोक्तम्, अनुमोदितञ्च कुवलयानन्दकृता। तदुभयमसत्, अनुमानार्थान्तरन्यासविषये हेत्वलङ्कारो नेति तावत्सर्वसम्मतम्, अन्यथा तयोरुच्छेदापत्तेः, अयं चानुमानस्यैव विषयः। चतुर्थचरणे दैवरूपे पक्षे नायिकाङ्गसादृश्यदर्शनजन्यसुखासहिष्णुत्वरूपसाध्यस्य चरणत्रयवेद्येन तत्तदङ्गसादृश्याधारविघटकत्वेन हेतुना सिद्धेः स्फुटत्वात्। दैवं नायिकाङ्गसादृस्यदर्शनजन्यमदिष्टसुखासहिष्णु तत्तन्नायिकाङ्गसादृश्याधारविघटकत्वात्, मदीयशत्रुभूतयज्ञदत्तादिवत् इति च प्रयोगः। मृग्यश्चेति द्वितीयपद्ये यद्यपि सम्बोधने वक्तृनिष्ठे मृगीनेत्रव्यापारो ज्ञायमान उपपादकः। तथापि नासावुपपादकता अतिशेते इत्यनुमानालङ्कार एव युक्तः। इयांस्तु विशेषः—यतः पूर्वपद्येऽनुमितिर्गम्या। इह पुनर्बुध्यतेर्वाच्या। मृग्यो दक्षिणानिलसम्पर्कवत्यः दक्षिणाभिमुखविलक्षणनेत्रव्यापारवत्त्वात् इति च प्रयोगः वैलक्षण्यञ्चोत्पक्ष्मेत्यादिनोक्तं बोध्यम् इति। तथा चानुमानालङ्कारविषयत्वान्नेदं काव्यलिङ्गोदाहरणमित्यस्य भावः।

यत्त्वन्नेत्रसमानेत्यादिपद्यं कुवलयानन्दे प्रतीपोदाहरणतयोल्लिखितम् काव्यलिङ्गप्रकरणे परामृष्टम्। अन्योपपादकस्यापि काव्यलिङ्गस्य व्यङ्ग्यादिकमपि उपपादकं भवतीति प्रसङ्गे। देवस्य मदिष्टसुखासहिष्णुत्वस्य उपपादकं यदेकं वाक्यार्थरूपं तन्नायिकाङ्गसादृश्याधारविघटकत्वं काव्यलिङ्गम्, तस्यापि उपपादकानि पदार्थहेतुकानि इन्दीवरशशिहंसविशेषणानि इति परामर्शसन्दर्भः तथा च काव्यलिङ्गोदाहरणताऽस्याङ्गीकृता।

अर्थान्तरन्यासप्रकरणे कुवलयानन्दे पुनरपि परामृष्टम्। अर्थान्तरन्यासोदाहरणेषु कथन्न काव्यलिङ्गत्वमिति शङ्कायां समर्थनस्यापेक्षितत्वे काव्यलिङ्गम्। अनपेक्षितत्वेऽर्थान्तरन्यास इति प्राचां व्यवस्थावर्णनप्रसंगे यथा 'यत्त्वन्नेत्रसमानकान्ति' इत्यादि काव्यलिङ्गोदाहरणेषु समर्थनस्यापेक्षा न तथाऽर्थान्तरन्यासोदाहरणेषु इत्यादि प्रतिपादितम्। पुनश्चैतादृशप्राचीनव्यवस्थायां व्यभिचारमुपपाद्य काव्यलिङ्गघटकसमर्थ्यसमर्थकयोः सामान्यविशेषभावानालिङ्गितत्वमपेक्षणीयमित्यभिप्रायकमुपसंहृतम्। अनुमानवारणाय च काव्यलिङ्गप्रारम्भ एव व्याप्तिपक्षधर्मतादिसापेक्षनैयायिकाभिमतलिङ्गव्यावर्त्तनाय काव्यविशेषणम्' इत्युक्तम्। एवञ्च अनुमानार्थान्तरन्यासयोर्व्यावर्तनं मूल एव वर्णितम्। परं तन्न पण्डितराजेन स्फोरितम्। अलङ्कारकौस्तुभकारस्तु प्रकारान्तरेण व्यवस्थापयन् काव्यलिङ्गमेवाङ्गीकुरुते। मर्मप्रकाशस्तु

'एवमनुमानालङ्कारस्योपपादनेन विषयत्वव्यवस्थापने गम्योऽनुमालङ्कारो निर्विषयः स्यादिति अनुमानस्य बोधनेऽनुमानम्, गम्यत्वे च काव्यलिङ्गमित्यभिप्रायेण व्यवस्थापयते। तथा च काव्यमिति लिङ्गस्य यद्विशेषणं दीक्षितेनाभिहितं तस्याभिप्रायप्रदर्शनमनेन कृतम्। एवं मूलव्याख्यानेनैव सर्वं समाहितम्।

अस्य भूयानंशोऽलङ्कारसामान्यलक्षणे समयात इति पृथग्हिन्दी न दीयते।

●

संस्कृतरत्नाकरः अप्रैल १९६३ दिल्ली

# आलङ्कारिकाणां प्रस्थानभेदाः

अहं चिरात् कठिनान् एव शास्त्रीयविषयान् विदुषां पाठकानां पुर उपढौकयन् नीरसतयोद्वेजयामि यान् विषयान् पत्रिकायोग्यान् बहवो नानुमन्यन्ते, परं किं करवाणि? समयेऽस्मिन् शास्त्रस्य महती उपेक्षा, संस्कृतविद्यालयादिषु छात्रा एव न सन्ति, परोक्षाशकटी तु कथमपि प्रचलितमार्गस्य संरक्षणोद्देशेन सञ्चाल्यते, अल्पीयांसश्छात्रा हताशा अवरुद्धाःस्युरिति उत्तार्यन्ते, कतिपयेऽधीयाना अपि कदाचन सरलविषयेभ्यो गुरूनपेक्षमाणा अपि कठिनविषयेषु गुरूनुपेक्षन्त एव, कठिना एते स्वभावतो दुर्बोधा विषयाः, किमर्थमत्र मस्तिष्कमर्दनम्? अल्पीयसा घोषणेन आपाततः किञ्चिल्लेखनेन च कथमपि परीक्षां समुत्तरिष्यामः, किमत्र गुरुभ्यः क्लेशदानेन? इति दयालव इव गुरूनुपेक्षन्ते। नापि शास्त्रार्थस्य विदुषां चर्चा, बाह्यविषयेषु नक्तन्दिवं कलहायमानाः पण्डितान् योधयन्तश्च वृथा विद्वांसः शास्त्रेषु युध्यन्ते' इति निन्दन्तः शास्त्रार्थपरिपाटीमेव पारावारपारं प्राहिण्वन्।

मम च बाल्यादेव शास्त्रेष्वेव पतितस्य अन्यान् विषयान् चिरादुपेक्षमाणस्य का गतिरेतच्चर्चां विना? किञ्च विनोदवस्तु? विषयान्तरेषु च कथञ्चानधिकारचेष्टा? इति अवश्यपतितमेतत्।

तत्रापि कारणान्तरवशादलङ्कारशास्त्रमेव, इतश्च विमुक्तो विशेषतो दार्शनिकान् कदाचन व्याकरणस्य च विषयानुपहरिष्यामि।

(१) तत्र 'गुणालङ्कारविवेकप्रकारो गड्डलिकाप्रवाह एव' इति भामहभणितिमनुसरन् सम्प्रदायविशेषः, स च वस्तुतो गुणालङ्कारयोर्विवेकं न सहते, अन्येषाञ्च विवेकप्रदर्शनं साधु न संजानीते, स दोषमशक्यञ्च वदेत्, कदाचन

अलंकारसामान्यमलक्षयन्नेव चित्रमीमांसायां कुवलयानन्दे च अलंकार-विशेषांल्लक्षयन्न् अप्पयदीक्षितोऽस्य दीक्षितः स्यात्, चित्रमीमांसायाम् 'ध्वनि-गुणीभूतयोरन्यत्रास्माभिः प्रपञ्चः कृतः' 'अर्थचित्रमीमांसा प्रसन्नविस्तीर्णा प्रस्तूयते' इति लिखन् गुणालङ्कारविवेकं नाभिनिविशत इति प्रतिभाति प्राचां वक्रातिशयशब्दाभ्यामिव चित्रशब्देनैव अर्थालङ्कारान् निर्दिशति। केषाञ्चिदाचार्याणां गुणानां रसवृत्तित्वं वेति विवादोऽपि गुणालङ्काराविवेमूलकः स्यात्।

(२) गुणालङ्कारविवेकोऽस्ति, वामनाचार्यः प्राचीनोऽपि स्फुटं ब्रूते, भामहदण्डिप्रभृतयोऽपि लक्षणं पृथगेव विदधति, अप्पय्यदीक्षितोऽपि नाविवेक-सम्प्रदायदीक्षितः, अन्यैर्लक्षितं सामान्यमलङ्कारमुपेक्ष्यैव विशेषान् लक्षयति, अथवा अनुगतस्य धर्मस्याभावेऽपि अन्यतमत्वेन व्यवहारोऽस्य हृदि निहितः, प्रामाणिका मम्मटादयः गुणविविक्तानलङ्कारान् निरूपयन्ति, तमनुगच्छति नूतनो विश्वनाथः, तानि एव लक्षणानि दोषपरिहाराय परिष्करणीयानि, परिष्करोति च अलङ्कारचन्द्रिकाकारः श्रीवैद्यनाथसूरिः।

(३) अस्ति विवेकः परं समेषामलङ्काराणामनुगतमेकं बीजमपि वर्णनीयम्। यथा भामहादयोऽपि—

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥
अलङ्कारान्तराणामप्येकमाहुः परायणम्।
वागीशसहितामुक्तिमिमामतिशयाह्वयाम् ॥दण्डी॥

तथा-अप्पय्यदीक्षितः—

उपमैका शैलूषी सम्प्राप्ता भूमिकाभेदान्।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः॥१॥
तदिदं चित्रं विश्वं ब्रह्मज्ञानादिवोपमाज्ञानात्।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा॥२॥

(४) न संभवति समेषामलङ्काराणां मूलमेकम्, तृतीयप्रस्थानेऽपि वक्रत्वातिशयत्वसादृश्यमूलत्वे विवदन्ते परस्परमाचार्याः। अतएव अलङ्काराणां वर्गीकरणं रोचयन्ते। (१) केचन सादृश्यमूला अलङ्कारा वर्ण्यन्ते, तत्रापि केचन भेदाभेदमूला, अपरे अभेदमुख्याः, अन्ये गम्यौपम्याश्रयाश्च। (२) अन्ये विरोधमूलाः (३) शृङ्खलाबन्धाः, (४) तर्कन्यायमूलाः, (५) वाक्यन्यायमूलाः

इस अभिप्राय से उपसंहार किया गया है, अनुमान वारण के लिये काव्यलिङ्ग के प्रारम्भ में व्याप्ति-पक्षधर्मता आदि सापेक्ष नैयायिक के अभिमत लिङ्ग की व्यावृत्ति के लिये काव्यलिङ्ग में काव्य पद है, ऐसा कहा गया है, इस प्रकार अनुमान और अर्थान्तरव्यास की व्यावृत्ति मूल में ही की गयी है, लेकिन उसको पण्डितराज ने नहीं दर्शाया।

अलङ्कारकौस्तुभकार तो दूसरी रीति से व्यवस्था करते हुए काव्यलिङ्ग ही मानते हैं।

मर्मप्रकाश तो इस प्रकार उपपादन से अनुमान अलङ्कार की विषय व्यवस्था करने पर गम्य अनुमान अलङ्कार निर्विषय हो जायेगा, इसलिये अनुमान का वोधन होने पर अनुमान अलङ्कार और अनुमानगम्य होने पर काव्यलिङ्ग अलङ्कार ऐसी व्यवस्था करता है। उस प्रकार दीक्षित ने जो लिङ्ग का विशेषण काव्य पद दिया उसका अभिप्राय इससे दिखाया गया, ऐसी मूलव्याख्यान से ही सभी का समाधान दिखाता है।

और दूसरा विशेष विवेचन सभी विषयों पर मेरी रसगङ्गाधर संस्कृत टीका में है।



**फरवरी १९६३ देहली २५ वर्ष २ अङ्क संस्कृत रत्नाकर प्रकाशितः**

# आलङ्कारिकाणां कलहः

शुभावसरोऽयं कतीनाञ्चिद् दिनानां संस्कृतभाषाचर्चाया यद् भारत-शासन-सहायतया काश्चन संस्कृतपत्रिका मासिकादिरूपेण प्रकाशितुं प्रवर्तन्ते वर्तते च तत्र लेखरत्नानामावश्यकता। संस्कृतभाषाचर्चायाः प्राक्तनानि स्थानानि ह्रासमुपगतानि, प्रथमं संस्कृतस्याध्येतार एव न सन्ति, संस्कृतविद्यालयादीनि संस्कृतसंस्थानानि संस्कृतचर्चां कुर्वन्त्यपि संस्कृतगिरं प्रायो न स्पृशन्ति। अधुना संस्कृत विद्यालयादिषु संस्कृतेतरभाषाभिरन्यविषयाणामध्यापनमुपक्रान्तम्। यत्र अधिका अध्यापकाः संस्कृतानभिज्ञास्तत्र कथं नाम व्यवहारबहिष्कृता संस्कृतगवो छात्रादिषु सञ्चारं लभेत। प्रबन्धसमित्यादिषु

अन्यभाषाभाषिणां बाहुल्येन संस्कृतबहिष्करणमापतितमेव। एवं पत्राचारादिष्वपि। अतो ये संस्कृतगिरं परिचिन्वन्ति, पठन्ति, लिखन्ति च तेषां संस्कृतपत्रिकाभिरवश्यं सम्बन्धो भवेत्। ये संस्कृतपण्डिताः शास्त्रव्यसनिनच्छात्राणामभावे उदासते, संस्कृतपत्रिकास्वेव तैः शास्त्रचर्चा आरभ्यताम्। आधुनिकरिसर्चादिनामभ्यो न भेतव्यम्। बहुलं हि सामग्रीं तेऽधिकुर्वते, अद्यत्वे एकस्मिन् विषये नानाग्रन्थेषु भेदमावहन्ति यानि मतानि, तेषामेकत्र निबन्धे संयोजनमेव रिसर्चाभिधानं गवेषणमन्वेषणं वा। तेषु मतेषु गुणदोषयोः खण्डनमण्डनयुक्तीनाञ्च स्फोरणमेव आलोचनम्। अवश्यञ्चैतत् कर्तव्यं भवति, अन्यथा शास्त्रऋणान्न मुक्तिः। प्राक्तना हि आचार्याः प्राचीनान् ग्रन्थान् अधीत्य ततः प्राप्तप्रखरधिषणाः खण्डनमण्डनाभ्यां व्याख्यानेन च शास्त्रं वृद्धिमनयन्। समालोचनाभ्यश्च अधिगतमतिवैशारद्याः शास्त्रोन्नयनाय अधमर्णाः सन्तः शास्त्रप्रचारपथे बलात्प्रवर्तिताः स्मः। तत एव अन्यान् विदुषो निवेदयन् किमपि दिग्दर्शनमिवोपस्थापयामि। दुःश्रवणोऽप्ययं कलहः कोमलं सरसञ्च काव्यमादाय विवदमानानामालङ्कारिणां प्रणयकलह इव प्रियो भवितेति विचारेण प्रथममुपतिष्ठते। रसपिच्छिलेऽस्मिन् काव्यालोचनापथे निकषोपल इव कठोर एषां विचारक्रमः। अलङ्कारशास्त्रमिदं समेषां शास्त्राणां सम्बन्धं दधद् व्याख्यानभेदानां मतभेदनां खण्डनमण्डनानां च गहनं वनम्। भ्रान्ति-संशयप्रभृतयोऽस्यालङ्काराः। अन्यशास्त्रेषु विषयविवेचनादिषु च यत्नतः परिहेय आरोपो वक्रोक्तिविधया सर्वालङ्कारबीजतां धत्ते सोऽपि च आहार्यते। एतादृशे विषये मम सदोषा स्याद् विवेचना, किमाश्चर्यम्। दोषमत्र पश्यन्तो दोषज्ञा एव, किं नूतनम्।

तथा च रसगङ्गाधरे परिणामप्रकरणे इत्थमस्ति—"यच्चाप्पय्यदीक्षितैर्वैयधिकरण्येन परिणामे उदाहृतम्—

तारानायकशेखराय जगदाधाराय धाराधर-
च्छायाधारककन्धराय गिरिजासङ्गैकशृङ्गारिणे।
नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे
नागैः कङ्कणिने नगेन गृहिणे नाथाय सेयं नतिः॥

अत्र चिन्त्यते—तारानायकशेखरायेति पद्ये गिरिजासङ्गैकशृङ्गारिणि भवे कविकर्तृका नतिः इति नद्या आरोप्यमाणशेखररूपतयैवोपयोगो न स्वरूपेण, एवं दृशोऽपि तिलकरूपतयेति रूपकमेव शुद्धं भवितुमर्हति। ननु परिणामे विषयाभिन्नत्वेन विषय्यवतिष्ठत इत्युक्तम्। प्रकृते च विषयवाचकेभ्यो

नद्यादिशब्देभ्यः परस्यास्तृतीयाया अभेदार्थकत्वात् शेखरादेश्च तदन्वितत्वात् कथं नात्र परिणाम इति चेत् न, विषयाभिन्नत्वेन विषयिणो भानेऽपि विषयात्मना प्रकृतानुपयोगाद् इति ।

ताराानायकश्चंद्रः, धाराधरेत्यस्य मेघश्यामलकन्धराय नीलग्रीवायेत्यर्थः। गिरिजासङ्गेन एकः शृङ्गारी, तस्मै । तेन "नद्या शेखरिणे" इत्यादिना समानता । गिरिजागङ्ग एकः शृङ्गारोऽस्यास्तीति विग्रहे तु न कर्मधारयान्मतुबर्थीयेत्यादिन्यायविरोधोऽपि स्यात् । नद्या शेखरिणे—इत्यादौ धान्येन धनवान्-इत्यादाविव एकदेशान्वयिन्यभेदार्थे तृतीया; नद्यभिन्नशेखरशालिने—इत्यादिरीत्यार्थः, द्विः समानार्थंशेखरपदोपादानमुद्वेजयतीव— इति पदव्याख्या ।

भगवति भवे गिरिजासङ्गैकशृङ्गारित्वं नतिप्रयोजकम्, शृङ्गारित्वस्य अङ्गानि भूषणानि नद्यादीनि भूषणतया शृङ्गारित्वं पोषयन्ति, नद्यादिविषयाणां भूषणस्वरूपविषयिशेखरादितया प्रकृतोपयोगः । विषयिरूपेण प्रकृतवाक्यार्थे उपयोगे रूपकम्, विषयिणो विषयात्मना प्रकृते उपयोगे परिणाम इति व्यवस्था । अत्र विषयिणि शेखरादौ नद्यादिविषयाणामभेदस्य तृतीयार्थतया भानेऽपि विषयिणः शेखरादेर्नद्यादिरूपेणोपयोगाभावान्न परिणाम इति गद्यभागार्थः । अत्र शृङ्गारित्वं नतेः प्रयोजकमिति कवेरभिप्रेतम्, अन्यथा शृङ्गारित्वस्य तदङ्गभूषणादीनाञ्च वर्णनमनुपयुक्तं स्यात् । परमैश्वर्यव्यञ्जकस्य जगदाधारकत्वस्येव विराजः स्वरूपवर्णनपरतया प्रसिद्धगङ्गादिवर्णनेनैव परिसमाप्तेः । किञ्च तथा सति प्रसिद्धशिवशरीरवर्णनपरं पद्यमिदं कवेर्नूतनकल्पितपदार्थानामुपयोगं नावहेत्—इति पण्डितराजस्य हृद्गतोऽभिप्रायः प्रतिभाति ।

अस्योपरि गुरुमर्मप्रकाशकृतां श्रीनागोजीमहोदयानां मनीषामहिमा विलोक्यताम् पाठकैः—'इदं वैयधिकरण्यं रूपकेऽपि दृश्यते इत्युक्त्वा तारानायकशेखरायेत्युदाहृतम्, तत्र को दोषः ? किञ्च नद्या शेखरिण इत्यंशे विषयात्मतयैव प्रकृतोपयोगाभावात् परिणामाभावेऽपि वाच्यमार्थं वा रूपकमपि न वाच्यम्, उपमानप्रतियोगिकाभेदस्योपमेयेऽभानात्, किंच शृङ्गारितोपपादकं शेखरादीत्याद्यपि अयुक्तम्, 'नारायणेनार्स्त्रणे' इत्यस्य तदुपपादकत्वाभावात्, किन्तु नमनीयतापादकशिवनिष्ठोत्कर्षबोधकानीमानि विशेषणानि, तदुपपादकता च शेखरस्य नदीतादात्म्यापत्त्येति परिणाम एवायम् । शेखरस्य नीचजनसाधारणत्वात्, अत एवास्वरसाद् 'द्विर्भावः पुष्पकेतोरि' त्यादि पद्यान्तरमुदाहृतं तैः; तस्मात् यच्चेत्यादि कुत्र परिणाम इत्यन्तं चिन्त्यमितिबोध्यम्; इति गुरुमर्मप्रकाशः ।

परिमितभाषणशीलानामेषां व्याख्यानसापेक्षाणि वचनानीति किञ्चित्स्फोरयामि–चित्रमीमांसायां सत्यपि परिणामप्रकरणे वैयधिकरण्यरूपकस्यैवेदं पद्यमुदाहरणम्, तथैव च तत्र लिखितमिति परिणामस्य खण्डनं रूपकस्य मण्डनञ्च विदधता पण्डितराजेन व्यर्थं प्रलपितम्, न अप्पय्यदीक्षितमते दूषणमभिहितमिति 'को दोषः' इत्यनेनाभिदधाति, इदानीन्तनचित्रमीमांसायां मर्मप्रकाशाभिप्रायक एव पाठः, तत्र पण्डितराजसविधे रसगङ्गाधरधृत्त एव चित्रमीमांसापाठः, नागेशभट्टसविधे तदुद्धृतः पाठ इति व्यवस्था। अथवा अनयोरन्यतरेण केनचित् परखण्डनाय विडम्बना कृता, रसगङ्गाधरकृतखण्डनं गुरुमर्मं प्रकाशञ्च दृष्ट्वा केनचिदर्वाचीनेन तथा पाठः परिवर्तितो वेत्यादिषु न पतासि, यथा वा यस्मै रोचतां तथा कल्प्यताम्, परं पाठकल्पनयैव न शास्त्रार्थः परिसमाप्यते। उक्त पद्ये परिणामो रूपकं? अप्पय्यदीक्षितस्य किमभिप्रेतम् इत्याद्यालोचनीयमास्ते। नागेशमहोदयस्तु संशयमेवोपस्थापयति, पाठप्रदर्शनेन दीक्षितस्य रूपकमभिप्रेतं सूचयित्वा उभयोः खण्डनेन परिणामं समर्थयते।

'नद्या शेखरिणे' इत्यादौ उपमेयनद्यभेदस्य उपमाने शेखरे भानम्, न तु उपमानशेखराभेदस्य उपमेयनद्यामिति रूपकमपि न संभवतीति अभानादित्यन्तेनोच्यते, नद्याः शेखरे विशेषणत्वात् संबन्धे विशेषणप्रतियोगिकत्वस्य स्वाभाविकत्वात्, भासमानसम्बन्धप्रतियोगित्वेन प्रकारत्वस्य न्यायग्रन्थे व्यवस्थापनाच्च। नतिप्रयोजकं शृङ्गारित्वमिति 'किञ्च शृङ्गारी' त्यादिना खण्डयतिनारायणास्त्रस्य शृङ्गारितायामुपयोगाभावात् न शृङ्गारित्वाङ्गतया नद्यादिभूषणानामुपादानं कवेरभिप्रेतम्, अपितु अस्त्रस्य अस्त्र्यधीनतया नारायणस्य भवाङ्गतया वर्णनद्वारा शिवस्य परमैश्वर्यरूपोत्कर्षबोधकत्वम्, मध्ये कस्यचिदेव शृङ्गाराङ्गतया वर्णने प्रक्रमभङ्गेन अव्युत्पन्नकवित्वप्रसङ्गात्। जगदाधारत्वस्य नीलग्रीवत्वव्यङ्ग्यविषादत्वस्य च एवमेव शृङ्गारितायां नोपयोगः। शेखरस्य नीचजनसाधारणतया नदीशेखरतयैवोत्कर्षसिद्धेः, तथा च विषयिणः शेखरादेर्विषयनद्यात्मनैवोपयोगात् परिणामालङ्कारस्योदाहरणं जातम्। एतावता रूपकप्रतिपादकस्य रसगङ्गाधरस्य स्वकल्पितपाठानुसारिण्याश्चित्रमीमांसायाश्च खण्डनं पर्यवसितम्; तत्र चित्रमीमांसा-प्रतिष्ठारक्षणाय अतएवास्वरसादित्युच्यते।

ननु श्रीकृष्णस्य विष्णोरतिशयितशृङ्गारितया यथोत्कर्षः पोष्यते, तथा प्रकृते भवस्यापि सर्वोच्चशृङ्गारितया–उत्कर्षः पुष्यताम्। अतो विष्णोर्नैकशृंगारितया व्यतिरेकगर्भत्वसूचकमेकपदं सार्थकम्, शृङ्गारितयैव च शेख-

रादेरुपादानम्, अन्यथा नदीनागादिधारितामात्रपर्यवासानेन भूषणविशेषवाचकानां शेखरादीनामुपादानं व्यर्थम्, अधिकदोषदुष्टं च स्यात्, इति चेत् तथान्वये आकांक्षाविरहात्, यथा गिरिजासङ्गैकशृङ्गारिणे इत्यादि नाथायेत्यत्र साकांक्षं तथा 'नद्या शेखरिणे' इत्याद्यपि, तथाविधशृङ्गारित्वविशिष्टे नाथे नद्या शेखरिणे इत्यादेर्निराकांक्षत्वात्। ननु भवतु नाम प्राथमिकोऽभिधावशगस्तथा बोधः, परं पश्चात्तनो वैयञ्जनिको बोधः शृङ्गाराङ्गशेखरादिविषयकः केन वार्यताम् इति वाच्यम्, तथोत्कर्षाऽसिद्धेः, तथाहि गङ्गाधारितया यथोत्कर्षस्तथा न नीचजनसाधारणशेखरितयेत्यनुभवः, तथा च शेखरस्य गङ्गायां विशेषणत्वेनैव वैयञ्जनिकबोधश्चमत्कारी, तेन च शेखरस्य नद्यात्मनैवोपयोगात् परिणाम एव पर्यवसानम्।

अत्रैव प्रकरणे पश्चाद्रसगङ्गाधरे प्रकृत्यर्थानुयोगिकाभेदं तृतीयार्थं मत्वा उपमानप्रतियोगिकाभेदसम्पादनद्वारा रूपकसमर्थनाय ग्रन्थः—मीनवतीनयनाभ्यामित्यत्र तु सरसीतादात्म्यारोपो बाधकाभावात् तावत्सिद्धः, तस्य च मीनयोर्नयनाभेदारोपेणासमर्थनान्नयनयोर्मीनारोपो मृग्यः, स च तृतीयाप्रकृत्यर्थाभेदार्थकतायां न संभवतीति यथाकथञ्चित् तस्याः प्रकृत्यर्थनिष्ठाभेदप्रतियोगित्वार्थकत्वं वाच्यम्, तेन नयननिष्ठाभेदप्रतियोगिमीनवतीति धीः, एवञ्चारोप्यमाणे विषयप्रतियोगिकाभेदस्याभानान्न परिणामः, अपितु रूपकमेव, इयमेव सरणिर्नद्याशेखरिणे इत्यप्यय्यदीक्षितदत्तोदाहरणे बोध्या इति। अनेनैव रूपकप्रकरणे समुदाहृतं पद्यम्—

मीनवती नयनाभ्यां करचरणाभ्यां प्रफुल्लकमलवती।
शैवालिनी च केशैः सुरसेयं सुन्दरी सरसी॥

ननु प्रकृत्यर्थप्रतियोगिकाभेदस्यैव तृतीयार्थस्य व्युत्पत्तिसिद्धया रूपकसमर्थनाय यथाकथञ्चित् तृतीयार्थविभेदकल्पनामपेक्ष्य प्रकृत्यर्थप्रतियोगिकाभेदः एवतृतीयार्थोयुज्यतां, जायताञ्च नाभ रूपकसमर्थकाग्रहः परिणाम एव का क्षतिरिति चेत् परिणामे विषयिणो विषयात्मनोपयोग आवश्यकः, तदभावाद् परिशेषाद् रूपकाङ्गीकारे तृतीयार्थस्य तथा कल्पनमावश्यकम् इत्याह—यदि पुनरारोप्यमाणे यथाकथञ्चित् विषयाभेदप्रत्ययमात्रात् परिणामतोच्यते, नाद्रियते च प्रकृतोपयोगस्तदा "प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्" इति तदुदाहृतरूपकस्य परिणामतापत्तिः, प्रेमलतिकामिति समासे प्रेम्णो विषयस्य लतिकायामारोप्यमाणायामभेदेन विशेषणत्वादिति दिक्—इति।

सुन्दर्यां सरसीतादात्म्यारोपे सरसीवृत्तिधर्माणामारोपोऽपेक्षितः, नयनाभिन्नमीनवत्त्वं सुन्दर्यां नास्ति, अतः स्ववृत्तिमीनाभिन्ननयनत्त्वं वाच्यम्, इत्याद्यभिप्रायो मीनयोर्नयनाभेदारोपेण समर्थनादित्यादिमूलस्य। प्रवृत्तोऽस्या इत्यादिचतुर्थपादस्य त्रयः पादा इत्थम्—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्।
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवाम्।

इति काव्यप्रकाशादौ चित्रमीमांसायाञ्चोदाहृतम्।

रूपकप्रकरणे "यस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना" इत्यत्र अलंकारचन्द्रिकायां श्रीवैद्यनाथसूरय इत्थं वदन्ति–न चोत्तरपदार्थप्रधान्यादिन्दु कार्यंकारिणि मुखाभेदभानान्मुखाभेदरूपकं स्यान्नतु चन्द्रतादरूप्यकमिति वाच्यम्, व्युत्पत्तिवैचित्र्येण मुखस्य स्वनिष्ठाभेदप्रतियोगिकत्वसंसर्गेणान्वयाभ्युपगमाद् विशेषणानुयोगिकस्यापि विशेषणसम्बन्धतायाः स्वामित्वस्य षष्ठ्यर्थत्ववादिभिः प्राचीनैश्चैत्रस्य धनम् इत्यादौ अङ्गीकाराद्, इति।

ननु व्याकरणं शक्तिग्राहकं न रूपकस्वरूपनिष्पादनाधीनम्, समेन याति विषमेण यातीत्यादौ विशेष्यक्रियाप्रतियोकाभेदस्याभानात् प्रकृत्यर्थप्रतियोगिकाभेद एव तृतीयायाः शक्ति शास्ति, नयनप्रतियोगिकाभेदस्य मीने प्रथमं बोधेऽपि अभेदस्य पारस्परिकतया तुल्यवित्तिवेद्यन्यायेन मीनप्रतियोगिकाभेदविषयकमानसबोधमादायैव रूपकं समर्थ्यतामिति वाच्यम्, तथा सति पारस्परिकाभेदवशात् सर्वत्र रूपकपरिणामस्थले समानवोधप्रसङ्गे अलंकारयोरसंकीर्णतानुपपत्तेः, नापि प्रकृतोपयोगानुपयोगाभ्यां विभेदः रूपकस्थलेऽपि प्रकृतोपयोगस्य क्वचित्सत्वात्, नाप्यनुशासनं विरुद्धमिति वक्तुं वैद्यनाथसूरिः प्रयतते-तथाहि तृतीयायां अभेदोऽर्थः, स च प्रत्यार्थतया प्रकृत्यर्थान्वित एवेत्येतावन्मात्रं ब्रूते, अधिके उदासीनम्, प्रतियोगित्वानुयोगित्वे आकाङ्क्षायोग्यताभ्यां नियन्त्रिते, यथा चैत्रस्य धनमित्यत्र षष्ठ्यर्थः स्वामित्वं तस्यानुयोगी चैत्रः प्रकृत्यर्थः, प्रतियोगि धनम्, चैत्रप्रतियोगिकत्वधनानुयोगित्वयोः स्वामित्वेऽसम्भवात्।

परमेतन्न समीचीनं प्रतिभाति, तत्र हि स्वामित्वस्य षष्ठ्यर्थत्वपक्षे प्रकृत्यर्थचैत्रस्य निष्ठत्वसम्बन्धेनान्वयो न तु अनुयोगित्वेन, धनस्यापि न तत्र प्रतियोगित्वम्, किन्तु निरूपकत्वम्, चैत्रनिष्ठस्वामितानिरूपकं धनमिति बोधः,

अतएव निरूपकत्वस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेन चैत्रस्य न धर्नामित्यादौ बोधानुपपत्त्या नवीनैर्दूष्यते, एवञ्च तत्र स्वामित्वस्य षष्ठ्यर्थत्वे प्रतियोगित्वानुयोगित्वयोर्भानमेव न भवति ।

किञ्च सुन्दरीसरसीपदार्थान्वयिनो मीनवतीपदार्थस्य नयनपदार्थापेक्षया विशेष्यत्वं वाच्यम्, उभयोर्द्रव्यबोधकतया विशेष्यत्वप्रकारत्वनियामकान्तरस्याभावात्, सम्बन्धप्रतियोगित्वानुयोगित्वे विना नयनार्थस्य प्रकारत्वं मीनार्थस्य च विशेष्यत्वमित्यत्र किं विनिगमकं वाच्यम्, नयनेऽनुयोगित्वे स्वीकृतेऽपि विशेष्यत्वस्यासंभवात्, तथा च परिणामरूपकसंकरः प्रकारान्तरेण वार्यताम्, सर्वत्र प्रसिद्धयोः प्रतियोगित्वानुयोगित्वयोर्विभेदकल्पना हठादेवेति प्रतिभाति ।

तथा च महतामालङ्कारिकाणां मते एष एकस्मिन् पद्येविवादः, तदा के वयम् अलंकारनिर्णये ? कीदृशा वा छात्राः परीक्षायां निर्णयस्य प्रभवो भवेयुः ? एवमेव परिणामस्य रूपकान्तरतायामुपमामात्रतायाञ्च भूयान् शास्त्रार्थः लेखविस्तरभिया एकस्मिन्नेव पद्ये कलहदिग्दिदर्शयिषया च नाग्रेसरामि, गुरुमर्मप्रकाशकारस्य अत्र काश्चन व्यवस्थाः प्रदर्श्य विरंस्यामि एव ।

परे तु पूर्वपदार्थप्रधानमयूरव्यंसकादिसमासेन सुधाप्रतियोगिकाभेदवद्वचः इत्येव बोधः, रूपके मीनवतीनयनाभ्यामित्यत्र सुन्दर्यां सरसीतादात्म्यरूपं रूपकं मुख्यवाच्यार्थः, तत्र च मीनवत्वादिः साधारणो धर्मः, तस्य च सुन्दर्यामभावात् प्राप्तबाधबुद्धिस्थगनाय नयनाभ्यां मीनवतीति सुन्दरीविशेषणम्, सरस्यां मीनवत्वं प्रसिद्धमेव । एवञ्च सुन्दर्यां मीनवत्वसम्पादनरूपप्रकृतकार्योपयोगिता मीनानां नयनात्मतापत्त्यैवेति तदंशे परिणाम एवेति नयनप्रतियोगिकाभेदवन्मीनवतीत्येष बोध इति । दिक्

महर्षेर्व्यासपुत्रस्य श्रावं श्रावं वचः सुधाम् ।
उपमन्युसुतो राजा परां मुदमवाप्तवान् ॥

इति सम्बद्धं पद्यम् । विषयिसुधाया वचस्तया श्रवण उपयोगः । एवमेव परिणामारम्भे गुरुमर्मप्रकाशस्य लेखान्तरम्-वयन्तु ब्रूमः-उपमानप्रतियोगिकाभेदो रूपकम्, उपमेयप्रतियोगिकाभेदः परिणामः, प्रतीपवत् तत्राभेदे उपमेयप्रतियोगिकत्वतात्पर्यग्राहकः प्रकृतकार्योपयोगः, न तु तच्छरीरेऽस्य प्रवेशः । एवञ्च यत्रोपमानस्य स्वात्मनैव प्रकृतकार्योपयोगो यत्र चोदासीनता तत्र रूपकमेव, एवञ्च परिणामो विशेषणसमासायत्तो रूपकन्तु मयूरव्यंसकादिसमासायत्तं

मुखचन्द्र इत्यादौ, यदि तु चन्द्रमुखमिति विप्रयुज्यते तदा विशेषणसमासायत्तमपि रूपकम् इति। परे तु उपमानोपमेयपदानामुपमानप्रतियोगिकाभेदसंसर्गेण बोधकानां मयूरव्यंसकादयश्च इति समासेन विशेषणसमासबाधाच्चन्द्रमुखमिति प्रयोग एव न इत्याहुः।

यत्र प्रकृतोपयोगस्य तात्पर्यग्राहकत्वोक्त्या द्विर्बोधः सूचितः, तथा च प्रसिद्धरीत्या प्राथमिकं बोधमुपपाद्य पश्चाद्भाविनं मानसं वैयञ्जनिकं वा बोधमादाय अलंकारव्यवस्थोचिता, अलंकारव्यवस्थायै प्रसिद्धशब्दार्थसरणिर्न परिहेया, नापि अभेदस्य पारस्परिकतया संकरो विषयविषयित्वाभ्यामेव लक्षणे प्रवेशात्, प्राथमिकबोध आकांक्षादयो नियन्तारः, तत्र च विशेषणस्य अभेद-प्रतियोगित्वमेव, द्वितीयमुपयोगविषयकं बोधमादाय विषयतात्म्येन विषयिणः प्रकृतोपयोगे परिणामः, विषयितादात्म्येन विषयस्य तथोपयोगे रूपकमित्यादि व्यवस्थया संकरपरिहारात्। अतएव रसगङ्गाधरः "विषयितायाः प्रकृतकार्योपयोगितायाः अवच्छेदकीभूतं विषयताद्रूप्यम्", अलंकारचन्द्रिका च "विषयिनिष्ठायाः प्रकृतकार्यपयोगितायाः अवच्छेदिका विषयात्मना परिणतिः इत्यादि ब्रुवाते," इत्यलमधिकेन।

●

१९६३ फरवरी. देहली. २५ वर्ष २ अङ्क संस्कृत रत्नाकर.

प्रकाशित. संस्कृतमय की हिन्दी

# आलङ्कारिकाणां कलहः

कुछ दिनों तक संस्कृत चर्चा का यह शुभ अवसर है कि भारत शासन की सहायता से कुछ संस्कृत पत्रिकायें मासिक रूप से चलने लगी, उनमें लेखों की आयश्यकता है, संस्कृत भाषा की चर्चा के पहले के स्थान ह्रास को पा गये, पहले तो संस्कृत पढ़ने वाले ही नहीं हैं, संस्कृत विद्यालय आदि संस्कृत के संस्थान संस्कृत की चर्चा करते हैं किन्तु संस्कृत भाषा को नहीं छुते, इस समय संस्कृत विद्यालयों में हिन्दी आदि दूसरी भाषाओं के माध्यम से दूसरे विषयों का अध्यापन शुरु हो गया है, जहां अधिक अध्यापक संस्कृत को नहीं जानने वाले हैं, वहां व्यवहार से बहिस्कृत संस्कृतवाणी छात्र आदि में सञ्चार को कैसे पाये? प्रवन्ध आदि की समितिओं में दूसरी

भाषा भाषीओं की अधिकता से संस्कृत का बहिष्कार आही पड़ा है, इसी प्रकार यत्रा चार आदि में बहिष्कार आया है, इसलिये जो संस्कृत भाषा को जानते हैं पढ़ते हैं और लिखते हैं उनका संस्कृत पत्रिकाओं से अवश्य सम्बन्ध होना चाहिये, जो शास्त्र के व्यसनी संस्कृत विद्वान् छात्रों के न होने से उदास हैं वे लोग संस्कृत पत्रिका में ही शास्त्रों की चर्चा शुरू करें, आधुनिक रिसर्च आदि नामों से नहीं डरना चाहिये, उनके अधिकार में वहुत सामग्री है, इस समय एकविषय में अनेक ग्रन्थों में जो भिन्न भिन्न मत मिलते हैं, उनको एक निबन्ध में जोड़ देने का नाम रिसर्च गवेषणा:या अन्वेषण है, उन मतों में गुण दोष खन्डन युक्ति और मण्डन युक्तिओं को अधिक स्फुट कर देना ही आलोचना है, विद्वानों का यह अवश्य कर्तव्य है, अन्यथा शास्त्र ऋण से मुक्ति नहीं होगी, पहले के विद्वान् प्राचीन ग्रन्थों को पढ़कर उससे प्रखर बुद्धि को पाकर खण्डन मण्डन और व्याख्यान से शास्त्रों को बढ़ाये, उनकी समालोचनाओं से विशद बुद्धि को पाये हुए शास्त्र की उन्नति के लिये ऋणी होते हुए शास्त्रों के प्रचार मार्ग में जवरन चलाये गये हैं, उसी से दूसरे विद्वानों को भी निवेदन करते हुए कुछ दिग्दर्शन के ऐसा उपस्थित करता हूं, सुनने में कटु भी यह कलह शब्द कोमल सरस काव्य को लेकर विवाद करते हुए आलङ्कारियों का प्रणय कलह के ऐसा प्रिय होगा इस विचार से पहले उपस्थित होता है, रस से विच्छिलाह इस काव्यों की आलोचना के मार्ग पर कसोटी के ऐसा कठोर यह विचारों का उपक्रम है, सभी शास्त्रों का सम्बन्ध धारण करता हुआ यह अलङ्कार शास्त्र भिन्न भिन्न व्याख्यान, मत, खण्डन और मण्डनों का घना वन है, दूसरे शास्त्रों में दोष रूप से प्रसिद्ध ये भ्रान्ति संशय आदि इस में अलङ्कार हैं, दूसरे शास्त्रों में विषय विचार के प्रसङ्ग में यत्न पूर्वक हेय भी यह आरोप वक्रोक्ति ढंग से सभी अलङ्कारों का वीज मानों सुवर्ण हो जाता है, वह भी आहार्य होता है, ऐसे विषय में मेरी विवेचना सदोष होगी क्या आश्चर्य है, यहाँ दोषों को देखते हुए दोषज्ञ होगें ? ।

उस प्रकार रस गङ्गाधर में परिणाम प्रकरण में इस प्रकार है-जो कि अप्पय्य दीक्षित ने परिणाम प्रकरण में वैयधिकरण्य से परिणाम में उदाहरण दिया है,—

**तारा नायक शेखराय जगदाधाराय धाराधरच्छाया ।**
**धारककन्धराय गिरिजासङ्गैकशृङ्गारिणे ।।**

**नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे।**
**नागैः कङ्कणिने नगेन गृहिणे नाथाय सेयंनतिः॥**

यहाँ से सोचा जाता है—तारानायकशेखराय इत्यादि पद्य में गिरिजा के संङ्ग से अद्वितीय शृङ्गारी शिव में कवि के नमस्कार का उपक्रम है, शृङ्गार शेखर आदि भूषणों की अपेक्षा करता है। इस प्रकार नदी का प्रकृत में उपयोग आरोप्यमाण शेखररूप से है अपने नदी स्वरूप से नहीं, इसी प्रकार तीसरे नेत्र का तिलक भूषण रूप से उपयोग है। इस रीति से शुद्धरूपक होना चाहिये। परिणाम नहीं, शङ्का परिणाम में विषय से अभिन्न विषयी रहता है ऐसा कहा गया है, विषय बोधक नदी आदि शब्दों से पर तृतीया का अभेद अर्थ है, शेखर आदि का उसमें अन्वय है, तब यहाँ परिणाम कैसे नहीं है ?। उत्तर—विषय से अभिन्न विषयी का भान होने पर भी विषय रूप से विषयी का प्रकृत में उपयोग नहीं होने से यहाँ परिणाम नहीं हो सकता। किन्तु विषयों का विषयि रूप से प्रकृत में उपयोग होने से रूपक होगा, क्योंकि यहाँ नदी आदिका शेखर आदि रूप से उपयोग है।

तारानायक चन्द्रमा शेखर वाले मेघ के ऐसा सावले कन्धा वाले नीलग्रीव गिरिजा के सङ्ग से एक शृङ्गारी उससे नदी से मुकुट वाले के साथ समानता होगी, गिरिजा का सङ्ग रूप एक शृङ्गार वाला ऐसा विग्रह करने पर 'कर्मधारय से मतुवर्थीय नहीं होता बहुव्रीहि यदि उस अर्थ की प्रतिपत्ति करा सके' इस वर्णो वर्णन सूत्र महाभाष्य स्वारस्यरूप न्याय का विरोध भी होगा, नद्या शेखरिणे इत्यादि में धान्येन धनवान् के ऐसा एक देश में अन्वय वाले अभेद अर्थ में तृतीया होगी, नदी से अभिन्न शेखर वाले इत्यादि रीति से अर्थ है, यहाँ समान अर्थ में दो वार शेखर शब्द का प्रयोग कुछ खटकता है, इस प्रकार साधारण पद परिचय हुआ।

भगवान् शङ्कर में गिरिजा संङ्ग से एक शृङ्गारित्व नमस्कार का कारण बताया है, शृङ्गारित्व के अङ्गभूषण हैं, नदी आदि भूषण रूप से शृङ्गार का पोषण करते हैं, नदी आदि विषयों का भूषण स्वरूप विषयी शेखर आदि रूप से प्रकृत शृङ्गार में उपयोग है, विषयी रूप से प्रकृत वाक्यार्थ में उपयोग होने पर रूपक और विषयी का विषय रूप से प्रकृत में उपयोग होने पर परिणाम ऐसी व्यवस्था है, यहाँ तृतीया

का अभेद अर्थ होने से नदी आदि विषयों का शेखर आदि विषयी में अभेद भान होने पर भी प्रकृत शृङ्गार में नदी आदि का शेखर आदि रूप से उपयोग होने से रूपक होगा, शेखर आदि विषयी का नदी आदि विषय रूप से शृङ्गार में उपयोग न होने से परिणाम नहीं हैं, यह रसगङ्गाधर के गद्य भाग का अर्थ है।

यहाँ शृङ्गार ही नमस्कार का कारण कवि को अभिप्रेत है, अन्यथा शृङ्गार और उसके अङ्गभूषण आदि का वर्णन कवि का व्यर्थ हो जायेगा। परम ऐश्वर्य के व्यञ्जक जगत् का आधारत्व के ऐसा विराट् का स्वरूप वर्णन रूप में प्रसिद्ध गङ्गा आदि के वर्णन से ही परम ऐश्वर्य का वर्णन समाप्त हो जायेगा। और क्या—नमस्कार कारण शृङ्गार को न माने परम ऐश्वर्य को ही माने प्रसिद्ध शिव रूप के वर्णन में ही तात्पर्य होगा तो इस पद्य में कवि से कल्पित नूतन पदार्थों का उपयोग नहीं हो पायेगा, ऐसा पण्डित राज के हृदय का अभिप्राय मालूम पड़ता है।

इसके ऊपर गुरुमर्म प्रकाशकार श्री नागोजीभट्ट महोदय के मतिमहिमा को पाठक देखें—यह वैयधिकरण्य रूपक में भी देखा जाता है, ऐसा कहकर इस पद्य को उदाहृत किया गया है, उस पर क्या दोष है, और क्या नद्या शेखरिणे इस अंश में विषय रूप से प्रकृत में उपयोग न होने से परिणाम न होने पर भी वाच्य या आर्थ रूपक भी नहीं कह सकते, क्योंकि रूपक के लिये उपमान प्रतियोगी वाले अभेद का उपमेय में भान आवश्यक है, वह यहाँ नहीं है वल्कि उपमेय प्रतियोगिक अभेद उपमान में है। शृङ्गार के उपपादक शेखर आदि हैं यह कहना भी अयुक्त है क्योंकि नारायण से अस्त्र वाला यह अंश शृङ्गार का उपपादक नहीं होता, किन्तु नमस्कार का कारण शिवजी के उत्कर्ष का साधक है, इसलिए परिणाम है, क्योंकि नीच जन में भी होने वाला शेखर उत्कर्ष साधक नहीं हो सकता, इसी कठिनाई रूप अरुचि से द्विर्भावः पुष्पकेतोः इत्यादि दूसरा पद्य उनसे उदाहृत हुआ। इसलिये यच्च यहाँ से लेकर कुत्र परिणामः यहां तक रसगङ्गाधर ग्रन्थ चिन्तनीय है ऐसा समझना चाहिये, ऐसा गुरुमर्मप्रकाश है।

परिमितभाषी इसके वचन व्याख्यान की अपेक्षा रखते हैं इसलिये कुछ स्फुट करता हूँ चित्रमीमांसा के परिणामप्रकरण में वैयधिकरण्य रूपक का यह पद्य उदा-

हरण है ऐसा रहने पर भी वैसे ही वहाँ लिखा है तो भी परिणाम का खण्डन और रूपक का मण्डन करते हुए पण्डितराज का व्यर्थ प्रलाप है, दीक्षित मत में दोष नहीं दिये हैं, इत्यादि को दोषः ? शब्द से कहते हैं, इस समय चित्रमीमांसा ग्रन्थों में मर्मप्रकाश के अभिप्राय वाला ही पाठ है, उसमें पण्डितराज के मत में रसगङ्गाधर में उद्धृत ही पाठ है चित्र मीमांसा में दो प्रकार का पाठ होगा, नागेशभट्ट के पास दूसरा ही अथवा इन दोनों में कोई दूसरे के खण्डन के लिये विडम्वना किया हो, रसगङ्गाधर का खण्डन और गुरुमर्मप्रकाश को देखकर किसी नूतन से वैसा पाठ बदल दिया गया हो, इत्यादि में नहीं पड़ता हूँ। जैसा जिसको प्रसन्द हो वैसी कल्पना करे, किन्तु पाठ की कल्पना से ही शास्त्र का अर्थ समाप्त नहीं होता, ऊपर कहे गये पद्य में परिणाम है या रूपक, अप्पय्यदीक्षित का क्या अभिप्राय है ? इत्यादि की आलोचना करनी है, नागेश महोदय तो संशय ही उपस्थित करते हैं, पाठ दिखाने से रूपक में दीक्षित का अभिप्राय सूचित करके दोनों का खण्डन करके परिणाम का समर्थन करते हैं। नद्या शेखरिणे इत्यादि में नदी का अभेद शेखर में है, नदी विशेषण उपमेय है, उपमेय प्रतियोगी वाला अभेद हुआ, परिणाम हो सकता है, शेखर उपमान विशेष्य है, विशेषण नहीं, इसलिये उपमान प्रतियोगि वाला अभेद नहीं हुआ, जो मालूम होने वाले सम्बन्ध का प्रतीयोगी है वह प्रकार होता है ऐसी व्यवस्था है, यह अभानात् यहां तक से कहा गया है, नमस्कार का प्रयोजक शृङ्गार है इस रसगङ्गाधर का खण्डन किया शृङ्गारी इत्यादि से कहते हैं, नारायण अस्त्र का शृङ्गार में उपयोग न होने से नदी शेखर आदि का शृङ्गार के लिये उपयोग में कवि का तात्पर्य नहीं है, किन्तु अस्त्र अस्त्री के अधीन होता है, नारायण शिव का अङ्ग हो गये, इस वर्णन से शिव का परम ऐश्वर्य रूप उत्कर्ष सिद्ध होता है, उसके बोधक ये विशेषण है, मध्य में किसी का शृङ्गार के अङ्ग रूप से वर्णन मानने पर प्रक्रम भङ्ग होगा, अव्युत्पन्न कविता का प्रसङ्ग होगा, जगत् का आधार होना नीलग्रीव से व्यङ्ग्य विषभक्षण का भी इसी प्रकार शृङ्गार में उपयोग नहीं है, मुकुट का नीचों में भी होने से नदी शेखर से ही उत्कर्ष सिद्ध होगा, उस प्रकार विषयी शेखर आदि का विषय नदी आदि रूप से ही उत्कर्ष में उपयोग होने से. परिणाम अलङ्कार का यह उदाहरण है,

इतने से रूपक के समर्थक रसगङ्गाधर का तथा अपने कल्पित पाठ वाली चित्रमीमांसा का खण्डन हुआ, उस पर चित्रमीमांसा की प्रतिष्ठिता के रक्षण के लिये अतएव अस्वारसात् ऐसा कहते हैं।

शङ्का—जैसे श्री कृष्ण विष्णु के अधिक विशेष शृङ्गार से उत्कर्ष पुष्ट होता है वैसे प्रकृत में शङ्कर जी के सर्वोच्च शृङ्गार से उनका उत्कर्ष पुष्ट हो, इससे विष्णु के अनेक शृङ्गार से व्यतिरेक का सूचक एक पद सार्थक है, शृङ्गार के अङ्ग रूप में ही शेखर आदि पद सार्थक होते हैं, नहीं तो नदी नेत्र नाग आदि के धारण मात्र के पर्यवसान से भूषण वाचक शेखर आदि पद व्यर्थ हो जायेंगे, अधिक दोष से दुष्ट भी होगा।

समाधान—वैसा अन्वय करने में आकांक्षा नहीं है, जैसे गिरिजा के सङ्ग से एक शृङ्गारी यह नाथ में साकाङ्क्ष है वैसे नदी से शेखरी यह भी केवल नाथ में साकाङ्क्ष, शृङ्गारित्व से विशिष्ट नाथ में आकांक्षा नहीं है।

शङ्का—अभिधावश पहला वोध भले वैसा हो किन्तु दूसरा व्यञ्जना से होने वाला बोध शृङ्गार का अङ्ग शेखर आदि विषय वाला कैसे रोका जायेगा।

समाधान—शेखर आदि भूषण नीच जन साधारण होने से उत्कर्ष नहीं ला सकते, जैसे कि गङ्गा आदि का धारण उत्कर्ष ला सकता है, उस प्रकार शेखर गङ्गा में विशेषण होकर व्यञ्जना से होने वाले बोधका विषय होगा तभी चमत्कारी होगा, उससे शेखर का नदी रूप से उपयोग होने से परिणाम में पर्यवसान है।

रसगङ्गाधर के इसी प्रकरण में पीछे प्रकृत्यर्थ अनुयोगी वाला अभेद तृतीया का अर्थमान कर उपमान प्रतियोगी वाले अभेद के सम्पादन से रूपक समर्थन के लिये ग्रन्थ यह है—मीनवती नयनाभ्याम् इत्यादि पद्य में तो बाधक न होने से नायिका में सरसी के तादात्य का आरोप तब तक सिद्ध है, उसका मीन में नयनों के अभेद के आरोप से समर्थन नहीं हो सकता है, नयनों में मीन का आरोप अपेक्षित है, वह प्रकृत्यर्थ का अभेद तृतीया का अर्थ मानने से नहीं होगा, जिस किसी प्रकार उसका प्रकृत्यर्थ में रहने वाले अभेद का प्रयियोगित्व अर्थ कहना चाहिये, उससे नयन में रहने वाले अभेद के प्रतियोगी मीन वाली यह बुद्धि होगी, इस प्रकार आरोप्य

माण मीन में विषय नयन प्रतियोगी वाले अभेद का न होने से परिणाम नहीं है किन्तु रूपक ही है, यह रीति नद्या शेखरिणे इत्यादि अप्पय्य दीक्षित से दिये हुए उदाहरण में समझना चाहिये इति। इन्हीं रूपक प्रकरण में उदाहरण दिया हुआ पद्य—

**मीनवती नयनाभ्यां करचरणाभ्यां प्रफुल्ल कमलवती।**
**शैवालिनी च केशैः सुरसेयं सरसी सुन्दरी॥**

आँखों से मच्छली वाली हाथ पैरों से फुलाये कमल वाली केशों से शेवाड़ वाली यह सुन्दरी सुन्दर रस वाली सरोवर है।

शङ्का—प्रकृत्यर्थ प्रतियोगी वाले अभेद तृतीयार्थ व्युत्पत्ति सिद्ध है, रूपक समर्थन के लिये जिस किसी प्रकार तृतीयार्थ के भेद की कल्पना की अपेक्षा प्रकृत्यर्थ प्रतियोगिता वाला अभेद ही तृतीया का अर्थ युक्त माना जाय, रूपक समर्थन का आग्रह जाय, परिणाम ही हो क्या हानि है।

समाधान—परिणाम के लिये विषयी का विषय रूप में उपयोग आवश्यक है, वह यहां नहीं है, बचा रूपक अगत्या मानना पड़ेगा, उसका उपपादन के लिये तृतीया का पूर्वोक्त अर्थ में शक्ति कल्पना करनी पड़ेगी, इस अभिप्राय से कहते हैं रसगङ्गाधर में यदि पुनरा इत्यादि। यदि आरोप्यमाण में जिस किसी प्रकार केवल विषय का अभेद होने से परिणाम कहते हैं, प्रकृत में उपयोग का आदर नहीं करते तो 'इसके हृदय में प्रेमलता के सिञ्चन के लिये कामदेव प्रवृत्त हुआ है' यह आपसे उदाहरण दिया गया रूपक परिणाम हो जायेगा, प्रेमलतिकाम् इस समास में प्रेम विषय आरोप्यमाण लतिका में अभेद सम्बन्ध से विशेषण है, इति। सुन्दरी में सरसी तादात्म्य का आरोप में सरसी के धर्मों का आरोप अपेक्षित है, नयन से अभिन्न मीन सुन्दरी में नहीं है इससे सरसी के धर्म मीन उससे अभिन्न नयन धर्म सुन्दरी में कहना पड़ेगा, ऐसा मीन में नयन के अभेद के आरोप से समर्थन नहीं होगा इस मूल का अभिप्राय है, प्रवृत्तोऽस्या इत्यादि अंश का सम्पूर्ण पद्य इस प्रकार है—

**कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु,**
**यत्सखीं कन्तोदन्तं श्रुतमपि प्रश्नयतियत्।**

अनिद्रं यच्चान्तः स्वपिति तदहो वेदम्यभि नवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ।।

हिन्दी—गान का आवाज होने पर जो मृगी के ऐसा अङ्गों को स्थिर कर देती है, प्रिय की वार्ता सुनी हुई भी फिर सखी से जो पूछती है और जो विना निन्द की भीतर ही सोती है, उससे समझता हूँ, अहो इसके हृदय में कामदेव नई प्रेमलता को सींचने के लिये लगा है। यह काव्यप्रकाश आदि में और चित्र मीमांसा में उदाहृत है।

रूपक प्रकरण में 'जिसके मुख चन्द्र से आँख का आनन्द मिल जाने पर चन्द्रमा से क्या ?' यहाँ पर अलङ्कार चन्द्रिका में श्रीवैद्यनाथ सूरि इस प्रकार कहते हैं—

शङ्का—मुखेन्दु शब्द के समास में इन्दु पदार्थ प्रधान है, इन्दु में मुख का अभेद सम्बन्ध है, इससे चन्द्र में मुख का रूपक होगा, मुख में चन्द्र का रूपक नहीं होगा।

समाधान—विशेष्य विशेषण और सम्बन्धों की अनेक विलक्षण व्युत्पत्ति होने से मुख का ही चन्द्रमा में सम्बन्ध 'अपने में रहने वाला जो अभेद उसका प्रतियोगित्व होगा, विशेषण अनुयोगी वाला भी सम्बन्ध विशेषण का माना जाता है, इस प्रकार विशेष्य होते हुये भी चन्द्र प्रतियोगी होने से उपमान है तथा विशेषण भी मुख अभेद का अनुयोगी होने से उपमेय रहेगा, इससे मुख में चन्द्र रूपक का निर्वाह होगा। चैत्र का धन इत्यादि में प्राचीनों ने षष्ठी का अर्थ स्वामित्व माना है, विशेषण भी चैत्र स्वामित्व का अनुयोगी होता है तथा विशेष्य प्रकृत्यर्थ से भिन्न भी धन स्वामित्व का प्रतियोगी होता है।

शङ्का—व्याकरण स्वतन्त्र शक्ति का ग्राहक है, रूपक के स्वरूप को बनाने के अधीन नहीं है, तृतीया के अभेद अर्थ का उदाहरण समेन याति विषमेण याति इत्यादि हैं वहां विशेष्य क्रिया को प्रतियोगी होना संभव नहीं है, इससे नयन प्रतियोगि वाले अभेद का ही भान होगा, इसलिये रूपक का समर्थन नहीं होगा। समाधान—अभेद जहां सम्बन्ध होता है वहां परस्पर दोनों का आपस में अभेद होता है तुल्य ज्ञान

से समझा जाता है, आकांक्षा आदि के अनुसार पहले बोध में भले ही नयन का अभेद मीन में मालूम हो किन्तु दूसरे बोध में मीन का अभेद नयन में मालूम हो जायेगा, उसी से रूपक का समर्थन हो जायेगा।

शङ्का—इस प्रकार का परस्पर अभेदबोध सभी जगह सुलभ है। तब परिणाम और रूपक का असंकीर्ण विषय नहीं हो पायेगा। प्रकृत में उपयोग या अनुपयोग से विषय भेद नहीं कर सकते, रूपक में भी कहीं प्रकृत में उपयोग आता है।

समाधान—अनुशासन विरुद्ध नहीं है ऐसा वैद्यनाथ सूरि प्रयास करते हैं—तृतीया का अर्थ अभेद है, और प्रत्ययार्थ होने से प्रकृत्यर्थ में अन्वयी है, इतना ही अनुशासन कहता है, इससे अधिक में अनुशासन उदासीन है, सम्बन्ध का प्रतियोगी या अनुयोगी होना यह आकाङ्क्षा तथा योग्यता से नियन्त्रित है, इसी प्रकार प्राचीनों ने चैत्रस्य धनम् यहां षष्ठी का अर्थ स्वामित्व है तब चैत्र प्रकृत्यर्थ को स्वामित्व का अनुयोगी माना है, उसी प्रकार यहां भी विशेषण मुख को भी अभेद का अनुयोगी मान लेगें, नयनाभ्यां मीनवती इसमें भी तृतीयार्थ अभेद का नयन अनुयोगी हो जायेगा।

किन्तु यह वैद्यनाथ सूरि का दृष्टान्त ठीक नहीं मालूम पड़ता, चैत्र में रहने वाले स्वामित्व का निरूपक धन ऐसा बोध होता है, स्वामित्व में चैत्र का निष्ठत्व सम्बन्ध से अन्वय होता है, धन स्वामित्व का प्रतियोगी भी नहीं किन्तु निरूपक होता है, इसीलिये न चैत्रस्य धनम् यहां निरूपकत्व वृत्यनियामक सम्बन्ध है प्रतियोगिता का अवच्छेदक नहीं होगा इत्यादि रीति से नवीनों ने स्वामित्व अर्थ में दोष दिया है। वहां स्वामित्व षष्ठी के अर्थ के पक्ष में प्रतियोगिता और अनुयोगित्व का भान ही नहीं होता। और क्या सुन्दरी सरसी में अन्वित होने वाला मीनवती पद का अर्थ द्रव्य है, नयन भी द्रव्य है, इनके विशेष्य विशेषण भाव में प्रतियोगित्व और अनुयोगित्व के विना कोई विनिगमक नहीं है, नयन को अनुयोगी मानने पर भी वह विशेष्य नहीं हो पाता, इसलिये परिणाम और रूपक का संकर दूसरे प्रकार से वारण करना चाहिये, प्रतियोगी की भेद कल्पना जबरन मालूम पड़ती है।

इस प्रकार बड़े आलङ्कारिकों का ही एक ही पद्य में ऐसा विवाद चलता है तब हम लोग बेचारे अलङ्कार निर्णय में कौन हैं?, कैसे छात्र परीक्षा में निर्णय के

लिये समर्थ होगें ?, इसी भांति परिणाम रूपक विशेष है, परिणाम उपमाहीं है, इत्यादि बहुत शास्त्रार्थ है, यहां तो एक ही पद्य में कलह के दिग्दर्शन की इच्छा से प्रवृत्त हुआ लेख के विस्तार भय से आगे नहीं बढ़ता हूँ, गुरुमर्म प्रकाश कार की कुछ व्यवस्थाओं को दीखाकर विरामही करूंगा।

दूसरे लोग तो मानते हैं कि पूर्व पदार्थ भी जहां प्रधान होता है मयूर व्यंसकादि मानकर विशेषण समास हो जाता है, इस प्रकार समास में उत्तर पदार्थ प्रतियोगी तथा विशेषण हो सकता है, पूर्व पदार्थ अनुयोगी तथा विशेष्य हो सकता है, श्रावं श्रावं वचः सुधाम् में इसी प्रकार अभेद का सुधाप्रतियोगी और वचन अनुयोगी है, यहां सुधा का श्रवण में वचन रूप से ही उपयोग होने से परिणाम होगा। मीनवतीनयनाभ्याम् इत्यादि में सुन्दरी में सरसीतादात्म्य का आरोप रूप रूपक प्रधान वाक्यार्थ है उसमें मीन वाला इत्यादि साधारण धर्म है, वह सुन्दरी में नहीं है, उससे बाध आयेगा, उसको रोकने के लिये नयनों से मीन वाली यह सुन्दरी का विशेषण दिया गया, सरसी में मीन होना प्रसिद्ध ही है, इस प्रकार सुन्दरी में भी मीनवत्ता करना प्रकृत कार्य है, उसमें विषयी मीन का नयन रूप से ही उपयोग है इसलिये उस अंश में परिणाम ही है, नयनों से अभिन्न ओ मीन उस मीन वाली यह बोध है। इति

महर्षे व्यसिपुत्रस्य श्रावं श्रावं वचःसुधाम् ।
उपमन्युसुतो राजा यरां मुदमपाप्तवान् ॥

व्यास पुत्र महर्षि शुकदेव के अमृत वचन को सुन सुनकर उपमन्यु के लड़के परिक्षित् बहुत खुशी पाये, यह सम्पूर्ण पद्य हुआ।

इसी प्रकार परिणाम के आरम्भ में गुरुमर्म प्रकाश का दूसरा लेख है हम लोग तो कहते हैं कि उपमान प्रतीयोगी वाला अभेद रूपक है, उपमेय प्रतियोगी वाला अभेद परिणाम है, प्रतीप के ऐसा प्रकृत कार्य में उपयोग उपमेय प्रतीयोगी के तात्पर्य को बताता है, परिणाम के लक्षण शरीर में प्रकृत कार्य के उपयोग का प्रवेश नहीं है, इस प्रकार उपमान रूप से उपयोग हो अथवा उपयोग न हो वहां रूपक होता है, इस प्रकार परिणाम विशेषण समास

के अधीन है, मुखचन्द इत्यादि रूपक मयूरव्यंसकादि समास के अधीन है यदि चन्द्र मुख ऐसा विपरीत भी प्रयोग करते हैं तो विशेषण समास से भी रूपक होता है। दूसरे लोग तो कहते हैं कि उपमान उपमेय के बोधक पद उपमान प्रतीयोगी वाले अभेद सम्बन्ध से बोधक होते हैं, उससे सभी जगह उपमान विशेषण होगा, विशेषण समास से चन्द्र मुख यही होगा, मूख चन्द्र के लिये मयूरव्यंसकादि मानना पड़ेगा तब विशेषण समास का बाध होने से चन्द्र मुख यह प्रयोग ही न होगा।

इसमें प्रकृत कार्य में उपयोग को तात्पर्य ग्राहक कहा गया, उससे दो बार बोध सूचित होता है, उस प्रकार प्रसिद्ध रीति से पहला बोध करके मानस या व्यञ्जना से उपयोग वाला दूसरा बोध लेकर अलङ्कार व्यवस्था उचित है, अलङ्कार व्यवस्था के लिये प्रसिद्ध शब्द अर्थ के मार्ग को नहीं छोड़ना चाहिये। लक्षण में विषय विषयी शब्द से निवेश करने से परस्पर को लेकर संकर नहीं होगा। पहले के बोध में आकांक्षा आदि नियामक हैं इससे विशेषण प्रतियोगी ही होगा, दूसरे बोध को लेकर विषय रूप से विषयी का उपयोग होने पर परिणाम और विषयी रूप से विषय का उपयोग से रूपक यह व्यवस्था होगी। इसी से रसगङ्गाधर में विषयता की प्रकृत कार्य में उपयोगिता का विषयतादाम्य अवच्छेदक है। अलङ्कारचन्द्रिका में विषयी में रहने वाली उपयोगिता का अवच्छेदक विषय रूप से परिणाम है ऐसा कहते हैं। इति

●

दिल्ली संस्कृत रत्नाकर २४ वर्ष ११ अङ्क नवम्बर
१९६२ ईशाब्द प्रकाशितम्

# आलङ्कारिकाणां मल्लायितम्

मल्लानां युद्धेन व्यायामेन च यथा बलवृद्धिस्तथा शास्त्ररसिकानां शास्त्रार्थवादेन शास्त्रस्य विदुषां बुद्धिवैभवस्य च समृद्धिः। 'वादे वादे जायते तत्त्वबोध' इति नतिरोहितम्, शास्त्रस्य चर्चा साम्प्रतं ह्रासमुपागता, अन्तेवासिनोऽध्येतार एव न सन्ति, विद्वांसश्च व्यवसायान्तरमासेवन्ते, भारत-

सर्वंकारस्य संस्कृतसमुन्नयनसमीहया काश्चन पत्रिका मासिकादिरूपेण उदेतुं प्रक्रमन्ते, ता एव भवेयुर्व्यायामभूमय इतिधिया मम कश्चिदुपक्रमः।

व्याकरणं न्यायो दर्शनानि च कठिनानि नातिश्रमेण विना अवबोधविषया इति बहवो मन्यन्ते। काव्यं खलु कोमलम्, अनायासेन रसलोलुपानां हृदयानि आवर्जयति। अधुना सारल्यमनोषया बहवश्छात्राः साहित्यमेव अधीयते अतः काव्यमेव भवतु नाम बुद्धेर्व्यायामशाला, तत्रैव च बुद्धिवैभवस्य चरितानि पश्यन्तु रसिकाः। अत्र च काव्यव्याख्याने चमत्कृतिसारसञ्चयाय कथं यतन्ते अस्माकम् आलङ्कारिका आचार्याः? प्राक्तनानामाचार्याणां ग्रन्थान् अधीत्य तत एव स्वीयां शेमुषीमूहापोहपरायणां सम्पाद्य च कथमिव तेषामेव ग्रन्थानां व्याख्यानं व्यधुः? खण्डनेन मण्डनेन च किमिव स्वान् अनृणान् प्रादर्शयन्, अस्माकमपि तेषां रचनाभ्यः समासदितबुद्धिवैशारद्यानां विद्यते किमपि कर्तव्यम्, कथमन्यथा कृतगुरुदक्षिणा दक्षिणा भवेम? अतो बहुषु ग्रन्थेषु उदाहरणतया व्याख्येयतया आलोच्यतया च परिगृहीतमिदमुदाहरणमाश्रित्य आलङ्कारिकाणां मतभेदं खण्डनमण्डने च प्रदर्शयन् साहित्यशास्त्रार्थमुपस्थापयामि।

काव्यप्रकाशे ध्वनिकाव्योदाहरणप्रसंगे

'निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्॥

अत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यते।'

विदग्धा काचिदुत्तमनायिका नायकस्य अनुनयाय प्रेषितां तं संभुज्य समायातां दूतीं स्नानकार्य प्रदर्शनमुखेन व्याहरति—सखीभावं समाश्रयन्ती त्वम् मम प्रार्थनामनु 'अनुनीय नायकम् आनयामि' इति प्रत्ययं प्रदर्शितवती स्नानकालातिपातं परिहरन्ती अनेकविधदुःखदायकस्य तस्य अधमस्य पार्श्वे न गत्वा स्नातुम् इतो वापीं गतासि, अतो बान्धवजनस्य मम उपेक्षितपीडागमा मनसा दुःखदानेन दूती असि न सखी। यतश्चिरम् अञ्चलादिस्पर्शेन स्तनतटं च्युतचन्दनं संभवति निश्शेषच्युतचन्दनन्तु स्नानप्रयुक्तमेव। ताम्बूलादिविलम्बेन अधरो मृष्टरागो भवेत्, निमृष्टरागता तु अधरे स्नानकृतेव, एवम् अञ्जनलेपविस्मृत्या नेत्रे अन्तर्बहिश्च समानभावेन अनञ्जने स्याताम्, इमे तव नेत्रे तु उपरिभाग एव अनञ्जने ततोऽपि स्नानमायाति,

शैत्यात्, तवेयं तनुरपि पुलकिता संकुचिता च, तथा च वाच्यार्थस्य परिपुष्टि-र्जाता।

तत्र वक्त्री विदग्धा नायिका वैदग्ध्यञ्च व्यङ्ग्यविधया अभिप्रेत-प्रकाशनम्, बोद्धव्या च दूती कथमपि स्वामिनो मनोऽनुसरन्ती चञ्चलान्तरङ्गा, उत्तमनायिकया प्रियस्य कृते अधमपदोपादानं कष्टातिशयकृतमेवेति तस्या-न्तिकमेव रन्तुं गतासि न मां प्रति अनुनेतुमिति व्यञ्जनावृत्त्या प्रतिपाद्यते। दूतीसंभोगरूपकष्टातिशयप्रयुक्ताधमपदार्थस्य रमणं व्यङ्ग्यं विना अनुपपत्त्या वाच्यसिद्ध्यङ्गतापत्तिस्तु प्रेषणसापेक्षत्वेन विस्मृतप्रेमतयाऽप्यधमत्वोपपत्ति-रित्यभिप्रायकोद्योतेन समाहिता। अत्र अभिधामूला विपरीतलक्षणामूला वा व्यञ्जना? तटाधरादिपदानि स्नानरमणयोः साधारणानि अन्यतरनियता-र्थानि वा? इत्यादि संशयशोधने काव्यप्रकाशमूलमुदासीनवदास्ते।

अतः परमेतावन्मात्रं काव्यप्रकाशं समधीतवतां साहित्यदर्पणकृतां श्रीविश्वनाथमहापात्रमहोदयानां व्याख्यानमवलोकयन्तु पाठकाः, व्यञ्जना-निरूपणे बोद्धव्यवैशिष्ट्यस्य उदाहरणमिदं पद्यं विलिख्य 'अत्र तदन्तिक-मेव गतासीति विपरीतलक्षणाया लक्ष्यम्, तस्य रन्तुमिति व्यङ्ग्यं प्रतिपाद्य-दूतीवैशिष्ट्याद् बोध्यते एवं व्याख्याति। स्नानार्थवापीगमनस्य वाच्यार्थस्य बाधेन लक्षणामुपासत इति स्फुटमेव प्रतिभासते। स्नानेन सर्वस्मिन्नुरस्थले च्युतचन्दनता स्यात्, स्तनतटस्यैव च्युतचन्दनता मर्दनकृतैव रमणं विना अनुपपन्ना, एवमधरस्यैव चुम्बनविधानादधरोष्ठमात्रस्य निर्मृष्टरागता चुम्बनं विना अनुपपन्ना, इत्थमेव प्रियं प्रति उत्तमनायिकाया विदग्धाया अधमत्वोक्तिर्दूतीरमणक्लेशं विना न संभवति इति मुख्यार्थबाधात् तस्या-न्तिकमेव गतासीति लक्षणया बोध्यते, लक्षणाफलन्तु व्यंग्यप्रतीतिर्व्यंञ्जनया भवतीत्यभिप्रायः प्रतिभाति। इदञ्च व्याख्यानं काव्यप्रकाशमूलाक्षराद् विपरीतम् अविपरीतं वेति विवेचनीयमास्ते। एतादृशे च विवेचने टीकावच-नानि न सहायकानि आदेयानि, तानि तु अन्येषामभिप्रायमादायापि प्रवृत्तानि न मूलाक्षरमात्रोपजीव्यानि।

यद्यपि काव्यप्रकाशग्रथे ध्वनिकाव्यताऽस्य स्फुटा, साहित्यदर्पण-संदर्भस्तु रमणस्य व्यंग्यमात्रं विद्योतयन् गुणीभूतव्यंग्यतयाऽपि समन्वेति, संभवति च रमणं विना अनुपपद्यमानस्य वाक्यार्थस्य स्वाङ्गतानयम्, तथापि रमणस्य लक्ष्याङ्गत्वेऽपि विप्रलम्भरतिमादाय ध्वनित्वसमर्थने न ग्रन्थयो-

विरोधः, न च प्रकाशकृतं रमणस्य व्यङ्ग्यतावर्णनं निष्प्रयोजनं विप्रम्भ-रतिपोषणाय समुपयोगात्,

मुख्यार्थबाधमात्रं साहित्यदर्पणस्य स्फुटमभिप्रेतम्, व्यंग्यं लक्ष्यार्थं-स्याङ्ग नवेत्यत्र तदक्षराणि उदासीनानि इत्यवदधता ग्रन्थाभिप्रेतप्रकाशने प्रक्रमणीयमित्युचितं प्रतिभाति, एवं रमणचिह्नानि स्नानव्याजेन निगूहति दूतो, नायिका च उपालभते इत्यभिप्रैति दर्पणकारः, ततश्च मुख्यार्थबाध-लक्ष्यार्थस्फुरणे स्फुटतां व्रजतः।

अतः परं पुस्तकद्वयमधीतवतामप्यय्यदीक्षितानां चित्रमीमांसामीमांसितं मतमवलोकनोयम्, तत्र च प्राक्तनयोः प्रभावश्च विवेक्तव्यः, तत्र हि अभिधा-मूलैव व्यञ्जनोपास्यते, लक्षणाचर्चा नास्ति, परं साहित्यदर्पणमतमिव तटा-धरादिपदानां रमणासाधारणपरत्वमिव अर्थो व्याख्यायते, प्रायस्तदक्षराण्येव अवबोधसौकर्याय आवर्तयामि—

अत्र वापीं स्नातुं गतासि न तु तत्सकाशमिति वाक्यार्थे स्थिते तत्स-काशमेव रन्तुं गतासीत्यधमपदेन प्राधान्येन व्यज्यते, तथाहि-अधमत्वमपकृष्टत्वं तच्च जात्या कर्मणा वा भवति, तत्र जात्याऽपकर्षं नोत्तमनायिका नायकस्य वदति, नापि स्वापराधपर्यवसायिदूतीसंभोगादिहीनकर्मातिरिक्तेन कर्मणा, तादृशञ्च दूतीसंभोगात्प्राचीनं सर्वं सोढमेवेति नोद्घाटनार्हम्, अन्यथा स्वयं दूतीप्रेषणानुपपत्तेः, तदनन्तरञ्च, स्वप्रेषितदूतीसंभोगरूपमेव स्वयं सन्नि-हितचिन्हैर्ज्ञातुं शक्यं हीनकर्म संभवतीति तात्पर्यावसायिनाऽधमपदेन तस्या-न्तिकमेव रन्तुं गतासीति व्यज्यते निश्शेषच्युतचन्दनं स्तनतटमित्यादीनि वाच्यानि संभोगचिन्होद्घाटनेन तत्र सहायकमाचरन्ति। कथम्? निश्शेष-च्युतचन्दनं स्तनतटमित्यत्र तावद् वापीं स्नातुमितो गतासीति वाच्यार्थमुप-पादयितुमिहोत्तरीयकर्षणेन चन्दनच्युतिरित्यन्यथासिद्धिपरिहाराय निश्शेष-विशेषणं कृतम्, चन्दनच्युतेः स्नानसाधारण्यव्यावर्तनेन संभोगचिन्होद्घाटनाय तटग्रहणम्, स्नाने हि सर्वत्र चन्दनच्युतिः स्यात् तव तु स्तनयोस्तटे उपरि-भाग एव दृश्यते, इयमेषाश्लेषकृतैवेति। तथा निर्मृष्टरागोऽधर इत्यत्र ताम्बूलग्रहणविलम्बात् प्राचीनरागस्य किञ्चिन्मृष्टतेत्यन्थासिद्धिपरिहाराय निर्मृष्टराग इति रागस्य निःशेषमृष्टतोक्ता, पुनः स्नानसाधारण्यव्यावर्तनेन संभोगचिन्होद्घाटनायाधर इति विशिष्य ग्रहणम्, उत्तरोष्ठे सरागेऽधरो-ष्ठमात्रस्य निर्मृष्टरागता चुम्बनकृतैवेति। नेत्रे दूरमनञ्जने इत्यत्र प्रातर्दत्त-मञ्जनं कालविलम्बेन किञ्चिद्विलुप्तमित्यन्यथासिद्धिपरिहाराय दूरमित्युक्तम्;

दूरमत्यर्थमित्यापाततोऽर्थः, कालतः स्नानेन वा सर्वतोऽञ्जनलोपः स्यात्, तव तु लोचनयोः क्वचित्प्रान्त एवानञ्जनत्वमिद चुम्बनकृतमेवेति। पुलकिता तन्वी तवेयं तनु-इत्यत्रापाततस्तन्वीति सहजतानवकोर्तनेन पुलकितेति स्नानचिन्होपन्यासः, पुलकिताऽपि तन्वी वर्तते इति हृदि स्थितोऽन्वयः, तेन च स्नानेन पुलकिता तनुः किञ्चिदुच्छ्वसिता भवति, इयं तु न तथेति रतिक्लेश-जनितावेव तानवपुलकोद्गमौ इति सर्वोद्घाटनम्। एवमेभिर्वाच्यैरुपस्कृते-नाधमपदेन तस्यान्तिकमेव रन्तुं गतासीति व्यज्यमाने प्राग्वाच्यार्थतादशायां वापीं स्नातुं गतासोत्येतदनुगुणार्थतयाऽन्वितं मिथ्यावादिनीति सम्बोधनमपि व्यङ्ग्यानुगुण एव पर्यवस्यति। ततश्च न्यग्भावितवाच्यमस्यापि व्यङ्ग्यं वाच्यातिशयीति इदमपि ध्वनेरुदाहरणम् इति चित्रमीमांसाग्रन्थः।

इत्थमत्र प्रतिभाति-'प्रधान्येनाधमपदेन व्यज्यते' इति काव्यप्रकाश-मूलस्य **'अन्येऽपि तटाधरादिपदार्था व्यञ्जकाः, प्रधानन्तु व्यञ्जकमधमपदम्** इत्यर्थमभिप्रेति, अतएव **'संभोगचिन्होद्घाटनेन साहायकमाचरन्ति'** एवमेभि-र्वाच्यैरुपस्कृतेनाधमपदेन इत्यादिः लेखोऽस्य संगच्छते, कथमपि उपलक्षणार्थे तृतीयां मनुते काव्यप्रकाशस्थप्राधान्येनेति पदार्थस्य व्यञ्जनक्रियान्वय द्वारा वाच्यार्थात्प्रधानमतिशायिव्यङ्ग्येत्यभिप्रायकमपि व्याख्यानं तट्टीकादिषु दृश्यते!

तटाधरादिपदानामेवं व्याख्यानं करोति येन मुख्यार्थबाध आयाति, परं लक्षणाचर्चां न तनुते, तथा च साहित्यदर्पणाभिप्रेतं तटाधरादिपदानां रमणनियतार्थकत्वं मनुते, तथा च हृद्गताऽस्य लक्षणा विशेषणानां स्नान-साधारणता वेति विद्वद्भिर्विवेचनीयमास्ते।

अतः परं पण्डितराजजन्नाथः प्राक्तनपुस्तकत्रयस्य कीदृशमभिप्रेत-मङ्गीकरोति? स्वयञ्च कथं व्याख्यातीति रसगङ्गाधरोद्धृतपदेरेवाधस्तने-रवगच्छन्तु पाठकाः—

यत्तु चित्रमीमांसायाम् अप्पय्यदीक्षितैः निश्शेषच्युतचन्दनमिति पद्यं ध्वन्युदाहरणप्रसङ्गे व्याख्यातम् उत्तरीयाकर्षणेन चन्दनच्युतिरित्यन्यथासिद्धि-परिहाराय इत आरभ्य सहायकमाचरन्तीति, तदेतद् सकलालंकारशास्त्रतत्त्वा-नवबोधनिबन्धनम्, प्राचीनसकलग्रन्थविरुद्धत्वादुपपत्तिविरोधाच्च। तथाहि पञ्चमोल्लासशेषे निश्शेषेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति, यतश्चात्रैव स्नानकार्यत्वेनोपात्तानि, नोपभोगे एव प्रतिबद्धानीत्यनैकान्तिकानि इति काव्यप्रकाशकृतोक्तम्। तथा तत्रैव तेन

'भम धम्मिअवीसत्थो सो' इत्यादौलिङ्गजलिङ्गिज्ञानरूपेणानुमानेन व्यक्ति गतार्थयतो व्यक्तिविवेककृतो मतं प्रत्याचक्षाणेन व्यभिचारित्वेनासिद्धत्वेन संदिह्यमानादपि लिङ्गाद्व्यञ्जनमभ्युपगतम्। इत्थमेव च ध्वनिकृताऽपि प्रथमोद्द्योते। एवञ्च व्यञ्जकानां साधारण्यं प्रतिपादयतां प्रामणिकानां ग्रन्थैः सहासाधारण्यं प्रतिपादयतः स्वग्रन्थस्य विरोधः स्फुटः, किञ्च यदिदं निश्शेषेत्याद्यवान्तरवाक्यार्थानां वापीस्नानव्यावृत्तिद्वारेण व्यङ्ग्यासाधारण्यं सम्पाद्यते तत्किमर्थमिति पृच्छामः, व्यङ्ग्यस्य व्यञ्जनार्थमिति चेन्न व्यञ्जकगतासाधारण्यस्य व्यञ्जनानुपायत्वात्। 'औणिदं दोब्बल्लचिन्ता' इत्यादौ साधारणनामेवौन्निद्रयादीनां वक्त्रादिवैशिष्ट्यादर्थविशेषव्यञ्जकताया अभ्युपगतेः, प्रत्युतासाधारण्यस्य व्याप्त्यपरपर्यायस्यानुमानानुकूलतया व्यक्तिप्रतिकूलत्वाच्च। अथ तटादिघटितत्वेऽपि न निश्शेषेत्यादिवाक्यार्थानामसाधारण्यम् सलिलाद्रवसनकरणकप्रोच्छनादिनापि तत्संभवादितिचेत्तर्हि वापीस्नानव्यावर्तनेन कः पुरुषार्थः ? एकत्रानैकान्तिकत्वस्येव बहुष्वनैकान्तिकताया अपि ज्ञाताया अनुमितिप्रतिकूलत्वाद् व्यक्त्यप्रतिकूलत्वाच्च। अपि चात्र हि तदन्तिकमेव रन्तुं गतासीति व्यङ्ग्यशरीरे तदन्तिकगमनं रमणरूपफलांशश्चेत्ति द्वयं घटकम्, तत्र तावत्तदन्तिकं गतासीत्यंशस्य त्वन्मते व्यङ्ग्यत्वं दुरुपपादम्, त्वदुक्तरीत्या विशेषणवाक्यार्थानां निश्शेषेतिप्रतिपाद्यानां वाच्यार्थे वापीस्नाते बाधितत्वाद्वाच्यकक्षागतप्रधानवाक्यार्थीभूतं विधिनिषेधप्रतिपादकाभ्यां गता न गतेतिशब्दाभ्यां विरोधिलक्षणया निषेधस्य विधेश्च प्रतीतेरुपपत्तेः, नहि मुख्यार्थबाधेनोन्मीलितेऽर्थे व्यक्तिवेद्यतोचिता यथा 'अहो पूर्णं सरो यत्र लुठन्तः स्नान्ति मानवाः' इत्यत्र कर्तृविशेषणानुपपत्त्यधीनोल्लासे पूर्णत्वाभावे।

अथ तदन्तिकगमनस्य लक्षणावेद्यत्वेऽपि रमणांशस्य फलस्य लक्ष्यशक्तिमूलध्वननप्रवेद्यत्वमव्याहतमेवेति चेत्, अधमत्वमपकृत्वम् इत्यादिना सन्दर्भेण भवतैवार्थापत्तिवेद्यतायाः स्फुटं वचनात्, अन्यलब्धस्य च शब्दार्थताया अस्वीकृतेः।

अन्यच्च यथाकथञ्चिदङ्गीकुरु वात्र व्यञ्जनाव्यापारं, तथापि न तवेष्टसिद्धिः, वाच्यानां निश्शेषच्युतचन्दनस्तनतटत्वादीनामधमत्वस्य च त्वदुक्तरीत्या प्रकारान्तरेणानुपपदयमानतया दूतीसंभोगमात्रनिष्पाद्यत्वेन गुणीभूतव्यङ्ग्यत्वप्रसङ्गात्, एवं च उपपत्तिविरोधोऽपि स्फुटतर एव। तस्माद्वाच्यार्थसाधारण्यमेवोचितमतिविदग्ध नायिकानिरूपितानां विशेषणवाक्यार्थानाम्।

तथाहि मयि बान्धवजनस्याज्ञातपीडागमे स्वार्थपरायणे स्नानकालातिक्रमभयवशेन नदीमदीयप्रिययोरन्तिकमगत्वैव वापीं स्नातुम् इतो ममान्तिकाद

गतासि, न पुनस्तस्य परवेदनानभिज्ञतया दुःखदातृत्वेनाधमस्यान्तिकम्। यतो निश्शेषच्युतचन्दनं स्तनयोस्तटमेव नोरस्थलम्, वापीगतबहुलयुवजनत्रपापारवश्यादंसद्वयलग्नाग्रस्वस्तिकाकृतभुजलतायुगलेन तटस्यैवोन्नततया मुहुरामर्शात्, एवं त्वरया सम्यगक्षालनेनोत्तराष्ठो न निर्मृष्टरागोऽधरस्तु-तदपेक्षया गण्डूषजलरदनशोधनाङ्गुल्यादीनामधिकसम्मर्दनमावहतीति तथा किञ्च सम्यगक्षालनेन नेत्रे जलमात्रसंसर्गाद् दूरमुपरिभाग एवानञ्जने। शीत-वशात्तानवाच्च तव तनुः पुलकिता। एवं तस्या विदग्धाया गूढतात्पर्यं वोक्तिरुचिता, अन्यथा वैदग्ध्यभङ्गापत्तेः, एवं साधारणेषु वाक्यार्थेषु मुख्यार्थे बाधाभावात्तात्पर्यार्थस्य झटित्यनाकलनात्कुतोऽत्र लक्षणाऽवकाशोऽनन्तरं च वाक्यार्थप्रतिपत्तेर्वक्तृबोद्धव्यनायकादीनां वैशिष्ट्यप्रतीतौसत्याम-धमपदेन स्वप्रवृत्तिप्रयोजको दुःखदातृरूपोधर्मः साधारणात्मा वाच्यार्थदशायाम पराधान्तरदुःखदातृत्वरूपेण स्थिता व्यञ्जनाव्यापारेण दूतीसंभोगनिमित्तक-दुःखादातृत्वाकारेण पर्यवस्यतीत्यालङ्कारिकसिद्धान्तनिष्कर्षः। एतेन '**अधमत्व-मपकृष्टत्वमित्यारभ्य संभोगरूपमेव पर्यवस्यतीत्यन्तम्**' यदुक्तं तदपि निर-स्तम्। विदग्धोत्तमनायिकायाः सखीसमक्षं तदुपभोगरूपस्य स्वनायकापराधस्य स्फुटं प्रकाशयितुमतितमामनौचित्येन प्राचीनानामेव सोढानामप्यपराधानाम-सह्यतया दूतीं प्रति प्रतिपिपादयिषितत्वादिति दिक्।

अतः परमपि महद्भिरालंकारिकमल्लैर्मृदुतां नीतायां व्यायामभूमौ किमपि लुण्ठनमात्रन्तु विधेयमेव, न भेतव्यञ्चाशुद्धेः सम्भावितपरकृतखण्डन-पराजयाच्च यदा नैकशास्त्रदीक्षिता दीक्षिता अपि पिच्छिले आलंकारिक-पथे स्खलन्तस्तत्त्वानवबोधित्वेन शिक्षितास्तदा शास्त्रकणक्रीडामाचरन्तः के वयं वराकाः? तत्रापि प्रथमं कथञ्चित् स्फुरन्ती श्रीमती समन्वयशेमुषी आवाह्यताम्।

नायकोऽयमुपपतिः, दूती च स्नानव्याजेन रमणमपलपति, नायिका-याश्च सोल्लुण्ठनवचःपरं पद्यमिदम्, अपलापानन्तरं सोल्लुण्ठनवचसि प्रायो लाक्षणिकप्रयोगः, अतो मिथ्यावादित्वोपादानाच्च मुख्यार्थबाधस्य झटित्या-कलनाल्लक्षणामुपास्ते विश्वनाथः। नायकः प्रियपतिः, नायिका चोत्तमा अव-गतमपि नायकदोषं प्रचारयितुमक्षमा, दूती च न किञ्चित्वक्ति, परं स्नानस्वरूपं दर्शयति, मिथ्याव दशीलं दूतीसम्भावनगंनपर्यवसायि, न प्रकृतवाक्यार्थविषय-कम्, अन्यथा स्नातुं गता आसम् इति दूतीवाक्यानन्तरं जातस्यास्य नायिका-

वचसी मिथ्यावादिनीति शब्देनैव मुख्यार्थबाधः समागच्छेत्, अतः स्नानसाधारणमेवेदं वाक्यमिति पण्डितराजो मनुते ।

अत्र दीक्षितकुलभक्तो गुरुमर्मप्रकाशकारो नागेशभट्टमहोदयः प्रायो मौनमालम्बते, मध्ये संक्षेपेण अस्वरसप्रदानेन कुत्रचित् किञ्चिदेव दीक्षितमतं पुष्णाति, प्रहरविरतावित्यादिपद्यस्याग्रे ग्रामतरुणमित्यादिपद्यनिदर्शनमुखेन किमपि यल्लिखति तत्सम्बन्धः प्रकृतेऽपि कियता क्लेशेन योजयितुं शक्यते, किन्तु पाठकानां क्लेशेनावगमक्षमं स्यादिति उपेक्षे ।

इदानीं तटस्था बुद्धिरुपतिष्ठताम् साहित्यदर्पणस्यैव व्याख्यानमारचयति दीक्षितः, लक्षणाप्रदर्शनार्थमेव एवकारगर्भवाक्यार्थवर्णनम्, अन्तिमव्यङ्ग्यभावितवाच्यमित्यत्र वाच्यपदं लक्ष्यार्थस्याप्युपलक्षकम्, अधमत्वे मुख्यतात्पर्याभावाद् रमणे मुख्यतात्पर्याच्च रमणं प्रधानम् अतिशायि-अधमत्वस्य नाङ्गम्, अपितु अधमत्वादि रमणस्याङ्गम्, स्नानवाक्यार्थस्य मिथ्यावादित्वेन अवश्यं बाधः, रमणस्याधमत्वाद्यङ्गत्वसंदेहेऽपि विप्रलम्भरत्याभासमादाय ध्वनित्वमक्षतमेव, काव्यप्रकाशस्यापि इत्थमेव लक्षणायां तात्पर्यम्, अन्यथा मिथ्यावादित्वसूचितबाधाननुसन्धानापत्तेः, वस्तुतो व्याप्यज्ञानादनुमित्यादयः, अत्र च संभोगनियतत्वं वाक्यार्थस्य नायिकाभिप्रेतं कविसम्मतं वा न वास्तविकम् । ततो न पञ्चमोल्लासीयकाव्यप्रकाशविरोधः, नाप्यालंकारिकसिद्धान्तविरोधः शब्दजन्यस्य शाब्दानुभवस्यातिरिक्तस्य स्वीकारात्, तदर्थञ्च व्याञ्जनावृत्तेरावश्यकत्वात्, व्यभिचारिणोऽपि अर्थादुद्भवन्ती शाब्दजननी व्यञ्जना नाव्यभिचारिवस्तुसमागमे कुण्ठति ।

किञ्च—नायिका किमपि सूचयितुं दूतीं वक्ति, सूचनीयञ्च नूतनं स्यात्, अन्यथा व्यर्थप्रलापापत्तेः, यत्त्वया रमणं निगूह्यते तत्तु तव चिन्हैरेव मया अवगतम्, अतएव मिथ्यावादिनी असि, इत्येव नूतनं सूचनीयम् एतदेव वैदग्ध्यम् । तत्र सूचनीयं वक्तृतात्पर्यविषयः. तात्पर्यानुकूलताञ्च पदपदार्था अर्हन्ति, अतो रमणरूपे तात्पर्यार्थे व्याख्यानमुचितम्, यद्यपि व्यंजनाजन्यबोधो न तात्पर्यज्ञाननियन्त्रितस्तथापि न तात्पर्यविरुद्धस्वभावोऽपि, अतो नायिकातात्पर्यवर्णनमुखेन वाक्यार्थस्य रमणनियतत्ववर्णनमुपयुज्यते । मुख्यार्थे तात्पर्यबाधश्च लक्षणामुत्थापयेदेव ।

अपि च नायिकावचसा बोद्धव्या दूती वयञ्च काव्यानुभावका व्यंजनया अवबुध्यामहे नाम, परं नायिका तु दूतीगतसंभोगचिन्हैर्दृष्टै रमणमनुमिमा-

नैव दूतीं ब्रूते, अनुमानाय विशेषणानामसाधारण्यमवश्यमपेक्षितम्, अधम-पदार्थोऽपि वाच्यार्थदशायां साधारणः सन् पर्यवसितवाक्यार्थे विशेषाकारं धत्ते चेत् 'कमलानि कमलानी' त्यत्रेव लक्ष्यार्थत्वं न व्यभिचरति, अभिधया लक्षणया वा मनाक्स्पृष्टे मानिनी व्यञ्जना न प्रसरतीत्यपि आलंकारिक-सिद्धान्तः, रमणवृत्तान्ताभिज्ञां दूतीं प्रति अज्ञातप्रायं न वदेत् नायिका रमणवृत्तानभिज्ञतां न प्रदर्शयेत्, तथा करोति चेद् विदग्धतां विहाय मुग्धतां नयेत्, विदग्धाया दूतीसमक्षं दूतीरमणवृतान्तो न रहस्यतां गतः इत्यलमनभ्यस्तश्रमेण ।



दिल्ली संस्कृतरत्नाकर २४ वर्ष ११ अङ्क नवम्बर १९६२
संस्कृतमय प्रकाशित

# आलङ्कारिकाणां मल्लायितम्

मल्लों का संग्राम से व्यायाम से जैसे वल बढ़ता है वैसे ही शास्त्र रसिकों के शास्त्रार्थवाद से शास्त्र और विद्वानों के बुद्धि वैभव की समृद्धि होती है, वाद वाद में तत्वों का बोध होता है ऐसा छीया नहीं है, शास्त्र की चर्चा इस समय ह्रास को पाई है, पास में शास्त्र पढ़ने वाले नहीं है, विद्वज्जन दूसरे व्यवसाय में लगे हैं, भारत सरकार की संस्कृत की उन्नति की अभिलाषा से कुछ पत्रिकायें मासिक रूप से प्रकाशित होने लगी हैं, वे ही अखाड़ा होय। इस बुद्धि से मेरा कुछ प्रयास है, व्याकरण-न्याय-दर्शन कठिन हैं विशेष परिश्रम के विना समझ में नहीं आते ऐसा वहुत लोग मानते हैं, काव्य तो कोमल है, अनायास रसलोभी के हृदयों को खीचता है, इस समय सरल समझकर अधिक छात्र साहित्य ही पढ़ते हैं, इसलिये काव्य ही बुद्धि का व्यायामशाला हो, वही पर रसिक लोग बुद्धि वैभव के आचरणों को देखें, मेरे आलङ्कारिक आचार्य इसमें चमत्कार सार रखने के लिये कैसे प्रयत्न करते हैं ? कैसा काव्य व्याख्यान है ? पहले के आचार्यों के ग्रन्थों को पढ़कर उसी से अपनी बुद्धि को ऊहापोह में प्रवीण बनाकर उसी ग्रन्थ का किस प्रकार व्याख्यान करते हैं ? खण्डन और मण्डन से किस प्रकार अपने को ऋणमुक्त दीखाते हैं ?, उनकी रचनाओं से बुद्धि

भासे पदान्तरस्य निवेशं कृत्वा निर्दुष्ट लक्षणं सम्पाद्यते, परं प्रतिष्ठितं लक्षण-मेतदेव दृष्टिपथमायाति यत्र अव्याप्त्याधायकानि पदानि लक्षणे प्रवेशितानि, लक्षणनिविष्टपदानां निस्सारणेन लक्षणस्य निर्दोषीकरणं जायते, अन्ये यथा तथा वा प्रतिपद्यन्ताम् परं मम श्रद्धा तु नोदेति यत् सदोषस्य निरलङ्कारस्य च काव्यत्वं समीहमानोऽपि ग्रन्थकारो लक्षणे अदोषानलङ्कृतिपदे प्रयुञ्जीत। यथा च व्याख्यानमस्य दृश्यते तथा एवं प्रतिभाति यच्चमत्कृत्याधायकवस्तूनां परि-चयं प्रददाति ग्रन्थकारोऽनेन वाक्येन। अथवा लक्षणस्य सुबोधतया निरूपणीयं वस्तु प्रतिजानीते। अस्तु तत्, नात्र तद्विवेचनं प्रासङ्गिकं किन्तु बहुविधव्या-ख्यानधारायां शब्दस्य काव्यत्वेऽप्यस्य व्याख्यानं दृश्यते, यतः "अदोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" तत् काव्यमिति पदयोजना, तत्रापि यत्त इत्यस्य यत्प्रतिपाद्याविति केचन, अन्ये च यच्छरीरभूतौ इति। यत्तदोः काव्य-शब्दपरामर्शकत्वम्। अपरे तु शब्दपरत्वमव्याचक्षाणा अपि तथा विवृण्वते यथा अर्थवच्छब्दस्य काव्यत्वं बलादायाति, यथा अजाद्यदन्तम् इति सूत्रेण अर्थशब्दस्य पूर्वनिपातं संदिहानाः 'प्राधान्यात् शब्दशब्दस्य पूर्वप्रयोगः' इति ब्रुवते। ततश्च शब्दार्थयोर्गुणप्रधानभावे अर्थवच्छब्दस्य काव्यत्वं ब्रुवत एव।

काव्यप्रकाशलक्षणस्योपरि इत्थं रसगङ्गाधरमूलम्—तत्र विचार्यते—शब्दार्थयुगलं न काव्यशब्दवाच्यम्, मानाभावात्, काव्यमुच्चैः पठ्यते, काव्या-दर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः, इत्यादि विश्वजनीनव्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च। व्यवहारः शब्दमात्रे लक्षणयोप-पादनीय इति चेत्, स्यादप्येवम्, यदि काव्यपदार्थतया पराभिमते शब्दार्थयुगले काव्यशब्दशक्तेः प्रमापकं दृढतरं किमपि प्रमाणं स्यात्, तदेव तु न पश्यामः, विमतवाक्यन्त्वश्रद्धेयमेव। इत्थञ्चासति काव्यशब्दस्य शब्दार्थयुगलशक्तिग्राहके प्रमाणे प्रागुक्ताद् व्यवहारतः शब्दविशेषे सिद्ध्यन्तीं शक्तिं को नाम निवार-यितुमीष्टे। एतेन विनिगमकाभावादुभयत्र शक्तिरिति प्रत्युक्तम्। तदेवं शब्द-विशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्, न तु स्वकल्पितस्य काव्यपदार्थस्य, एषैव च वेदपुराणादिलक्षणेष्वपि गतिः। अन्यथा तत्रापीयं दुरवस्था स्यात्। यत्त्वास्वादोद्बोधकत्वमेव काव्यत्वप्रयोजकं तच्च शब्दे चार्थे चाविशिष्टमित्याहुस्तन्न रागस्यापि रसव्यञ्जकतायाः ध्वनिकारादिसकलालङ्का-रिकसम्मतत्वेन प्रकृते लक्षणीयत्वापत्तेः, किं बहुना नाट्याङ्गानां सर्वेषामपि प्रायशस्तथात्वेन तत्त्वापत्तिर्दुर्वारैव। एतेन रसोद्बोधसमर्थस्यैवात्र लक्ष्यत्व-मित्यपि परास्तम् इत्यादि।

अत्र प्रत्युतशब्देन तद्बाधकव्यवहारस्य भूयस्त्वं सूचितम्। काव्यं ज्ञातं काव्यं बुद्धमिति व्यवहारस्यापि अर्थे शब्दे च समानभावेन प्रवृत्तिः। यदपि शब्दस्य काव्यतानये शब्दनित्यतावादे च काव्यं कुरु इति व्यवहारोच्छेदः, अर्थस्य काव्यत्वे च करणसंभवात् तदुपपत्तिरिति तदतिरभसात्, शब्दं कुरु इत्यादि व्यवहारस्य यथोपपादनं तथा काव्यं कुरु इत्यस्यापि संभवात्। कथमन्यथा शब्दार्थयुगलनये शब्दस्यापि काव्यपदार्थतया तदनुपपत्तिर्न आयाति ? तथा च शब्दस्य काव्यत्वे न कश्चिद्बाधको व्यवहारः।

एवञ्च स्वेतरप्रमाणानधिगतस्य अबाधितस्य अर्थस्य प्रतिपादकः शब्दो वेदः, सर्गप्रतिसर्गादिपञ्चलक्षणार्थस्य प्रतिपादको व्यासशब्दः पुराणम्, अतीतार्थप्रतिपादकः शब्द इतिहास इत्यादि शब्दप्रधानान्येव लक्षणानि विधेयानि। अन्यथा वेदमधीते, पुराणं पठतीत्यादिव्यवहारस्य मुख्यत्वं न स्यात्।

मन्त्रब्राह्मणात्मकः शब्दराशिरिति आपस्तम्बः। तदनुसारमेव ऋग्वेदभाष्यानुक्रमणिकायां सायणाचार्यः। स एव च अपौरुषेयं वाक्यं वेद इत्यपि ब्रूते। एतदेव मीमांसाभाष्यसम्मतम्। न्यायकुसुमाञ्जलौ पञ्चमस्तवके अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वं वेदत्वमित्युदयनाचार्यः। तत्रैव च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दाजन्यवाक्यार्थज्ञानजन्यप्रमाणशब्दत्वं वेदत्वमिति वर्धमानोपाध्यायः। समयबलेनाबाधितपरोक्षानुभवसाधनम् आगमः स्मृतिरिति सायणः। तथा च अर्थवच्छब्दविशेषपरत्वमेव वेदादीनां यथा सम्प्रदायस्तथा काव्यस्यापि शब्दविशेषपरत्वमेव सम्प्रदायः। तदुलङ्घनेन अप्रामाणिकलक्षणाश्रयणमनुचितं व्यवहारोपपादनायेति सिद्धम्।

अत्र रसगङ्गाधरस्य मर्मप्रकाशः—अतएव वेदत्वादेरुभयवृत्तित्वप्रतिपादकः 'तदधीते' इत्यादिसूत्रस्थो भगवान् पातञ्जलिः संगच्छते इति ब्रूते। तच्च परीक्ष्यताम्। इदं हि तत्र भाष्यम्—किमर्थमिमावुभावप्यर्थौ निर्दिश्येते, न योऽधीते वेत्त्यप्यसौ, यश्च वेदाधीतेऽप्यसौ, नैतयोरावश्यकः सन्निवेशः, भवति हि कश्चित्संपाठं पठति न वेत्ति, तथा कश्चिद् वेत्ति न संपाठं पठति इति। अत्र प्रदीपः—न य इति यो हि यं ग्रन्थमधीते तं स्वरूपतोऽवश्यं वेत्ति, यश्च स्वरूपतो वेत्ति सोऽवश्यमधीत इति भावः। नैतयोरिति। अर्थावबोधनं वेदनमभिप्रेतं न तु स्वरूपमात्रवेदनम्, तत्र परस्परव्यभिचारदर्शनादुभयोरुपादानमित्यर्थः। संपाठमिति। अर्थनिरपेक्षं स्वाध्यायं पठतीत्यर्थः इति। अनेन भाष्येण वेदत्वं शब्दार्थोभयवृत्ति अर्थवच्छब्दवृत्ति वेति सूच्यत इति चिन्त-

नीयम्। कैयटग्रन्थेन पूर्वोत्तरपक्षयोरुभयोरपि वेदस्वरूपे नार्थस्य प्रवेश इति स्फुटमायाति। अर्थज्ञानं विनापि वेदस्वरूपवेदनस्य तेनाङ्गीकारात्, तच्च वेदस्य शब्दार्थोभयरूपत्वं स्फुटं विरुणद्धि, अर्थवेदनं विना वेदार्थस्वरूपस्यावेदनात्।

भाष्यविरोधोऽपि दृश्यताम्-अर्थवेदननिरपेक्षं शब्दमात्रपठनमपि वेदपठनम्, शब्दनिरपेक्षमर्थवेदनं वेदवेदनमिति मनुते भगवान् भाष्यकारः, वेदस्योभयस्वरूपत्वे न वेदपाठो न च वेदवेदनमपि इति मर्मप्रकाशस्य कीदृशी भाष्यभक्तिः ? वेदपाठादिशब्दो लक्षणयोपपद्यत इति चेत् व्यवहारे कुत्र वेदशब्दस्तव मते मुख्यार्थ इत्यन्विष्यताम्, न कुत्रापि चेद् धन्येयं लक्षणासक्तिः। तस्मान्न कुत्रापि केनचिद् वेदत्वं शब्दार्थोभयव्यासक्तमभिप्रेतं मर्मप्रकाशतत्सहचरैर्विना। किन्तु न शब्दमात्रं शब्दविशेषः, नापि तावानेव किन्तु अर्थविशेषविशिष्टः शब्दो वेद इति समेषामभिमतम्। शब्दमात्रस्य न वेदत्वमपि तु अर्थविशेषविशिष्टस्येति विषये इदं भाष्यं प्रमाणमन्यानि च भाष्याणि। तेन प्रोक्तमिति सूत्रस्थं भाष्यमपि वेदत्वस्य शब्दार्थोभयवृत्तित्वे प्रमाणमिति मन्वते नागोजीभट्टमहोदयाः परं विवेचने अर्थविशेषस्य वेदस्वरूपे प्रवेश इत्येवायाति न तु समानभावेन शब्दार्थोभयोरिति। स च अर्थविशिष्टशब्दस्य वेदत्वेऽपि संगच्छते।

तेन प्रोक्तम् ( ४-३-१०१ ) सूत्रस्थमिदं भाष्यम् प्रोक्तग्रहणमनर्थकं तत्रादर्शनात् प्रोक्तग्रहणमनर्थकम्, किं कारणम् ? तत्र अदर्शनात्, ग्रामे ग्रामे काठकं कालापकञ्च प्रोच्यते तत्रादर्शनात् न च तत्र प्रत्ययो दृश्यते, ग्रन्थे च दर्शनात्—यत्र च दृश्यते ग्रन्थः स भवति, तत्र कृते ग्रन्थे इत्येव सिद्धम्, छन्दोऽर्थं तर्हीदं वक्तव्यम्, छन्दोऽर्थमिति चेत्तुल्यमेतद् भवति, ग्रामे ग्रामे काठकं कालापकञ्च प्रोच्यते तत्रादर्शनात्, ननु चोक्तं—नहि च्छन्दांसि क्रियन्ते नित्यानि च्छन्दांसीति, यद्यप्यर्थो नित्यो यात्वसौ वर्णानुपूर्वी साऽनित्या, तद्भेदाच्चैतद् भवति काठकं, कालापकं, मोदकं, पैप्पलादकमिति, इत्यादि।

अत्र यात्वसाविति प्रतीके प्रदीपः महाप्रलयादिषु वर्णानुपूर्वीविनाशे पुनरुत्पद्य ऋषयः संस्कारातिशयाद् वेदार्थं स्मृत्वा शब्दरचनां विदधतीत्यर्थः। तद्भेदादिति प्रतीके आनुपूर्वीभेदादित्यर्थः। ततश्च कठादयो वेदानुपूर्व्याः कर्तार एव न तु स्थिततया एव सुशर्मादिवत् प्रवक्तारः, ततश्च छन्दस्यपि कृते ग्रन्थे इत्येव सिद्धः प्रत्यय इति भावः। यद्यप्यर्थो नित्यो प्रतीके उद्योतः— अंशे न वेदस्य नित्यत्वं स्वीकृत्य अंशेनानित्यत्वमाह इति।

अस्य भाष्यस्य अर्थविशेषविशिष्टः शब्दविशेषो वेदः, विशेषणीभूतार्थस्य नित्यत्वेऽपि विशेष्यशब्दस्य अनित्यत्वात् कठादिभ्यः कृते ग्रन्थे प्रत्ययो भवतीत्याशयः। शब्दार्थयोः समभावेन वेदत्वे शब्दार्थयुगलस्य वेदस्य अकृततया कथं प्रत्ययप्राप्तिरिति भाष्यं विरुध्यते, शब्दस्य प्राधान्ये तु घटत्वस्य अकृतत्वेऽपि विशेष्यद्रव्यस्य कृतत्वात् कृतो घट इति यथा भवति तथा अर्थस्याकृतत्वेऽपि विशेष्यशब्दस्य कृतत्वात्प्रत्ययः सिद्ध्यति, घटत्वमादाय अकृतो घट इति व्यवहारवारणाय पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन इति न्यायेन विशेषणे पदार्थान्तरान्वयवारणात्। तथापि उद्योतः—अनेन वेदत्वं शब्दार्थोभयवृत्तीति ध्वनितमिति, ब्रूते किं कर्त्तव्यम्।

षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यादिश्रुतिरपि अर्थविशिष्टशब्दस्य वेदत्व एव संगच्छते, विशेष्ये शब्दे अध्ययनस्य सूपपादत्वात्, ज्ञेयत्वन्तु विशेषणविशेष्ययोरुभयोरपि संभवः। समानभावेन शब्दार्थयुगलस्य वेदत्वे तु शब्दाऽध्ययनम् अर्थे ज्ञेयत्वञ्चोपपादनीयम् तच्च न सम्भवति धवं पश्य, खदिरं छिन्धि, इति तात्पर्येण धवखदिरौ पश्य, छिन्धि चेति प्रयोगस्य साहित्याभावेन अव्युत्पन्नत्ववद् वेदरूपौ शब्दार्थौ अध्येयो ज्ञेयश्चेत्यस्याप्यव्युत्पन्नत्वात्। लक्षणया कथञ्चिदुपपादने च पण्डितराजवचस एव विजयः। शब्दार्थयुगलस्य वेदत्वे तस्य पाठासंभवस्तु प्रागेवोक्तः। वैयाकरणमूर्धन्यो महाभाष्यविज्ञो हरिरपि वेदस्य वाग्रूपतां व्याचष्टे—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥"

एवञ्च शब्दविशेषस्य काव्यत्वमिति पण्डितराजस्योपपादनं सम्यक् प्रतिभातीति विवेचनीयं विद्वद्भिरिति निवेदनात्किमधिकेन।

विद्वन्महीन्द्रमहिमानमनुव्रजन्त्याम्
नैवाक्षिपन्तु कलुषं मम तद्विवृत्त्याम्॥
रत्नाकरस्य सरसां तरसा न किञ्चिद्
रूपं बिभर्ति गलितावयवं विनैव॥

गुरो त्वदीये मृदुले सरोजपादे कर्तुं काव्यविचारमेनम्॥
समर्पयन् शिष्ययशो विलुम्पन् हीनो धिया दीनवचा नमामि॥

पटना संस्कृत सञ्जीवन संस्कृत पत्रिका के २२ बाइसवें वर्ष में संवत् २०१८ आश्विन पूर्णिमा तृतीय अङ्क में संस्कृत में प्रकाशित

# शब्दार्थ या शब्द काव्य है

संस्कृत में इस शीर्षक का स्वरूप 'शब्दार्थौ शब्दो वा काव्यम्' हैं। वहाँ द्विवचन होने से अधिक स्फुट होता है। हिन्दी में द्विवचन न होने से वैसा स्पष्ट नहीं होता, शब्द और अर्थ दोनों समान भाव से काव्य हैं एक एक नहीं ऐसा एक मत है जो काव्यप्रकाश का प्रसिद्ध है। प्रधान रूप से शब्द काव्य है उसमें विशेषण अर्थ है ऐसा दूसरा मत है, जो पण्डितराज जगन्नाथ का रसगङ्गाधर में लिखा हुआ है। इसमें पहले मत की आलोचना के साथ दूसरे मत का महत्त्व बताया जाता है।

रमणीय अर्थ का प्रतिपादक शब्द काव्य है ऐसा रसगङ्गाधर का मूल काव्य लक्षण है। इसमें अर्थ शब्द से शब्द न लेना यह भूल कहा जायेगा। क्योंकि वहाँ मूल में ही, जिसकी भावना चमत्कार का कारण हो वह रमणीय अर्थ है ऐसा वर्णन किया गया है। शब्द की भावना से भी चमत्कार होता ही है अतः रमणीय अर्थ पद से शब्द विशेष भी लिया जायेगा।

और देखा जाय,—ग्रन्थों में उपमा के अनेक ऐसे उदाहरण दिये गये हैं जिनमें उपमा सम्पादक साधारण धर्म शब्द ही है, वहाँ उपमा का अङ्ग ही शब्द हुआ है, वहाँ उपमा की भावना शब्द की भी भावना है, इसलिये वहाँ रमणीय अर्थ शब्द भी है। यदि काव्य के लक्षण में शब्द से भिन्न ही अर्थ लिया जाय तो वैसी उपमा वाले काव्यों के उदाहरणों में काव्य लक्षण का अव्याप्ति दोष हो जायेगा, क्योंकि वहाँ शब्द भिन्न रमणीय अर्थ नहीं मिलेगा। वहाँ जो उपमा से चमत्कार है वह शब्द से भी है।

इतना ही नहीं—रसगङ्गाधर में आगे कारणमाला प्रकरण में 'न सोऽस्ति प्रत्ययो लोके' इत्यादि वाक्यपदीय कारिका के अनुसार सभी शाब्द बोधों में शब्द का

भान नव्य न्याय शैली से कार्यकारण भाव वर्णन के साथ दर्शाया गया है, उसके अनुसार सभी काव्यार्थ की भावना शब्द भावना है, अतः चमत्कार को पैदा करने वाली भावनाओं का विषय शब्द भी है इसलिये शब्द भी रमणीय अर्थ है। आलङ्कारिक ग्रन्थों को देखा जाय, यद्यपि सभी जगह शब्द और अर्थ दोनों को भावना अवश्य है किन्तु विशेष चमत्कार अन्वय व्यतिरेक से शब्द के अधीन बताया गया है, कोई उदाहरण वर्ण व्यञ्जकता का कोई पद का, दूसरे प्रकृति के अन्य प्रत्यय व्यञ्जकता के उदाहरण दिये गये हैं। भाव यह है कि यद्यपि शब्द अर्थ दोनों की भावना चमत्कार कारण है किन्तु कहीं अर्थ चमत्कार शब्द चमत्कार से बढ़ जाता है वहाँ भावना में अर्थ प्रधान और शब्द विशेषण हो जाता है, वहाँ अर्थचित्र का व्यवहार होता है। जहाँ शब्द चमत्कार अर्थ चमत्कार से बढ़ जाता है वहाँ भावना शब्द को प्रधान और अर्थ को विशेषण करके होती है वहाँ शब्द चित्र का व्यवहार होता है। इस प्रकार विशेष अर्थ वाला शब्द काव्य है ऐसा दूसरा मत सिद्ध होता है। जैसे आत्मा और शरीर में शरीर का शरीरी भाव है, शरीरी आत्मा से भिन्न शरीर है, वैसे ही शब्द और अर्थ काव्य का शरीर है ऐसा अभियुक्तों का व्यवहार है, यहां भी शरीर और शरीरी में कुछ भेद होना चाहिये, अर्थवान् शब्द को यदि काव्य माना जाता है तो शब्द और अर्थ शरीर हो सकता है, शरीरी काव्य शब्द है, शरीर में अर्थ अधिक का प्रवेश होने से शरीरी से भेद हो सकता है, शब्द अर्थ दोनों को समान भाव से काव्य मानने पर शरीरी काव्य और शरीर शब्द और अर्थ दोनों में भेद सिद्ध नहीं होगा, इसलिये काव्य का शरीर शब्द और अर्थ है ऐसा भेद व्यवहार नहीं बनेगा अथवा लाक्षणिक मानना पड़ेगा। इस मत के अनुसार रमणीय शब्द और अर्थ शरीर का प्रतिपादक शब्द काव्य है, ऐसा लक्षण का अभिप्राय होता है। जिससे कि शब्द रूप काव्य में अर्थ का भी प्रवेश स्फुट हो।

वाक्यपदीय में शब्द में भी अर्थ के ऐसा ग्राह्यत्व शक्ति का उल्लेख है, वैयाकरण भूषण आदि में छः प्रातिपदिकार्थ पक्ष चलाकर उस ग्राह्यत्व शक्ति का स्पष्ट उपपादन किया गया है। इस प्रकार शब्द का भी प्रतिपादक शब्द है यह सिद्ध है। शब्दार्थ शरीर है इसका अभिप्राय है कि अलङ्कार का आश्रय होता हुआ भावना का

विषय बनकर चमत्कार का कारण शब्दार्थ है, क्योंकि मानव शरीर में ही अलङ्कारों का उपयोग होता है न कि शरीरी में, उसी प्रकार काव्य शरीर शब्दार्थ में अलङ्कारों की भावना होती हैं। पण्डितराज के मत में शब्दार्थ में भी गुण की भावना हो सकती है यह दूसरी बात है। इससे यह सिद्ध हुआ कि 'शब्द को काव्य मानने पर शब्द में नहीं रहने वाले अर्थालङ्कारों का निरूपण अप्रासङ्गिक हो जायेगा' ऐसा किन्हीं व्याख्याताओं का रसगङ्गाधर पर आक्षेप पूर्व वर्णित लक्षण के अभिप्राय को नहीं समझने के कारण है।

कोई ऐसा भी व्याख्यान करता है कि 'प्रतिपादकता सम्बन्ध से रमणीय अर्थ वाला शब्द काव्य है' इसका भी 'अर्थविशेष वाला शब्द विशेष काव्य है' इसी में पर्यवसान है। इसमें भी शब्दार्थ शरीर वाला काव्य है ऐसा पहले के ऐसा ही समन्वय है, शरीर अंश में शब्दार्थ समान रूप से प्रविष्ट हैं तथा शरीरी काव्य में शब्द प्रधान है इसलिये किन्हीं आचार्य वचनों का विरोध नहीं है। पहले ही के ऐसा अर्थ शब्द से शब्द का ग्रहण समझना है।

व्याकरण शास्त्र में भी प्रसिद्ध है कि 'स्वंरूपं शब्दस्याशब्दसञ्ज्ञा' इस सूत्र से शब्द स्वरूप की उपस्थिति होती है और 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' इस परिभाषा से अर्थ की उपस्थिति होती है, दोनों में किसी का परित्याग नहीं होता, व्याकरण में शब्द से काम करना है इसलिये शब्द प्रधान हो जाता है, अर्थ उसका विशेषण बनता है, फलतः अर्थवान् शब्द का ग्रहण किया जाता है, इसलिये अनर्थक अग्नि शब्द से 'अग्नेढंक्' सूत्र से ढक् प्रत्यय नहीं होता। उसी प्रकार अर्थवान् शब्द को काव्य मानने पर अर्थ का प्रवेश काव्य में हो गया। अतः अर्थ के सम्बन्धी अलङ्कार और गुणों का निरूपण आवश्यक ही हुआ।

और देखा जाय। पशु शब्द का अर्थ वर्णन किया जाता है कि रोंआं वाला जो पूछ वैसे पूंछ वाले जानवर को पशु कहते हैं, चूहे के पूंछ में रोआं नहीं होता उसकी व्यावृत्ति के लिये वैसा विशेषण दिया जाता है, पशु के शरीर में पूंछ विशेषण और पूंछ में रोम विशेषण है, वहाँ पूंछ और रोम पशु के अङ्ग होते हैं तथा रोम-पूंछों के दूषित या अलङ्कृत होने पर पशु दूषित या अलङ्कृत होता है। उसी प्रकार

अर्थवान् शब्द रूप काव्य के अर्थ को गुणी, दूषित या अलङ्कृत होने पर काव्य भी गुणी, दूषित या अलङ्कृत होता है, अतः अर्थाश्रित गुण, दोष, अलङ्कारों का निरूपण प्रासङ्गिक ही होगा।

रसगङ्गाधर पर स्वर्गीय महामहोपाध्याय पण्डित श्री गङ्गाधर शास्त्री जी की टिप्पणी प्रकाशित है। उसमें लिखा हैं कि शब्दमात्र को काव्य मानने पर शब्दमात्र में रहने वाले दोष, गुण, अलङ्कार, ध्वनिओं का निरूपण उचित होगा अर्थ मे रहने वाले उन दोष आदि का निरूपण उन्मत्त प्रलाप हो जायेगा यदि रस का उपयोगी होने से उनका निरूपण कहें तोभी उचित नहीं होगा। काव्य के अङ्गों के निरूपण की प्रतिज्ञा करके इसके उपयोगी का निरूपण असंगत ही होगा। और क्या ? कवि के प्रयत्न के विषय शब्द और अर्थ दोनों हैं इसलिये दोनों को काव्य मानना चाहिये केवल शब्द को नहीं।

मेरी समझ में यह आक्षेप पण्डितराज को नहीं छुता। उन्होंने शब्द मात्र को काव्य नहीं कहा है, अर्थ विशेष से विशिष्ट शब्द विशेष को काव्य कहते हैं, काव्य का अङ्ग शब्द के ऐसा अर्थ भी है इसका उपपादन किया गया है। उनकी वैसी प्रतिज्ञा भी कहीं नहीं है। अर्थ वाला शब्द कवि के यत्न का विषय है इसमें कोई विवाद नहीं मालूम पड़ता।

इसी प्रकार ऋचा सूक्त आदि पदों का अर्थविशेष से युक्त शब्द ही शक्य है। 'आद्यन्तवदेकस्मिन्' सूत्र के महाभाष्य में निम्नलिखित अभिप्राय का शङ्का और समाधान किया गया है। एक वर्ण पद, एकपदा ऋक्, एकर्च सूक्त इत्यादि मुख्य व्यवहार नहीं हो सकता है, पद एक वर्ण रूप ही है। उससे भिन्न वहां कोई नहीं है तब एक वर्ण है जिस पद में ऐसे बहुव्रीहि समास में अन्य पदार्थ कौन हैं ? इसी प्रकार एक पद है जिस ऋचा में, एक ऋक् है जिस सूक्त में, अन्य पदार्थ कोई नहीं मिलता। रेफवर्णवाला रेफ से घटित राम पद यह मुख्य व्यवहार है, क्योंकि रेफ से भिन्न रामपद अन्य पदार्थ है। एकवर्णपद व्यवहार में एक वर्ण से अतिरिक्त कोई नहीं है जो अन्य पदार्थ हो सके, एक वर्ण पद का एक वर्ण से घटित पद अर्थ है, एक वर्ण रूप ही पद वास्तव में उसी से घटित नहीं हो सकता, किन्तु स्वयं अपने से घटित आहार्य आरोप

बुद्धिकरके व्यवहार है इसलिये वह मुख्य व्यवहार नहीं है। इसी भांति एक पद से घटित ऋचा और एक ऋचा से घटित सूक्त व्यवहार मुख्य नहीं है। अमुख्य व्यवहार होने से 'व्यपदेशिपदेकस्मिन्' परिभाषा के उपयोग की शङ्का करके समाधान किया कि यहाँ अर्थ से युक्त व्यवहार है, पद अर्थ है ऋक् अर्थ हैं सूक्त अर्थ है, अर्थ से युक्त व्यवहार इसमें अर्थ शब्द से निमित्त लिया गया है, व्यवहार निमित्त है आरोप मूलक व्यवहार नहीं है। यहां प्रदीप व्याख्यान करता है कि पद-ऋक्-सूक्त का जो अर्थ है वह अन्य पदार्थ है, उपचार से पद आदि के अर्थ को पद-ऋक् आदि शब्दों से कहा गया है। यहाँ अर्थ पद का अर्थवाला शब्द अभिप्रेत है, शब्द बोधक पदों की अर्थ युक्त शब्द में शक्ति मानी गई है। वृत्ति का विषय अर्थ कहा जाता है, उस प्रकार अर्थ वाला शब्द भी अर्थ हुआ। शब्दों की केवल शब्द स्वरूप में शक्ति नहीं है ऐसा पहले कहा गया है। इस तरह अर्थ वाला शब्द अन्य पदार्थ हुआ और केवल शब्द अवयव हुआ। इस भाष्य से अर्थ विशेष वाला शब्द पद-ऋचा और सूक्त है, उसमें शब्द अर्थ समान भाव से हैं ऐसा बताने वाला भाष्य का कोई शब्द नहीं है, भाष्य से और प्रदीप से इतना ही कहा गया कि पद-ऋक्-सूक्तों को केवल शब्द नहीं समझना चाहिये किन्तु अर्थ युक्त शब्द समझना चाहिये, केवल शब्द समझने पर अन्य पदार्थ नहीं मिलता शङ्का है, अर्थयुक्त शब्द रूप मानना सिद्धान्त है, अर्थयुक्त शब्द अन्य पदार्थ हुआ केवल शब्द उसका अवयव है। उसी प्रकार अर्थ वाला शब्द काव्य है। जो यहाँ उद्योत में लिखा है कि पद आदि शब्दों के जो अर्थ हैं वे अर्थ से युक्त हैं। वह भी अनुकूल ही है, पद-ऋक्-सूक्त शब्दों से जिनका व्यवहार होता है वे अर्थ वाले है ही। समाधान भाष्य मुख्य व्यवहार बताता है, उसमें साक्षात् व्यवहार का निमित्त होना चाहिये इस अभिप्राय से ऐसा व्याख्यान करना चाहिए। प्रदीप ने केवल अर्थ को अन्य पदार्थ माना है ऐसा समझकर उद्योत ने प्रदीप का खण्डन किया है यह दूसरी बात है। यहाँ उद्योत में जो लिखा है कि पादत्व-सूक्तत्व आदि शब्द और अर्थ दोनों में रहते हैं वह अपनी मान्यता के अनुसार लिखा है भाष्य के अक्षर वैसे नहीं हैं। पण्डितराज के मत में भी भाष्य की योजना अच्छी ही होती है। इनके व्यवहार क्षेत्रों में कहीं भी समान रूप से शब्द और अर्थ दोनों का उपयोग नहीं होता। अर्थ वाले शब्द रूप से इनका व्यवहार कहीं भी बाधित नहीं है।

शब्द-अर्थ जोड़ा काव्य है ऐसा कुछ लोगों का व्यामोह इसलिये हुआ कि प्राचीन कुछ आलङ्कारिक ग्रन्थ स्फुट प्रतिपादन नहीं कर पाते, जैसे, काव्य प्रकाश को ले, अदोष-सगुण शब्द और अर्थ काव्य हैं ये शब्दार्थ कहीं कहीं अलङ्कार रहित भी होते हैं, इसका अधिकत्तर लोग लक्षण रूप से व्याख्यान का ही आग्रह करते हैं, इसीलिये मैं भी भिन्न प्रकार से लक्षण की भांति ही व्याख्यान करता हूँ, वास्तविक विचार में तो यह लक्षण अभिप्राय वाला ग्रन्थ नहीं मालूम पड़ता, ऐसा लक्षण ग्रन्थ तो मिलता है कि मूल लक्षण में अतिव्याप्ति आदि दोष मालूम पड़ने पर और अन्य पदों का निवेश करके निर्दुष्ट लक्षण किया जाता है, किन्तु प्रतिष्ठित लक्षण ग्रन्थ यही मिलता है जिसमें अव्याप्ति दोष करने वाले शब्द लक्षण में प्रविष्ट किये गये हैं, और लक्षण में प्रविष्ट पदों को निकालकर निर्दुष्ट लक्षण करते हैं। दूसरे लोग जैसे तैसे भी समझें किन्तु मेरी श्रद्धा नहीं होती कि सदोष को काव्य मानता हुआ भी ग्रन्थकार लक्षण में अदोषपद दे, इसी प्रकार सालङ्कार निरलङ्कार दोनों को काव्य मानता हुआ भी लक्षण में 'कहीं पर अनलङ्कार' ऐसा लक्षण में कहे, और लोगों के व्याख्यान को देख कर ऐसी भावना उठती है कि ग्रन्थकार इस लेख से चमत्कार को करने वाले पदार्थों का परिचय देता है, अथवा लक्षण सुवोध होने से कैसे कैसे वस्तुओं का निरूपण करना है उसकी प्रतिज्ञा करता है, रहे यह, इसका विशेष विवेचन प्रासङ्गिक नहीं होगा। किन्तु इसकी अनेक प्रकार की व्याख्या धारा है उसमें शब्द को काव्य मानने वाली व्याख्यान धारा को भी देखना जरूरी है। मूल में तत् शब्द है, यतः पद का अध्याहार किया जायेगा, यत् और तत् शब्द से काव्य शब्द लिया जायेगा, जिससे प्रतिपाद्य अदोष सगुण अलङ्कार से उपलक्षित शब्दार्थ हो वह शब्द काव्य है। अथवा जिसका शरीर भूत अदोष सगुण अलङ्कार से उपलक्षित शब्दार्थ हो वह काव्य है। दूसरे लोग ऐसे भी कहते हैं कि भले व्याख्याता शब्दार्थ युगल को काव्य मानते रहें किन्तु जैसा उनका व्याख्यान है उससे सिद्ध होता हैं कि ग्रन्थ में शब्दार्थौ शब्द से शब्द और अर्थ समान रूप से प्रधान नहीं हैं, किन्तु शब्द प्रधान है और अर्थ शब्द की अपेक्षा गौण है अर्थात् शब्द का विशेषण है। अर्थवान् शब्द काव्य है। व्याख्यान देखा जाय। शब्दार्थौ शब्द में 'अजाद्यदन्तम्' सूत्र से अर्थ शब्द का पूर्व निपात क्यों नहीं हुआ ? ऐसा संदेह करके व्याख्याता स्वयं

समाधान करते हैं कि शब्द प्रधान होने से शब्द का पूर्व निपात हुआ। इससे सिद्ध हुआ कि काव्य में शब्द और अर्थ का समान भाव से सन्निवेश नहीं है, किन्तु अर्थवान् शब्द ही काव्य काव्यप्रकाश ग्रन्थ का भी अभिप्रेत हुआ।

काव्य प्रकाश के काव्य लक्षण पर रस गङ्गाधर मूल ऐसा कहता है, यहाँ यह सोचा जाता है—शब्दार्थ युगल काव्य शब्द का वाच्य नहीं है क्योंकि प्रमाण नहीं है, काव्य जोरों से पढ़ा जाता है, काव्य से अर्थ समझा जाता है, काव्य सुना अर्थ नहीं जाना, इत्यादि सभी जनों के व्यवहार से उलटे शब्द विशेष ही काव्य शब्द का अर्थ सिद्ध होता है, शब्द मात्र में काव्य शब्द का व्यवहार लक्षणा से सम्पन्न होगा ऐसा तव कहा जा सकता है जव कि शब्द और अर्थ जोड़े में काव्य पद की शक्ति साधने वाला कोई प्रवल प्रमाण उपस्थित हो, वैसा दीख नहीं पड़ता, विवादग्रस्त व्यवहार प्रमाणों में श्रद्धा नहीं होती।

इस प्रकार शब्दार्थ युगल में काव्य पद की शक्ति साधने वाले प्रमाण का अभाव होने पर अवाधित ऊपर वताये हुए व्यवहार प्रमाणों से शब्द विशेष में सिद्ध होने वाली काव्य पद की शक्ति को कौन रोक सकता है? इन प्रमाणों के रहने पर विनिगमक न रहने से शब्द अर्थ दोनों में शक्ति है यह कहना भी नहीं हो सकता, इस तरह शब्द विशेष काव्य पदार्थ सिद्ध होने पर उसी का लक्षण करना उचित है न कि स्वयं कल्पित काव्य पदार्थ का। यही गति वेद पुराण आदि के लक्षणों में भी है, नहीं तो वहाँ भी ऐसी दुरवस्था होय। जो कहा जाता है कि आस्वाद का उद्बोधक काव्य है, शब्द अर्थ दोनों आस्वाद के उद्बोधक हैं इसलिये शब्द अर्थ दोनों काव्य हैं, वह ठीक नहीं, क्योंकि राग आस्वाद का उद्वोधक है ऐसा ध्वनिकार आदि सभी आलङ्कारिकों को सम्मत है, राग भी काव्य हो जायेगा, उसका भी लक्षण से संग्रह और निरूपण आवश्यक पड़ जायेगा। अधिक क्या कहना नाट्यों के सभी अङ्ग प्रायः आस्वाद के उद्वोधक हैं, उन सभी का संग्रह आ पड़ेगा। इन्हीं कारणों से रस के प्राकट्य में समर्थ काव्य लक्ष्य है इत्यादि किसी का कथन आदरणीय नहीं है।। इति।।

यहाँ रसगङ्गाधर में प्रत्युत शब्द से बाधक व्यवहार की अधिकता सूचित की गई है। काव्य ज्ञात हुआ इत्यादि व्यवहार शब्द अर्थ में समान रूप से संगत हैं।

शब्द विशेष को काव्य मानने के पक्ष में कोई आक्षेप ऐसा भी करने का साहस करता है कि शब्द नित्य है इस पक्ष में काव्य करों ऐसा व्यवहार नहीं बनेगा। अर्थ को काव्य मानने पर अर्थ का करना संभव होने से व्यवहार बन सकता है, इत्यादि, वह बहुत जल्दी बाजी की कल्पना मालूम पड़ती है, क्योंकि उस पक्ष में शब्द करों इस व्यवहार का जैसे उपपादन होगा वैसे काव्य करों का भी होगा, नहीं तो शब्दार्थ युगल काव्य पक्ष में वैसा दोष क्यों नहीं होता? इस प्रकार शब्द विशेष को काव्य मानने में कोई बाधक व्यवहार नहीं मिलता।

इसी प्रकार अपने से भिन्न प्रमाणों द्वारा अज्ञात अबाधित अर्थ का प्रतिपादक शब्द वेद है। सर्ग प्रतिसर्ग आदि पांच प्रकार के वस्तुओं का प्रतिपादक व्यास का शब्द पुराण है। अतीत अर्थ का प्रतिपादक इति-ह-आस आदि शब्द से घटित प्रमाण शब्द इतिहास है। इत्यादि शब्द प्रधान ही लक्षण करना चाहिये नहीं तो वेद का अध्ययन करता है पुराण को पढ़ता है इत्यादि व्यवहारों की मुख्यता नहीं होगी। मन्त्र और ब्राह्मण स्वरूप शब्द राशि वेद है ऐसा आपस्तम्ब मत है। उसी के अनुसार ऋग्वेद भाष्य अनुक्रमणिका में सायणाचार्य मानते हैं। वे ही दूसरी जगह अपौरुषेय वाक्य वेद है ऐसा बोलते हैं, यही पूर्व मीमांसा भाष्य सम्मत है, कुसुमाञ्जलि पञ्चम स्तवक में जिसका दूसरा मूल न मिलता हो ऐसे महाजनों से गृहीत वाक्य को वेद उदयनाचार्य कहते हैं। वहीं पर शब्द और शब्द से उपजीवी प्रमाण से अतिरिक्त जो प्रमाण उससे जन्य जो प्रमा उसका विषय जिसका अर्थ न हो और शब्द से नहीं होने वाला जो वाक्यार्थ का ज्ञान उससे जन्य प्रमाण शब्द को वेद वर्धमानोपाध्याय कहते हैं। समय बल से अबाधित जो परोक्ष उसके अनुभव का साधन आगम स्मृति है ऐसा सामणाचार्य कहते हैं। इस प्रकार अर्थवान् शब्द विशेष में जैसे वेद आदि की शक्ति का सम्प्रदाय है वैसे ही शब्द विशेष में काव्य के व्यवहार का सम्प्रदाय है, उसके उल्लंघन से अप्रमाणित लक्षण द्वारा किसी प्रकार के व्यवहार का उपपादन अनुचित है।

यहां के रसगङ्गाधर पर मर्म प्रकाश कहता है—इसी कारण वेदत्व आदि को शब्द और अर्थ दोनों में बताने वाले 'तदधीते तद्वेद' इस सूत्र का भगवान पतञ्जलि संगत होते हैं। इसके खण्डन में पहले बहुत लिखा जा चुका। भगवान् पतञ्जलि के

महाभाष्य की परीक्षा की जाय। यह वहां का महाभाष्य है—अध्ययन और वेदन इन दो अर्थों का उपदेश करते हैं सो क्यों ? जो पढ़ता है वह जानता भी है, जो जानता है वह अध्ययन भी करता है ऐसा क्यों नहीं मानते जिससे एक ही के निर्देश से दोनों ले सके ?। ऐसी शङ्का ठीक नहीं है दोनों का सन्निवेश आवश्यक है। ऐसा भी होता है कि कोई शब्द पाठ मात्र करता है अर्थ नहीं जानता, कोई देखता हुआ अर्थ का ज्ञान करता है शब्द परायण नही करता, यहाँ प्रदीप नय इति प्रतीक पर जो जिस ग्रन्थ को पढता है उसको स्वरूप से जानता भी है, जो स्वरूव से जानता है वह पढ़ता भी है यह भाव है। वैतयोरिति प्रतीक पर अर्थ का ज्ञान वेदन है केवल स्वरूप का ज्ञान नहीं, वहाँ परस्पर व्यभिचार होने से दोनों का ग्रहण है ऐसा अर्थ है। सं पाठ मिति प्रतीक पर अर्थ की अपेक्षा न करके स्वाध्याय पढ़ता है ऐसा अर्थ है। इस भाष्य से क्या वेदत्व शब्द अर्थ दोनों में है या अर्थवान् शब्द में है ? इसको सोचना चाहिये प्रदीप के अनुसार पूर्व और उत्तर दोनों पक्षों में वेदस्वरूप में प्रधान रूप से अर्थ का प्रवेश नहीं है यह स्फुट आता है क्योंकि अर्थ ज्ञान के विना भी वेद स्वरूप का वेदन वताता है, वह शब्द अर्थ दो स्वरूपवेद की मान्यता का विरोध करता है, यदि दोनों स्वरूपवेद हो तो दोनों का वेदन वेदस्वरूप वेदन होगा, केवल शब्द का वेदन वेदस्वरूप वेदन नहीं होगा। भाष्य विरोध भी देखा जाय अर्थ निरपेक्ष शब्द मात्र का पठन वेद पठन भाष्यकार मानते हैं। और शब्द निरपेक्ष अर्थ के वेदन को वेदन मानते हैं, शब्द और अर्थ दोनों स्वरूप वेद को मानने पर न वेद पाठ हुआ न वेद वेदन हुआ, मर्मप्रकाश की कैसी भाष्य भक्ति है ?। वेद पाठ आदि व्यवहारों का लक्षणा से चलाने पर उद्यत होना तव हो सकता है, जव कहो व्यवहार में शब्दार्थ युगुल का वेद शब्द का वाच्यार्थ होना सिद्ध होय, खोजना चाहिये, यदि कही व्यवहार में शब्दार्थ युगल को वेदार्थ होना नहीं मिलता तव यह लक्षणा की आसक्ति विलक्षण होगी। इसलिये मर्मप्रकाश और उसके सहचरों के विना कहीं भी कोई वेदत्व को शब्द और अर्थ दोनों में व्यासक्त नहीं मानता है, किन्तु अर्थ विशेष से विशिष्ट शब्द विशेष वेद है यह सभी को अभिप्रेत है, शब्द मात्र वेद नहीं है किन्तु अर्थविशेष विशिष्ट शब्द वेद है इसमें यह भाष्य तथा दूसरे भाष्य भी प्रमाण हैं। श्री नागोजी

भट्ट महादेय वेदत्व शब्द और अर्थ दोनों में रहता है इस अपनी मान्यता पर 'तेन प्रोक्तम' ४।३।१०१ सूत्र के भाष्य को प्रमाण बनाते हैं। किन्तु भाष्य का विचार करने पर इतना ही आता है कि वेद केवल शब्द रूप नही है किन्तु अर्थ विशेष से युक्त ही शब्द वेद है, उससे यह निकलता कि समान रूप से शब्द और अर्थ दोनों वेद रूप हैं, अर्थ विशेष से विशिष्ट शब्द विशेष को वेद मानने पर भी इस भाष्य का समन्वय हो जाता है।

तेन प्रोक्तम् सूत्र का यह भाष्य है प्रोक्त ग्रहण अनर्थक है वहाँ नहीं देखने से, प्रोक्त ग्रहण अनर्थक है, क्या कारण है ? वहाँ नहीं देखना, गांव-गांव में काटक और कालापक कहे जाते हैं वहाँ प्रत्यय नहीं दीखता, ग्रन्थ में देखा जाता है, जहाँ ग्रन्थ अर्थ में प्रत्यय देखा जाता है वहाँ ग्रन्थ अर्थ में 'तत्र कृते ग्रन्थे' इस सूत्र से ही प्रत्यय सिद्ध है इस सूत्र का उदाहरण ही नहीं होगा। तब छन्द के लिये इस सूत्र को कहना चाहिये, छन्द के लिये भी कहने पर तुल्य है गांव-गांव में काठक कालापक कहे जाते हैं वहाँ प्रत्यय नहीं देखा जाता है, अरे छन्द के लिये कहा गया है कि छन्द नहीं किये जाते छन्द नित्य होते हैं, यद्यपि छन्द के अर्थ नित्य हैं किन्तु जो वह वर्णो की आनुपूर्वी है वह अनित्य है, उस आनुपूर्वी के भेद से काठक कालापक, मोदक, पैप्पालादक इत्यादि होते हैं। यहाँ यात्वसौ प्रतीक पर प्रदीप कहता है—महाप्रलय आदि में वर्णों की आनुपूर्वी का विनाश होने पर फिर उत्पन्न ऋषि लोग विशेष संस्कार के कारण वेद के अर्थ का स्मरण कर शब्द रचना करते हैं। तद्भेदात् इस प्रतीक पर आनुपूर्वी भेद से, और इससे कठ आदि वेद की आनुपूर्वी के कर्ता ही है न कि स्थित वेद का सुशर्मा आदि के ऐसा प्रवक्ता हैं। और इससे छन्द में भी प्रत्यय तत्र कृते ग्रन्थे से ही सिद्ध है। यद्यप्यर्थो प्रतीक पर उद्योत कहता है—अंश से वेद को नित्य मानकर अंश से अनित्य कहते हैं।

वेदार्थ के शब्द अंश में ही प्रोक्त-कृत-काठक आदि इस प्रकरण के विशेषण समन्वित होते हैं अर्थ अंश में नहीं, अर्थ अंश में ये विशेषण बाधित हैं, अतः वेदार्थ में शब्द के समकक्ष प्रधानता से अर्थ का प्रवेश इस भाष्य को सह्य नहीं है। यह ध्यान में रखने लायक है। अतः अर्थविशेषविशिष्ट शब्द विशेष वेदार्थ इस भाष्य का अभिप्रेत

है। विशेषणी भूत अर्थ को नित्य होने पर भो विशेष्य शब्द को अनित्य होने से कठ आदि से शब्दो से कृत अर्थ में प्रत्यय होता है ऐसा आशय है। वेदार्थ में अर्थ प्रधान मानने पर वह कृत नहीं होगा प्रत्यय कैसे होगा, वैसा मानना भाष्य विरुद्ध होगा। विशेषण घटत्व को अकृत होने पर भी विशेष्य द्रव्य अंश को कृत होने से जैसे घट कृत होता है वैसी ही विशेषण अर्थ के नित्य होने से अकृत होने पर विशेष्य शब्द को कृत होने सें कठ आदि से कृत वेद विशेष हो सकता है। घटत्व में अन्वय के तात्पर्य से घट अकृत है ऐसे प्रयोगों के कारण के लिये पदार्थ पदार्थ के साथ अन्वित होता है पदार्थ के एक देश के साथ नही ऐसा न्याय प्रसिद्ध ही है। तो भी यहाँ उद्योत कहता है कि वेदत्व शब्द अर्थ दोनों में रहता है ऐसा इस भाष्य से ध्वनित है, तो क्या किया जाय?

निष्कारण ब्राह्मणों का षडङ्ग वेद अध्येय और ज्ञेय है इस अभिप्राय वाली श्रुति शब्द प्रधान और अर्थ विशेषण वाले वेद शब्द के अर्थ में ही समन्वित होती है, क्योंकि शब्द का ही अध्ययन 'तदधीते तद्वेद' सूत्र भाष्य सें सिद्ध हुआ है, ज्ञेय तो शब्द अर्थ दोनों में समन्वित हो जाता है। व्यवहारों का किसी प्रकार लक्षणा द्वारा उपपादन करने पर भी पण्डितराज के वचनों की ही विजय होगी।

वैयाकरण मूर्धन्य महाभाष्यविज्ञ श्री भर्तृहरि भी वेद को वाक् शब्द से व्यवहृत करते हैं।

अनादि निधना नित्या वागुत्सृष्टा स्वयं भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥

इस प्रकार शब्द विशेष काव्य है ऐसा पण्डितराज का विवेचन ठीक मालूम पड़ता है इस पर विद्वानों को विचार करना चाहिये। इस निवेदन से अधिक क्या?। कहीं कुछ भेद या अधिक मेरी रसचन्द्रिका में मिल सकता है। इति॥



प्रयागस्थ संगमनीपत्रिकायाश्चतुर्थवर्षस्य चतुर्थाङ्के २०२५ सम्वत्सरे प्रकाशितम्

# संभावनम्

संभावनं नाम ज्ञानमलंकारलक्षणेषु प्रविष्टं लोकव्यवहारविश्रुतं नैकैः प्राक्तनैश्चर्चितं कीदृशम् इति समासतो विवेचयितुं यथामति प्रयते।

संभावनं यदित्थं स्यादित्यूहोऽन्यस्य सिद्धये।
यदि शेषो भवेद् वक्ता कथिताः स्युर्गुणास्तव ॥

इत्यादिरीत्या अन्यसिध्यनुकूल - ऊहस्तर्कविशेषः संभावनं ज्ञानमिति आयाति। व्याप्यारोपेण व्यापकारोपस्तर्क इति तर्कसंग्रहानुसारं संभावनस्य आरोपरूपता च फलति। 'यदि इत्थं स्याद्' इति तस्य व्यवहारपरिचयवाक्यम्। शेषो यदि वक्ता स्यात् तव गुणाः कथिताः स्युरिति तदुदाहरणम्। धूमो यदि वन्हिव्यभिचारी स्याद् वन्हिजन्यो न स्यात्, अस्ति च वन्हिजन्यस्तस्मान्नास्ति वन्हिव्यभिचारी इति रीत्या यदि तव गुणाः कथनीयाः स्युस्तर्हि अन्येषामशक्ततया शेषो वक्ता स्यात्। नास्ति शेषो वक्ता तदा अनन्ततया विलक्षणतया वा तव गुणाः न कथनीया इत्यूहः। एवमारोपरूपतया तदभाववति तत्प्रकारकं ज्ञानं संभावनं फलितम्। आरोपात्मकं ज्ञानं संभावनशब्दस्यार्थः। अन्यसिद्ध्यनुकूल–इत्यादिविशेषणस्य तु अलङ्कारसंभावनपरिचायकतयोपयोगः प्रतिभाति।

कारकसिद्धान्तकौमुदीग्रन्थस्य 'अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु' इति सूत्रस्योदाहरणेऽपि आरोप एव संभावना आयाति। संभावनाविषयस्य अस्धात्वर्थभवनस्य दौर्लभ्यमुक्तम्। दौर्लभ्यञ्च असत्त्वप्रयुक्तम् इति सर्पिषोऽपि स्यादित्युदाहरणे स्फुटम्। अपि स्तुयाद्विष्णुमित्यत्र विष्णुकर्मकस्तवनस्याभाव एव परिशिष्यते। अत एव तत्र 'संभावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः' इत्युक्तिः। विषयमतिक्रम्य विषयाभावे यथोच्यते तथा नास्ति तथापि तथोक्तिरिति तदर्थः। व्याख्यातारोऽपि अवाङ्मनसगोचरं विष्णुमपि स्तुयादित्यधिकोक्तिः, एतादृशस्यान्यदीयस्तवने सामर्थ्यमस्तीत्यत्र किं वक्तव्यम्; इति ब्रुवते। इत्यतोऽन्यसिद्धयनुकूलताऽपि स्फुटेति। एवं 'संभावनेऽलमिति चेत् सिद्धाप्रयोगे' इति सूत्रव्याख्यायां 'संभावनं क्रियासु योग्यताऽध्यवसायः, इत्युक्तम्। तेन अपि स्तुयाद् विष्णुमित्यादौ स्तुतियोग्यतानिर्णयमात्रं फलं

तथा प्रतिपादनस्य। भवति च प्रत्येकं कारणस्य योग्यता, कार्योत्पत्तिश्च सामग्र्यधीना, अतो नावश्यं तथा कार्यम्।

रामं स्निग्धतरं श्यामं विलोक्य वनमण्डले।
प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः॥

इत्यत्र संभावनादपि ज्ञानात् केकिनां नर्तनं कार्यं स्वीकरोति उत्प्रेक्षा-प्रकरणे पण्डितराजः। तथा च आरोपात्मकेऽपि संभावनज्ञाने अन्यारोपविलक्षणं कार्योत्पादनमन्यसिद्धयनुकूलता च सिद्धयति। रामं स्निग्धतरमित्यत्र न भ्रान्तिः भ्रान्त्युदाहरणतया 'धाराधरधिया धीरं नृत्यन्ति स्म शिखावलाः' इति तेनैव विपरिणमनात्।

अतिशयोक्तेस्तृतीयभेदं 'यद्येवं स्यात्तथापत्तौ' इति वर्णयन् संभावना-लङ्कारञ्च तत्रैवान्तर्भावयन् असत्यार्थकम् आरोपात्मकमेव ज्ञानं संभावनमभि-प्रैति अलङ्कारकौस्तुभकृद् विश्वेश्वरपण्डितः। परं लेखे असंभावितशब्दोल्लेखेन न स्फुटं प्रदर्शयितुमशकत्। तथाहि तस्य लेखः—तृतीयभेदेऽपि कथञ्चिद् असंभावितार्थकल्पनप्रतिपत्तिरेव विवक्षिता। यथा अस्य क्षोणीपतेः परार्धपरया इत्यादि प्रसिद्धं पद्यम्। ततः परम् 'एतेन' इति कृत्वा 'संभावनं यदीत्थम्' इत्यादि—पृथगलङ्कारत्वमपास्तम्' इत्यन्तेन। एवं सोपज्ञटीकायां विश्वेश्वर-पण्डित एव—संभावनञ्च साधारणधर्मदर्शननिमित्तकं प्रकृतविशेष्यकं तादात्म्य-संसर्गकमप्रकृतप्रकारक निश्चयानात्मकं ज्ञानमिति लिखति। तत्र साधारणधर्म-दर्शननिमित्तकं निश्चयानात्मकं ज्ञानमिति संशयसाधारणं संभावनस्य लक्षणम्। अन्यच्चोत्प्रेक्षालक्षणाभिप्रायेण। यतः 'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति प्रकृतपदघटितं लक्षणं काव्यप्रकाशो ब्रूते।

इदं पण्डितराजस्योत्प्रेक्षालक्षणसूत्रम्-तद्भिन्नत्वेन तदभाववत्त्वेन प्रमितस्य पदार्थस्य रमणीयतद्वृत्तितत्समानाधिकरणान्यतरतद्धर्मसम्बन्ध-निमित्तकं तत्त्वेन तद्वत्त्वेन वा संभावनम् उत्प्रेक्षा। अत्र संभावनं पदं सामान्यज्ञानार्थकं प्रतिभाति। प्रमितान्तस्य आहार्यतां ग्रन्थकर्ता स्वयं ब्रूते। अन्यतरतद्धर्मपदेन संशय इव ज्ञानस्य निमित्तं सूचयति। लोकोत्तरप्रभावं तं मन्ये नारायणं परम् इति संभावनज्ञानस्योदाहरणं ददाति। लोकोत्तरप्रभावस्य नारायणत्वव्याप्यतासंभावनं विवृणुते। संभावनतया च अनुमितिं वारयति।

ततोऽनुमित्युपयोगिनो व्याप्तेर्निश्चयाद् वैलक्षण्यं सूचितम्। भ्रान्तेरपि वैलक्षण्यं संभावनस्याङ्गीकरोति। रूपकवित्तीत्यादावतिप्रसङ्गवारणाय संभावन-

मिति वदन् पण्डितराज आहार्यादपि वैलक्षण्यं सम्भावनस्य व्यक्तीकरोति, यतो भिन्नयोरुपमानोपमेययोराहार्यतादात्म्यनिश्चयो रूपकम् ।

अयथार्थज्ञानस्य 'संशय-विपर्यय-तर्का:' त्रयो भेदाः प्रसिद्धाः । त्रितय-वैलक्षण्यं संभावनज्ञाने पूर्वोक्तरीत्या आयाति, संशय इव समविरुद्धकोटिद्वयं नास्ति, विपर्यये भ्रान्तौ आहार्यता नास्ति, सम्भावने आहार्यता विद्यते । तर्क इव सर्वत्र अन्यसिद्ध्यनुकूलता व्यापकबाधनिश्चयादिर्नास्ति । एवं विवेचने त्रितयसाम्यमपि वर्णयितुं शक्येत । तथा च कोदृग्लक्षणं संभावनज्ञानमित्य-वशिष्यते एव ।

अतएव रसगङ्गाधरव्याख्याने नारायणेनानेन भवितव्यमिति पण्डित-राजसाक्षिको जातिविशेषोऽथवा 'कदाचित् सम्पद्येत' इत्यादिसाधारणप्रतीति-साक्षिकजातिविशेषः संभावनत्वमिति लिखितवानस्मि । अन्यत्र च अप्रामाण्य-शङ्काकवलितं निश्चयानात्मकं ज्ञानं संभावनमिति मम लेखे वर्तते ।

प्रशस्तपादीये अनध्यवसायोऽपि तृतीयोऽविद्याभेदोऽङ्गीकृतः, किरणावल्यां न्यायलीलावत्यादौ च वर्णितः । न्यायपञ्चाननादय आलङ्कारिकास्तमेव संभावनमामनन्ति । विशेषतोऽनुल्लिखितनानाकोटिकं हि ज्ञानं संभावनम् । कोटीनामुल्लेखाभावे एकस्याः कोटेर्वा अनुल्लेखे कोटीनां सामान्यत उल्लेखेऽपि विशेषतोऽनुल्लेखे सर्वथापि अनध्यवसायः, पनसफलं विशेषतोऽपरिचिन्वतो विदेशीयस्य किंस्विदयम् इति ज्ञानं यथा, किं शब्दप्रयोगादनिश्चयात्मकमिदम् । परं कोटेर्भानं नास्ति । अयमिति तु धर्मिनिर्देशः । अतो विशेषतः कोटेर-नुल्लेखात् संशयो न किन्त्वनध्यवसायः । किं पनसः स्विदयमित्युदाहरणे पनसत्वकोटेरुल्लेखेऽपि अपरकोटेः किञ्चित्त्वेनोल्लेखाद् विशेषत उल्लेखाभावा-ल्लक्षणसमन्वयः । मन्ये मुखं चन्द्र इत्याद्युत्प्रेक्षायां मुखत्वचन्द्रत्वकोट्योः शब्दबोधे भानेऽपि इदं चन्द्र इति एकचन्द्रत्वकोटिकसंभावनज्ञानस्यैव अलङ्कार-ताप्रयोजकत्वात् तस्य च शब्दबोधोत्तर सुलभात् ।

तत्राहं ब्रवीमि—मन्ये मुखं चन्द्र इत्यत्र मुखत्वचन्द्रत्वयोः कोटित्वेन भानं नास्ति, चन्द्रस्य तादात्म्येनोत्प्रेक्षायां धर्मितावच्छेदकतया उद्देश्यता-वच्छेदकतया वा मुखत्वस्य भानम् । तादृशमेव इदं चन्द्र इति ज्ञानम् । मुखस्येदन्त्वेनोद्देश्यतेति विशेषः ।

यदपि अनुपलब्धपक्ष-विपक्ष—सपक्ष—सहचारस्य असाधारणधर्मस्य दर्शनम् अनध्यवसाये कारणं संशये चोपलब्धस्येत्यादि तदपि न मनोरमं संभावने ज्ञाने विषयविषयिसाधारणस्यैवोपयोगो न तु अन्यत्र सहचारस्य ।

आलङ्कारिक एव चक्रवर्तिमहोदयोऽनध्यवसायाद् भिन्नमेव संभावनमङ्गीकरोति परं संभावनस्य स्फुटलक्षणं किमपि न प्रदर्शयति; आहार्यतामात्रं ब्रूते ।

ये तु अनध्यवसायं सम्भावनं वा अतिरिक्तं नाङ्गीकुर्वन्ति किन्तु संशयविपर्ययावेव तेषां संशये विपर्यये वा संभावनस्य कुत्र कथमन्तर्भाव इति अवशिष्यत एव ।

अलङ्कारकौस्तुभस्तु संभावनपदस्य उत्कटकोटिकसंदेहार्थकतां ब्रूते । तथा च तन्मते संशय एव संभावनस्यान्तर्भावः । संशयो द्विविधः, उत्कटकोटिकोऽनुत्कटकोटिकश्च । प्रथमः संभावनम् । तथा च संशयविशेषः संभावनम्, उत्कटत्वञ्च कोटौ निर्वचनीयम् । संशये 'अयं स्थाणुः पुरुषो वा' इत्यादौ अयमिति धर्मिनिर्देशः । स्थाणुत्वपुरुषत्वयोः कोटित्वेन व्यवहारः, तत्रैव एकत्र उत्कटत्वं वर्णनीयम् । अपेक्षणीया कोटिरुत्कटेत्यवैमि । समीहितस्यैवापेक्षाज्ञानं जायते, यत्र संशयेऽन्यतरकोटेरुपेक्षा अपेक्षा वा नास्ति स संशयः समकोटिकः । प्राचीनन्यायग्रन्थे संशयलक्षणे 'विशेषापेक्षः' इत्युपलभ्यते । यद्यपि विभिन्नरूपेणापि तद्व्याख्यानं तथापि साक्षात्परम्परया वा अपेक्षासम्बन्धोऽनुभूयते, अपेक्षाविरहे संशय एव नोदेति । किन्तु क्वचित् निर्णयमात्रस्यापेक्षा उभयोरेव वा अपेक्षा तत्र समा कोटिः, यत्र तु अवान्तरस्यैव अपेक्षा, तत्रोत्कटकोटिरित्यवधेयम् ।

अहन्तु उत्प्रेक्षादिस्थलीयसंभावने कोटिद्वयमेव नानुभवामि, किन्तूद्देश्यविधेयभावेनान्वय इत्युक्तप्रायोऽस्मि, विरुद्धयोरुभयोर्युगपद्भाने एव कोटिताव्यवहारः । संशये विरुद्धयोरुभयोर्विरुद्धत्वेन भानमन्यथा समुच्चयः स्यात् । संभावने विरुद्धयोरुद्देश्यतावच्छेदकविधेयतावच्छेदकयोर्यद्यपि भानं परं न विरुद्धत्वेनेति दिशि सूक्ष्मा दृक् प्रसारणीया ।

आहार्यताऽप्यस्य संभावनस्य विलक्षणैव । बाधकालीनं हि इच्छाजन्यं ज्ञानमाहार्यं प्रसिद्धम् बलवत्तरविपरीतनिश्चयस्य बाधनिश्चयस्य सत्त्वे प्रकृतज्ञानं कथमपीच्छावशाज्जायतां नाम परं बाधकवलितं ज्ञानं कथं चमत्कारं जनयेत् ? बाधितस्य ज्ञानाय कथमिच्छापि भवेत् ? जानाति तत इच्छतीति रीत्या इच्छां प्रति ज्ञानस्य कारणत्वप्रसिद्धौ अत्र इच्छया ज्ञानोत्पादवर्णनं कथन्न विरुध्यत इति बहु विचारणीयं तथापि समासतः किञ्चिद् वर्ण्यते ।

बाधितज्ञानादपि चमत्कारोदयः, रूपकादावपि आहार्यमेव ज्ञानम्, परं विभिन्नं कार्यम्। यथा लोके गालीप्रदानादिना क्रोधादेर्बाधितातिशयप्रशंसया च स्मितादेरुदयः। काव्यादौ च सहृदयस्य चेतसश्चमत्कारप्रवणता चमत्कारिशब्दार्थरचनादिभिः समेषां समाधानात्। चमत्कारिवस्तूपस्थापनायैव उत्प्रेक्षासंभावनायां लक्षणवाक्ये रमणीयतद्वृत्तितत्समानाधिकरणधर्मनिमितकत्वं रसगङ्गाधरे निवेशितम्। चमत्कारजनकज्ञानविषयीभूतं वस्तु रमणीयमुच्यते। अन्यत्र हृदयावर्जकं रमणीयं वर्तते। तेन चेतसश्चमत्कारप्रवणता सूच्यते।

तत्रैवं मम प्रतिभाति—उत्कटचमत्कारसाधनं ज्ञानं बाधनिश्चयो न प्रतिबध्नाति उत्कटचमत्कारसामग्रीविरहितो हि बाधनिश्चयः प्रतिबन्धको न तु तादृशसामग्रीसत्त्वे। अथवा बाधनिश्चयो न प्रतिबन्धकः किन्तु स्व-विरोधिज्ञाने अप्रामाण्यज्ञानोत्पादकः, वर्णिता चैषा रीतिर्बहुषु ग्रन्थेषु। एतामेवाश्रित्य संभावनं लक्षितम्। तथा च बाधनिश्चयेऽपि काव्यादौ शब्दबोधो जायत एव। बाधकवलिताय चमत्कारिज्ञानायापि चमत्कारानुरोधेनैव इच्छाया उत्पादात्। विषयतासम्बन्धेनेच्छां प्रति विषयतासम्बधेन ज्ञानस्य कारणत्वम्। समानविषयकत्वेनेति भावः। प्रकारान्तरेण इच्छाया अपि ज्ञानमनुमित्यादीन् प्रति कारणत्वं नैकस्थलेषु वर्णितमस्ति।

अहन्तु, चमत्कारिज्ञानस्य आहार्यतां न रोचये। आहार्यतोऽपि निकृष्टम् असंभविपदेन उत्प्रेक्ष्यं संभवनीयं वस्तु व्यपदिशन्ति कतिपये आलङ्कारिकाः। यथा काव्यप्रदीपः—संभविनोऽर्थस्य तादृशसंभविवस्तुरूपतया संभावनमुत्प्रेक्षा। संभविनो लोकसिद्धस्य, असंभवि लोकप्रसिद्ध्यभावेऽपि कविप्रतिभामात्रकल्पितम् इति तद्व्याख्या। मन्ये मुखं चन्द्र इत्यादौ तादात्म्यस्य असंभवित्वम्।

स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भावनिहितः।
स्रवन्मन्दाकिन्याः प्रतिदिवससक्तेन पयसा
कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव।

इत्यादौ इन्दौ संभाव्यमानः कपालाङ्कुरोऽसंभवी कविप्रतिभामात्रकल्पित इति वर्णयन्ति। तत्र कपालमङ्कुरश्च पृथक्प्रसिद्धावेव, कपालाङ्कुरयोः सम्बन्ध एव कल्पितः। सर्वथाऽसंभवि वस्तु वर्णितं सामाजिकचेतसि नावतरेत्, अस्य क्षोणीपतेः पराधंपरयेत्यादिपद्यस्थ-प्रज्ञाचक्षुरवेक्षणीय-बधिर-

श्रव्य बन्ध्याजातमूकगेयादिपदार्थवत् सर्वथाऽसत्त्वधिया चमत्कारपुष्टिर्न स्यात्। अन्यथा स्वर्गनरकाद्यद्भुतवर्णनं काव्यापेक्षया अधिकप्रियं स्यात्। किन्तु सामाजिकवासनाविषयसजातीया एव पदार्थाः कविप्रतिभागुणगुम्फिता नूतना भवन्ति चेतश्चमत्कुर्वन्ति, अतः संभावनीयं वस्तु संभावनं ज्ञानञ्च न सर्वथा असद् असद्विषयकञ्च।



## प्रयाग से निकलनेवाली संगमनी संस्कृत पत्रिका के चतुर्थ वर्ष चतुर्थ अङ्क २०२५ संवत् में संस्कृतमय प्रकाशित

# संभावनम्

संभावना या संभावन नाम से एक ज्ञान अलङ्कार के लक्षणों में आता है, लोक व्यवहार में प्रसिद्ध है, अनेक प्राचीन विद्वान इसकी चर्चा किये हैं, वह कैसा ज्ञान है, इसकी संक्षेप से विवेचना के लिये बुद्धि के अनुसार प्रयास किया जाता है:

संभावनं यदित्थं स्यादित्यूहोऽन्यस्य सिद्धये।
यदि शेषो भवेद् वक्ता कथिताः स्युर्गुणास्तव ॥

हिन्दी—दूसरे की सिद्धि के लिए यदि इस प्रकार होता ऐसा ऊह तर्क संभावन है। उदाहरण—यदि शेषनाग वक्ता हों तो तुम्हारे गुण कहे जाय। इत्यादि रीति से दूसरे की सिद्धि के अनुकूल तर्क विशेष संभावन ज्ञान है ऐसा आता है, व्याप्य के आरोप से व्यापक का आरोप तर्क कहा जाता है इत्यादि तर्क संग्रह पुस्तक के अनुसार संभावन आरोप मालूम पड़ता है, यदि ऐसा हो इत्यादि व्यवहार के परिचय के लिये वाक्य है, न्याय में तर्क इस प्रकार समझाया जाता है कि धूम यदि वह्निका व्यभिचारी हो तो वह्नि से जन्म नहीं हो, वह्नि जन्य है इससे वह्नि का व्यभिचारी नहीं है, उसी प्रकार यदि तुम्हारे गुण वर्णन करने लायक होते तो और कोई समर्थ नहीं हो पाता शेष वक्ता होते, शेष वक्ता नहीं हैं इसलिये तुम्हारे गुण वर्णनीय नहीं हैं, इस प्रकार आरोप रूप उसके अभाव वाले में उस प्रकार वाला संभावन ज्ञान फलित हुआ। आरोप ज्ञान संभावन शब्द का अर्थ है, दूसरे की सिद्धि के लिये इत्यादि विशेषण की उपयोगिता अलङ्कार संभावन के परिचय के लिये मालूम पड़ता है।

कारक सिद्धान्त कौमुदी ग्रन्थ के अपि: पदार्थ संभावनान्ववसर्गगर्हा समुच्चयेषु इस सूत्र के उदाहरण में भी आरोप ही सम्भावना आती है, सम्भावना के विषय अस् धातु के अर्थ भवन को दुर्लभ कहा गया है, सर्पिभी होता इस उदाहरण में न होने से दुर्लभ होना स्फुट है, विष्णु की भी स्तुति कर सकता है, इस उदाहरण में विष्णु की स्तुति का अभाव ही बचता है, इसलिये वहाँ शक्ति की अधिकत्ता को प्रकट करने के लिये अधिक कथन को संभावना कहते हैं ऐसा कहा जाता है, विषय का अतिक्रमण करके विषय के अभाव में जैसा कहा जाता है वैसा नहीं है तो भी वैसा कथन है, यह उसका अर्थ है, व्याख्याता लोग भी वाणी और मन के अविषय विष्णु की भी स्तुति कर सकता है, यह अधिक कथन है, ऐसे का दूसरे की स्तुति में सामर्थ्य है इसमें क्या कहना है, ऐसा कहते हैं, इससे भी दूसरे की सिद्धि के अनुकूल होना स्फुट है। इसी तरह संभावनेऽलमिति चेत्सिधाप्रयोगे इस सूत्र की व्याख्या में क्रियाओं में योग्यता के निर्णय को संभावना कहते हैं ऐसा कहा गया है, उससे विष्णु की भी स्तुति कर सकता है ऐसे कथन का स्तुति क्रिया में योग्यता का निर्णय मात्र फल है। हर एक कारणों में योग्यता होती है, कार्य की उत्पत्ति तो सामग्री के अधीन है, इसलिये अवश्य कार्य होगा ही ऐसा नहीं है।

रामं स्निग्धतरं श्यामं विलोक्य वनमण्डले।
प्रायोधाराधरोऽयंस्यादिति नृत्यन्ति केकिनः ॥

वन समूहों में सुन्दर सांवले राम को देखकर प्रायः मेघ होय इससे मयूर नाच करते हैं। पण्डितराज उत्प्रेक्षा प्रकरण में यहाँ सम्भावना ज्ञान से भी मयूरों के नाचना कार्य को मानते हैं उस प्रकार आरोप भी संभावना ज्ञान में दूसरे आरोपों से विलक्षणता है जिससे कार्य की उत्पत्ति तथा दूसरे की सिद्धि होती है, रामं स्निग्धतरम् इस में भ्रान्ति नहीं, भ्रान्ति के उदाहरण रूप से उन्होंने ही 'धाराधरधियाधीरं नृत्यन्तिस्म शिखावला:' मेघ समझने से मयूर धैर्य पूर्वक नाचते हैं ऐसा परिवर्तन किया है।

अलङ्कार कौस्तुभकार विश्वेश्वर पण्डित अतिशयोक्ति के तृतीय भेद को 'यद्येवं स्यात्तथापत्तौ' ऐसा वर्णन करते हुए संभावना का उसी में अन्तर्भाव करते हुए संभा-

वना ज्ञान को असत्य अर्थ वाला आरोप ही समझते हैं। लेकिन लेख में असंभावित शब्द होने से स्फुट नहीं दिखा सके, जैसे कि उनका लेख तृतीय भेद में भी असंभावित अर्थ की कल्पना का ज्ञान ही विपक्षित है, जैसे कि अस्य क्षोणीपतेः परार्धपरया इत्यादि प्रसिद्ध पद्य, उसके बाद 'एतेन' ऐसा करके संभावनं यदीत्थं स्यात्, इत्यादि पृथक् अलङ्कार मानना खण्डित हुआ, यहाँ तक इसी तरह स्वोपज्ञ टीका में विश्वेश्वर पण्डित ही साधारणधर्म ज्ञान से होने वाला प्रकृत विशेष्य वाला तादात्म्य सम्बन्ध वाला अप्रकृत प्रकार वाला निश्चय से भिन्न ज्ञान संभावना ज्ञान है ऐसा लिखते हैं। उसमें साधारण धर्म ज्ञान से होना तथा निश्चय भिन्न होना यह संशय साधारण संभावना का लक्षण है, और अंश उत्प्रेक्षा लक्षण के अभिप्राय से है। क्योंकि 'संभावनम् अथोत्प्रेक्षा प्रकृतस्य समेन यत्' प्रकृत का सदृश के साथ संभावना उत्प्रेक्षा है ऐसा काव्य प्रकाश प्रकृत शब्द से युक्त लक्षण कहता है।

यह पण्डितराज का उत्प्रेक्षा के लक्षण का सूत्र है—उससे भिन्न या उसके अभाव वाले प्रमाणित पदार्थ में रहने वाला या समानाधिकरण रमणीय धर्म उसके सम्बन्ध से उसकी अथवा उस वस्तु वाले की सम्भावना उत्प्रेक्षा है, यहां संभावना पद सामान्य ज्ञान अर्थ में मालूम पड़ता है, प्रमाणित यह विशेषण संभावना ज्ञान को आहार्य बताता है ऐसा वे स्वयं लिखते हैं, दूसरे उसके धर्म पद से संशय के ऐसा कारण को सूचित करते हैं, लोकोत्तरप्रभावं तं मन्ये नारायणं परम्। लोक से विलक्षण प्रभाव वाले उसको परम नारायण मानता हूँ, इसको संभावना ज्ञान का उदाहरण देते हैं, लोकोत्तरप्रभाव में नारायणत्वव्याप्ति की संभावना है ऐसा विवरण करते हैं।

उससे अनुमिति के उपयोगी व्याप्ति के निश्चय से विलक्षणता सूचित करते हैं। भ्रान्ति से भी भिन्न संभावना को मानते हैं, रूपक ज्ञान आदि में अति प्रसङ्ग वारण के लिये संभावना पद है ऐसा कहते हुए पण्डितराज आहार्य से भी विलक्षण संभावना को व्यक्त करते हैं, क्योंकि भिन्न उपमान और उपमेय के आहार्यतादात्म्यनिश्चय को रूपक कहते हैं।

अयथार्थ ज्ञान के संशय-विपर्यय और तर्क तीन भेद प्रसिद्ध हैं, पहले की रीति से तीनों से विलक्षणता संभावना ज्ञान में आती है, संशय के ऐसा समान विरोधी दो

कोटि ज्ञान नहीं है, विपर्यय भ्रान्ति में आहार्यता नहीं है, संभावना में है, तर्क के ऐसा सभी स्थल में दूसरे की सिद्धि की अनुकूलता नहीं है, व्यापक का बाध निश्चय आदि नहीं है, इस प्रकार विवेचन में तीनों का साम्य भी बताया जा सकता है, इसलिये संभावना ज्ञान का कैसा लक्षण हो यह अभी बचा ही है।

इसीलिये रसगङ्गाधर की व्याख्या में इनको प्रायः नारायण होना चाहिये इत्यादि प्रतीति से सिद्धि पण्डितराज साक्षी वाला जाति विशेष अथवा कदाचित् हो इस साधारण प्रतीति से सिद्धि जाति विशेष संभावनत्व है ऐसा लिखा हूँ, दूसरी जगह मेरे लेख में अप्रामाण्य शङ्का से आक्रान्त निश्चय भिन्न ज्ञान संभावना है ऐसा है।

प्रशस्त पाद भाष्य में अनध्यवसाय भी अविद्या का तीसरा भेद माना गया है, किरणावली तथा न्याय लीलावती में वर्णन है, न्याय पञ्चानन आदि आलङ्कारिक उसी को संभावना मानते हैं, विशेष रूप से नाना कोटि का उल्लेख जिसमें न हो ऐसे ज्ञान को संभावना ज्ञान मानते हैं, किसी भी कोटि का उल्लेख न हो, अथवा एक से अधिक कोटि का उल्लेख न हो, या सामान्य रूप से कोटिं का उल्लेख होने पर विशेष रूप से कोटि का उल्लेख न हो, सर्वथा अनध्यवसाय है विशेष रूप से कटहर को नहीं पहचानने वाले किसी विदेशीय का जैसे यह क्या है ? ऐसा ज्ञान अनध्यवसाय है, क्या शब्द के प्रयोग से निश्चय नहीं है, किन्तु कोटि का भान नहीं है, यह शब्द से धर्मी का निर्देश है, विशेष रूप से कोटि का उल्लेख न होने से संशय नहीं है किन्तु अनध्यवसाय है, क्या यह कटहर है ? इस उदाहरण में एक कोटिं पनसत्व का उल्लेख है, दूसरी कोटि का विशेष रूप से उल्लेख न होने से लक्षण का समन्वय होगा, मुख को चन्द्रमा मानता हूँ इस उत्प्रेक्षा में मुखत्व चन्द्रत्व कोटि का शाब्द बोध में भान होने पर भी यह चन्द्र ऐसा एक कोटि का ज्ञान ही अलङ्कारता लाता है, वह शाब्द बोध के बाद सुलभ है।

उस पर मैं कहता हूँ कि मुख चन्द्र मालूम पड़ता है इस उत्प्रेक्षा में मुखत्व और चन्द्रत्व का कोटि रूप से उल्लेख नहीं है, अभेद सम्बन्ध से चन्द्र की उत्प्रेक्षा में मुख धर्मी या उद्देश्य है, मुखत्व धर्मिता का या उद्देश्यता का अवच्छेदक है, उसी

प्रकार 'यह चन्द्र' संभावना ज्ञान है, इसमें मुख इदन्त्व रूप से उद्देश्य है, यह फरक है, इस प्रकार संशय का वैलक्षण्य संभावना में देखना चाहिए।

कोई अनध्यवसाय और संशय में फरक करता है कि जिसका पक्ष विपक्ष सपक्ष किसी में सहचार का ग्रहण न हुआ हो ऐसे असाधारण धर्म के दर्शन से अनध्यवसाय होता है, और जिसका सपक्ष-विपक्ष या पक्ष में सहचार का ग्रहण हुआ हो, उस असाधारण धर्म के दर्शन से संशय होता है, ऐसे अनध्यवसाय को संभावना कहते हैं। सो अच्छा नहीं मालूम पड़ता है, क्योंकि संभावना ज्ञान में विषय और विषयी के साधारण धर्म का ही उपयोग है और सहचारों का नहीं।

आलङ्कारिक भी चक्रवर्ती महोदय संभावना को अनध्यवसाय से भिन्न मानते हैं, किन्तु संभावना का कुछ स्फुट लक्षण नहीं करते, आहार्य है इतना ही कहते हैं।

जो लोग अनध्यवसाय या संभावना पृथक् ज्ञान नहीं मानते, संशय और विपर्यय दो ही अयथार्थ ज्ञान मानते हैं, उनके यहां संभावना का संशय और विपर्यय में किसमें अन्तर्भाव है ? यह विवेचना बचती ही है।

अलङ्कारकौस्तुभ तो संभावना पद का उत्कटकोटि वाला संशय अर्थ कहता है, उस प्रकार उनके मत में संभावना का संशय में ही अन्तर्भाव है, संशय दो प्रकार का हुआ, एक उत्कटकोटि वाला दूसरा समान कोटि वाला। उसमें पहला संभावन है, उस प्रकार संशय विशेष संभावना है, कोटि में उत्कट पना का कुछ विश्लेषण करना चाहिए 'यह स्थाणु है या पुरुष' इस संशय में यह धर्मी का निर्देश है, स्थाणुत्व और पुरुषत्व दो कोटि हैं, उसी एक कोटि में उत्कटत्व का वर्णन करना है, जिस कोटि की अपेक्षा है वह उत्कट कोटि है ऐसा मालूम पड़ता है इष्ट ही का अपेक्षा ज्ञान होता है जिस संशय में एक कोटि की उपेक्षा या अपेक्षा नहीं है, वह सम कोटि वाला है। प्राचीन न्याय ग्रन्थों के संशय लक्षणों में विशेषापेक्ष ऐसा आता है, यद्यपि उसका भिन्न-भिन्न प्रकार से व्याख्यान है तो भी साक्षात् या परम्परा से अपेक्षा के सम्बन्ध का अनुभव होता है अपेक्षा न रहने पर संशय नही होता, किन्तु जहां निर्णय मात्र की अपेक्षा है अथवा दोनों कोटि की अपेक्षा हो वहाँ समकोटि है जहाँ एक कोटि की ही अपेक्षा हो वहाँ उत्कट कोटि है ऐसा निर्णय करना चाहिए।

मैं तो उत्प्रेक्षास्थल वाली संभावना में दो कोटि का भान ही नहीं समझता किन्तु उद्देश्य विधेय भाव से अन्वय है ऐसा प्रायः लिख आया हूं दो विरुधों का एक साथ भान होने पर ही कोटि का व्यवहार होता है, संशय में विरुधों का विरोध भान होता है, नहीं तो समुच्चय हो जाय। संभावना में उससे फरक है, चन्द्रत्व और मुखत्व यद्यपि विरुद्ध है, और उद्देश्यता तथा विधेयता के अवच्छेद हैं, किन्तु उनका विरोध भान नहीं है, इस दिशा में सूक्ष्म दृष्टि देनी चाहिये।

इस संभावना ज्ञान की आहार्यता भी विलक्षण ही है, बाध के समय इच्छा से होने वाला ज्ञान आहार्य प्रसिद्ध है, बलवान् विपरीत निश्चय रूप बाध निश्चय के रहते प्रकृत का ज्ञान किसी प्रकार इच्छा से हो, किन्तु बाध से ग्रस्त ज्ञान चमत्कार कैसे करें ? बाधित ज्ञान के लिए इच्छा भी कैसे हो ? जब समझता है तब चाहता है इत्यादि अनुभव से इच्छा का कारण ज्ञान प्रसिद्ध है, यहां इच्छा को ज्ञान का कारण कहना कैसे विरुद्ध नहीं है ? इत्यादि बहुत विचार करने का है, तो भी संक्षेप से ही कुछ का वर्णन करता हूं।

बाधित ज्ञान से भी चमत्कार होता है, रूपक आदि में आहार्य ही ज्ञान है किन्तु ज्ञान की प्रक्रिया भिन्न है, जैसे लोक में गाली आदि बकने पर क्रोध आदि होते हैं, गालीयां प्रायः झूठ ही होती हैं झूठी अधिक प्रशंसा से मुसकुरान आदि होते हैं, काव्य आदि में सहृदयों के हृदयों की चमत्कार प्रवणता तथा चमत्कारी शब्दार्थों की रचना से सभी का समाधान हो जाता है। चमत्कारी वस्तु की उपस्थिति कराने के लिए ही उत्प्रेक्षा सम्भावना के लक्षण वाक्य में उसमें रहने वाला रमणीय धर्म तथा उसके समानाधिकरण रमणीय धर्म निमित्त होना चाहिए ऐसा रसगङ्गाधर में निवेश किया गया है, जिसका ज्ञान चमत्कार को पैदा करता है वह रमणीय कहा जाता है, दूसरी जगह मनको आकृष्ट करने वाला रमणीय है ऐसा है, उससे चित्त की चमत्कार प्रवणता सूचित होती है। उस पर मुझे मालूम पड़ता है—उत्कृष्ट चमत्कार के साधन ज्ञान का बाध निश्चय प्रतिबन्धक नहीं होता, उत्कट चमत्कार के साधन सामग्री से रहित ही बाध निश्चय प्रतिबन्धक होता है, उत्कट चमत्कार की साधन सामग्री रहने पर प्रतिबन्धक नहीं होता। अथवा बाध निश्चय प्रतिबन्धक नहीं होता

किन्तु अपने विरोधि ज्ञान में अप्रामाण्य ज्ञान करा देता है, यह शैली अनेक ग्रन्थों में वर्णित है, इसी को लेकर सम्भावना का लक्षण बताया हूँ, उस प्रकार बाध निश्चय होने पर भी काव्य आदि स्थल में शाब्दबोध होता ही है। बाध से कवलित चमत्कारी ज्ञान के लिये चमत्कार के अनुरोध से इच्छा पैदा हो जाती है, साधारण रूप से ज्ञान इच्छा का कारण है, जिसका ज्ञान होगा उसी की इच्छा होगी, ज्ञान का जो विषय होगा वही इच्छा का विषय होगा, दोनों का समान विषय होना नियत है, किन्तु दूसरी रीति भी है जिससे किन्हीं ज्ञानों का कारण इच्छा होती है, जैसे कि अनुमिति ज्ञान के प्रति अनुमिति की इच्छा कारण होती है, ऐसा भी अनेक जगह वर्णन है।

मुझे तो चमत्कारी ज्ञान की आहार्यता पसन्द नहीं पड़ती, कितने आलङ्कारिक आहार्य से भी नीचा सम्भावना के विषय वस्तु का असंभवी पद से व्यवहार करते हैं, जैसे कि काव्य प्रदीप संभवी वस्तु की वैसी असम्भवी वस्तु रूप से सम्भावना को उत्प्रेक्षा कहते हैं। लोक सिद्धि सम्भवी है, और लोक प्रसिद्धि न होने पर भी कवि की प्रतिभा से कल्पित असम्भवी है, ऐसी उसकी व्याख्या है। मुख चन्द्र मालूम पड़ता है इसमें दोनों का तादात्म्य असम्भव है।

सवःपायात् इत्यादि पद्य का अर्थ—वह चन्द्रमा आप लोगों की रक्षा करे, जो मानो स्फटिक के ऐसे उज्जवल कपाल से निकला अङ्कुर है, कपाल शिव ललाट। हन्डीया गमला में लगाये हुए बीज से भी उजला अङ्कुर निकलता है, नये कमल दण्ड के किनारे के ऐसा टेढ़ा है। तृतीय नेत्र आग से लाल शिव जी के ललाट पर रखा हुआ है, आग के पास भी बीज नहीं नष्ट हुआ क्योंकि कमल हमेशा गङ्गा के पानी से सीचा जाता है।

इत्यादि में चन्द्रमा में सम्भावित कपाल अङ्कुर असम्भव है कवि प्रतिभा मात्र से कल्पित है, ऐसा वर्णन करते हैं। वहां कपाल और अङ्कुर अलग प्रसिद्ध ही है, उनका सम्बन्ध ही कल्पित है। सर्वथा असम्भव वस्तु का वर्णन सामाजिकों के चित्त में न उतरे, अस्य क्षोणीयते इत्यादि पद्य से प्रतिपादित जन्मान्ध से देखने लायक, वधिर से सुनने योग्य, बांझ पैदा हुए मूक से गाने लायक पदार्थों के ऐसा सर्वथा अभाव बुद्धि होने से चमत्कार का परिपोष नहीं हो। अन्यथा स्वर्ग नरक आदि अद्भुत

वस्तुओं का वर्णन काव्य की अपेक्षा अधिक प्रिय हो, किन्तु सामाजिकों की वासना में विद्यमान पदार्थों के सदृश ही पदार्थ कवि प्रतिभारूपी सूत्र से गुत्थे गये नये हो जाते हैं तथा चित्त को चमत्कृत करते हैं। इसलिए सम्भावना की वस्तु और संभावना ज्ञान सर्वथा असत् और असत् विषय वाला नहीं है।



**सागर विश्वविद्यालय संस्कृत विभाग संस्कृत परिषत्प्रकाश्यमान सागरिका संस्कृत पत्रिकायामेकादशेऽब्दे प्रथमेऽङ्के १९७३ त्रिसप्तत्युत्तरैकोनविंशशतेशाब्दे प्रकाशितः**

# उपमोत्प्रेक्षाकलकलः

सर्वालङ्कारभूषा जयति भगवती योपमोमेव काव्यं
श्रव्यं दृश्यं सुवाना सहृदयहृदयाह्लादिनी पद्मिमा वा।
उत्प्रेक्षा प्रेक्षणीया हरति तदुदयं निर्दयं निर्विशन्ती
तत् तत्त्वं वेत्तुकामो गुरुपदकमलं मानसेऽलङ्करोमि॥

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥**

इति मृच्छकटिकस्य तमसो वर्णनपद्यं नापरिचितं विपश्चिताम्। उत्तरार्धे उपमाया निर्विवादत्वेऽपि पूर्वार्धमुत्प्रेक्षोदाहरणीकृतमित्यपि न तिरोहितम्। अध्यवसानवशाल्लिम्पतिवर्षतिभ्यां व्यापनं प्रतीयते, तमःकर्तृकम् अङ्गकर्मकं व्यापनम् अङ्गकर्मकं लेपनमिव, तमःकर्तृकं नभःकर्मकं व्यापनं नभःकर्तृकम् अञ्जनकर्मकं वर्षणमिव। अत्र उत्प्रेक्षैव बहुभिराद्रियते नोपमेति किं कारणं तत्रेति विषयः। तत्र बहवो व्याकरणस्य कलहमुपस्थापयन्ति अपरे तद्रीत्यैव खण्डयन्ति च। तत्र जयरामभट्टाचार्णामालङ्कारिकाणामित्थम् मतम्—

यत्रेवार्थः सादृश्यं संभवतिः तत्रैवोपमाया अवसरः। इवेन नित्यसमासो विभक्त्यलोपश्चेत्यादिना सादृश्यार्थकेवेन समासस्य नित्यतया यत्र नास्ति समासस्तत्र नेवार्थः सादृश्यं ततो नोपमा, अत्र च इवस्य तिङन्तसंगततया न समासावसरः। तदपरे न मन्यन्ते—तादृशसमासस्य नित्यत्वे मानाभावात्, सह-

सुपेत्यनेनैव समासस्य सिद्धतया वार्तिकस्य विभक्त्यलोपस्वरार्थंतायाः कैय-टादिभिर्व्यवस्थापितत्वाच्च। किञ्च यत्र समासस्तत्रैव इवार्थः साहश्यमिति व्याप्तौ मानाभावः। संभावनायां साहश्ये च बहुलं वाक्यस्य समासस्य च उपलब्धेः। तथा च समासाभावेऽपि उपमाया बाधकम् नास्तीत्येतावता चिन्तितम्।

ततश्च समुचितोपमानाभावादेव नोपमेत्ति दण्डिमतानुयायिनः। तथाहि चन्द्र इव मुखमित्यादौ चन्द्रेवपदयोः समभिव्याहारः। तयोः परस्परमन्वयः; इवार्थसाहश्यप्रतियोगित्वेन चन्द्रस्योपमानत्वम्, न तथाऽत्र वर्तते। लिम्पतेर्हि इवेन योगः, लिम्पतौ अंशद्वयम् धात्वर्थो लेपनम्। तिबर्थश्च कर्ता, तिङाव्यव-धानेन न धातुना इवस्य योगः। व्यवहितेऽपि सम्बन्धे नास्ति लेपनस्योपमेयम्। व्यापनस्य लिम्पतिनैव लक्षणयोपस्थानात्। शक्यार्थलक्ष्यार्थयोर्लेपनव्यापनयोर्यु-गपल्लिम्पतेरनुपस्थितेः। यदि तिङर्थः कर्ता उपमानं मन्येत तमो भवेदुपमेयम्। लेपनकर्तृसहशं तम इति बोधः स्यात्। लेपनकर्तृतमसोः साधारणधर्मस्याप्रसि-द्धतया नौपम्यमात्मानं लभेत। वैयाकरणमतेन कर्तुः 'तिङर्थस्तु विशेषणम्' इति भूषणकारिकानुसारं लेपनविशेषणतया इवार्थान्वयायोगश्च। न्यायनयेऽपि तिङर्थकर्तृत्वस्य इतराविशेषणीभूते प्रथमान्तपदोपस्थित एव अन्वयस्य व्युत्पन्न-तया इवार्थेऽन्वयासंभवश्च। लेपनकर्तृत्वसहशं तम इत्यप्युपमाबोधो न समी-चीनः। कर्तृत्वस्य स्वाश्रयप्रतियोगिकत्वसम्बन्धेन इवार्थेऽन्वयस्वीकारे संसर्गाशे आश्रयस्य कर्तुः कथञ्चिल्लाभेऽपि अपदार्थतया समुचितोपमानलाभो न भवेत्। तथा च दण्डिवचः—

> कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे।
> स्वक्रियासाधनव्यग्रो नालमन्यद् व्यपोहितुम्।। इति ।।

यदि कर्ता उपमानतयाऽभिप्रेयेत न तथा संभवति, धात्वर्थभावनायां कर्ता असौ विशेषणीभूतः। क्रियायां विशेषणीभूतस्य कर्तुरिवार्थेऽन्वयासंभवः; इतरविशेषणीभूतस्य अन्यस्मिन्नन्वयायोगात्; इवार्थान्वयम् विना उपमान-त्वासम्भवः। क्रियायाः कारकान्वयस्वभावादन्तरङ्गत्वात् स्वक्रियास्वरूप-निष्पत्तये च प्रथमम् कारकान्वयेन निराकांक्षस्य क्रियापदस्य इवार्थसाहश्यान्वये नापेक्षा।

ननु एकस्योभयाकांक्षायां भवत्युभयत्रान्वयः, युगपदुभयत्रान्वये च नाप-तति निराकांक्षता। यथा पृथिव्यामेव गन्ध इत्यस्य पृथिव्यन्यासमवेतः पृथिवी-समवेतश्च गन्ध इति बोधः। पृथिवीपदार्थस्य सप्तम्यर्थाधेयत्वे एवकारार्थान्य-

योगव्यवच्छेदघटकान्यत्वभेदे च युगपदन्वयः। एवमेव भुक्त्वा व्रजतीत्यादौ भोजनकर्तां भोजनोत्तरव्रजनकृतिमान् इत्यादिबोधे धात्वर्थभोजनस्य युगपदेव लकारार्थे क्त्वार्थानन्तर्ये च विशेषणत्वम्, लकारार्थकृतेरपि भोजनव्रजनयोर्युगपदेव विशेष्यत्वम्। तथैव आख्याताार्थस्य कर्तुर्भावनायां सादृश्ये च युगपदन्वयः सम्भवति, तेन लेपनकर्तृसदृशं तम इति तार्किकनयानुसारी, तमः कर्तृकलेपनं तमः कर्तृकव्यापनमिवेति शाब्दिकसरणिमनुसरन्नुपमाबोधः सम्भवत्येव इति चेत् न, न्यायनयिकबोधस्य कथञ्चित् सम्भवेऽपि भावनाविशेष्यकोपमाबोधस्यासंभवात्। व्यापनोपस्थापकपदाभावात्। लिम्पतिना लक्षणयोपस्थापने पुनः शक्यार्थलेपनस्य भानासंभवात्। शक्यार्थलक्ष्यार्थयोर्युगपद्बोधस्य परस्परमन्वयस्य चादर्शनात्। न्यायनयेऽपि आख्यातार्थकृतेरन्यविशेषणीभूतप्रथमान्तपदार्थेऽन्वयस्याव्युत्पन्नतया इवार्थसादृश्येऽन्वयो न संभवति।

पृथिव्यामेव गन्ध इत्यादौ पृथिवीपदार्थस्य शक्यार्थस्यैव द्विर्भानम्, न वा परस्परमन्वयः, यद्वा समभिव्याहृतपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकभेदवत् सम्बन्धाभाव एव एवकारार्थः। तेन द्वितीयः पृथिवीपदार्थं एवकारार्थघटक एव। भुक्त्वा व्रजतीत्यादौ भोजनविशिष्टस्य व्रजनस्य भानम्। स्वोत्तरकालिकत्वस्वकर्तृकत्वाभ्याम्, अत्रैव समानकर्तृकयोः पूर्वकाले इत्यादेस्तात्पर्यम्, न भोजनस्य द्विर्भानम्। एवं पृथिवीविशिष्टो गन्धः पृथिव्यामेव गन्ध इत्यस्यार्थः। स्वान्यासमवेतत्वस्वसमवेतत्वाभ्याम् एतादृशसंसर्गद्योतकत्वमेव एवकारादेः।

इदञ्च विचारणीयमवदधतु दोषज्ञाः—एतादृशे प्रसङ्गे रसगङ्गाधरे स्वतन्त्रत्वेनालङ्कारिकतन्त्रस्य वैयाकरणमतविरोधस्यादूषणतां ब्रूते पण्डितराजः। अत्र च कारिकायाम् आलङ्कारिकाचार्यो दण्डी न्यग्भूतोऽसौ क्रियापदे इत्यदिना वैयाकरणमतमेव सिद्धान्तं मन्यते। आलङ्कारिकतन्त्रं तिङर्थप्राधान्याप्राधान्यविषये स्वतन्त्रं वैयाकरणमतपरतन्त्रं वा? पण्डितराजस्य प्रौढोक्तिः सिद्धान्तोक्तिर्वा। इति।

यद्यपि केचन लेपनकर्तृतमःसदृशो लेपनक्रियेत्युपमाबोधमाचख्युस्तदपि न समीचीनम्; आख्यातार्थकर्तुर्धात्वर्थलेपनविशेष्यत्वायोगात्, क्रियाकर्त्रोर्धर्मधर्मिभावतया उपमानोपमेयभावाभावात्। आख्यातार्थकर्तृप्रकारकबोधं प्रति धातुजन्यभावनोपस्थितेः कारणत्वात् कर्तुरिवार्थसादृश्येऽन्वयासंभवाच्च। एतदर्थकार्यकारणभावसंकोचस्य प्रमाणाभावाद् गौरवग्रस्तत्वात्। यदि लक्षणया इव-

पदार्थः कर्तृसादृश्यमुच्यते तदापि एकस्य धात्वर्थस्य इवार्थैकदेशकर्तरि आख्यातार्थकर्तरि च अन्वयेन द्विधाभाने क्लेशः। यदि समभिव्याहृतधात्वर्थकर्तृसादृश्यमिवार्थस्तदोपमानस्यापि इवपदार्थघटकतया क्व समुचितोपमानलाभः? लेपने कर्तरि च खण्डशो लक्षणायां विशकलितयोर्बोधापत्तिः। सादृश्ये शक्तेरपि जागरूकतया युगपद्वृत्तिद्वयविरोधश्च। एकस्य लक्षणा अपरस्य तात्पर्यग्राहकत्वे विनिगमनाविरहः। वाचकस्य लक्षकस्य वा पदस्य तात्पर्यग्रहणशक्तिस्वीकारे गौरवञ्च।

यच्च आख्यातार्थकृतेः स्वाश्रयप्रतियोगिकत्वसम्बन्धेन इवार्थसादृश्येऽन्वयः, तेन लेपनकृत्याश्रयप्रतियोगिकसादृश्यवत्तम इति बोधः, तदपि न सम्यक्, कर्तुः संसर्गघटकतया अपदार्थतयोपमानत्वासंभवः। कृतेरिवार्थान्वयेऽपि तमोधर्मतया तमउपमानत्वासंभवः। सादृश्यप्रतियोगिन एवोपमानत्वम्, न तु स्वाश्रयप्रतियोगिकत्वप्रतियोगिनः।

किञ्च न्यायनये आख्यातार्थकृत्यादेरन्याविशेषणीभूतप्रथमान्तार्थे एवान्वयस्य व्युत्पन्नतया कथमपि कृतेरिवार्थान्वयासंभवः। वर्णितश्चैष पन्था मुक्तावल्यादाविति न व्याख्यायते। न च चैत्रो न पचतीत्यादावाख्यातार्थकृतेर्नञर्थाभावान्वयवद् अव्ययस्थले उक्तनियमस्य संकोचेन, तथा अव्ययानां लुप्तप्रथमान्तया निर्वाहः, इवसमभिव्याहृतपदार्थस्य इवार्थे प्रतियोगितयैवान्वये साकांक्षतया स्वाश्रयप्रतियोगिकत्वेनान्वये निराकांक्षत्वात्। सादृश्यप्रतियोगिन्येवेवार्थान्वयनियमस्य भङ्गापत्तिश्च। किञ्च तादृशसंसर्गेण कृतेरन्वये लेपनकृत्याश्रयो यत् सादृश्यं तद्वत् तम इति बोधः स्यात्, न तु कर्तुः संसर्गघटकतया कर्तृसादृश्यं तमसि भासेत। आश्रयत्वस्य संसर्गघटकतया लेपनकृत्याश्रयप्रतियोगिकसादृश्येत्यादिबोधाकारो न स्यात्। आख्यातस्यैव कृत्याश्रये लक्षणा गौरवग्रस्ता। इवार्थसादृश्ये कृत्याश्रयत्वस्याभावादन्वयानुपपत्तेरपरिहाराल्लक्षणाया अनुत्थानात्। लेपनमेव धात्वर्थस्तमसि अनुपपन्नं लक्षणाया उत्थापकम्। अचेतने कृतेरनुपपत्तौ व्यापारलक्षणायाः स्वारसिकत्वात्। यदि लेपनकर्ता उपमानं तमश्चोपमेयं तदा व्यापनतयाऽध्यवसितं लेपनं साधारणो धर्मः। यदि लेपनमेवोपमानं स्यात्तदा साधारणो धर्मो न मिलेत्। एकस्य च धर्मधर्मिभावो न संभवतीत्यभिप्रायकं निम्नलिखितं दण्डिनो वचनम्—

यदि लेपनमेवेष्टं लिम्पतिर्नामकोऽपरः।
स एव धर्मो धर्मी चेत्यनुन्मत्तो न भाषते॥

लिम्पतिः धात्वर्थो लेपनं साधारणधर्मत्वेनाभिमतः अपरः कः स्यात्। साधारणधर्माभावान्न लेपनमुपमानम्। धातुनिर्देशनिमित्तमपि श्तिप् लक्षणया धात्वर्थपरम्। यथा—

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः।
यदुपास्तिमसावत्र परमात्मा निरूप्यते॥

इत्यादि न्यायकुसुमाञ्जलिपद्ये उपासनापरकोपास्ति· पदवत्।

अथवा—यदि लेपनं साधारणत्वेनाभिमतं तर्हि लिम्पतिर्लेपनकर्ता कः प्रसिद्धो य उपमानतां दधीत? तथा च लेपनकर्तृत्वेनाप्रसिद्धस्य समुचितोपमानत्वाभावः। आख्यातार्थः कर्ता कर्तृत्वेनोपमानं न भवतीति वक्ष्यमाण 'न वै तिङन्तेनोपमानमस्ति' इति भाष्यतात्पर्यम्। यदि लिम्पतिर्लेपनमेव न लेपनकर्ता तदा धर्मधर्मिभावो न स्यादित्युत्तरार्धार्थः।

यद्वा—यदि लेपनमुपमानमिवार्थान्वयि तदा लिम्पतिर्लेपनकर्ता आख्यातार्थोऽपर उपमानेतर· कः स्यात्? तस्य कुत्रान्वयः? न च धर्मलुप्तोपमा शङ्क्या, प्रसिद्धस्य सतः साधारणधर्मस्य साक्षादुपपादनं विनापि बुद्धिमारोहतोऽनुपादाननिमित्ता सा, अत्र तु साधारणधर्मस्य तादृशस्याभाव एव।

अत्र महाभाष्यसम्मतिमपि ददाति दण्डी—

केषाञ्चिदुपमाभ्रान्तिरिवश्रुत्येह जायते।
नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम्॥

उत्प्रेक्षामूलसंभावनाप्रतिपादकेवशब्दे उपमामूलसादृश्यप्रतिपादकत्वभ्रान्तिः। भ्रान्तिरियं बलवत्तरा न वै तिङन्तेनोपमानमस्तीति महाभाष्यकाराप्तभाषितमतिक्रम्य जायते। धातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७ इति सूत्रस्थमित्थं महाभाष्यम्—(आशङ्कायामचेतनेषूपमङ्ख्यानम्) आशङ्कायामचेतनेषूपसंख्यानं कर्तव्यम्। अश्मा लुलुठिषते, कूलं पिपतिषतीति, किं पुनः कारणं न सिद्ध्यति? एवं मन्यते—चेतनावत एतद् भवति इच्छेति। कूलश्चाचेतनम्। अचेतनग्रहणेन नार्थः, आशङ्कायामित्येव, इदमपि सिद्धं भवति श्वा मूमूर्षतीत। (न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिः)। न वा वक्तव्यम्। किं कारणम्? तुल्यकारणत्वात्, तुल्यं हि कारणं चेतनावति देवदत्ते कूले चाचेतने। इच्छाया हि प्रवृत्तित उपलब्धिः। इच्छाया हि प्रवृत्तित उपलब्धिर्भवति। यो हि कटं चिकीर्षुर्भवति नासावाघोषयति कटं करिष्यामीति। किं तर्हि? सन्नद्धं रज्जुकीलकपूलपाणिं दृष्ट्वा तत इच्छा गम्यते। कूलस्यापि

पिपतिषतो लोष्ठाः शीर्यन्ते भिदोपजायते, देशाद्देशान्तरमुपसंक्रामति, श्वानः खल्वपि मुमूर्षव एकान्तशीलाः शूनाऽक्षाश्च भवन्ति। ( उपमानाद्वा सिद्धम् ) उपमानाद्वा सिद्धमेतत्। कथम् ? लुलुठिषते इव लुलुठिषते। पिपतिषतीव पिपतिषति। न वै तिङन्तेनोपमानमस्ति।

अत्र कैयटः—आशङ्का संभावना। न वै तिङन्तेनेति—तिङन्तार्थेनेत्यर्थः। क्रियायाः साध्यैकस्वभावत्वादनिष्पन्नरूपत्वादिदंतदिति परामर्शविषयवस्तुगोचरत्वादुपमानोपमेयभावस्येदंतदितिपरामर्शाभावादिति भावः। इवशब्दप्रयोगे अध्यारोपस्तु विद्यते—रोदितीव गायति नृत्यतीव गच्छति देवदत्तः। परिपूर्णेन न्यूनस्योपमानं भवति। क्रिया च सर्वा स्वाश्रये समाप्तेति न्यूनत्वासंभवस्तस्याम्। तदुक्तं वाक्यपदीये—

> येनैव हेतुना हंसः पततीत्यभिधीयते।
> आतौ तस्य समाप्तत्वादुपमार्थो न विद्यते ॥३।८।५७॥

भिन्नजातीयानाञ्च क्रियाणां सादृश्यं नास्ति भुंङ्क्त इव गच्छति। अत्र कैयटस्योपरि नागेशभट्टः—तिङन्तार्थेनेति क्रिययेत्यर्थः। भाष्यस्थोपमानशब्दस्य सादृश्यमित्यर्थं इतिभावः। केचित्तु तिङन्तेनोपमानबोधो नास्तीति भाष्यार्थमाहुः। इदन्तदितिपरामर्शाभावादिति अत्र शब्दशक्तिस्वभावो वस्तुशक्तिस्वभाव एव वा बीजम्।

अत्रोपमानोपमेयभावस्येत्यत्रोपमेयग्रहणं चिन्त्यम् क्षत्रियवदधीत इत्यादौ क्रियाया उपमेयत्वस्येष्टत्वादिति बोध्यम्। अध्यारोपः=उत्प्रेक्षा। भिन्नेति 'यथा वै श्येनो निपत्यादत्ते एवमयं भ्रातृव्यं निपत्यादत्ते' इत्यादौ यद्धर्मकं श्येनकर्तृकमादानं तद्धर्मकमेतत्कर्तृकमादानमितित्राच्यार्थेऽवगते यत्तद्भ्यामैक्यमापन्नं तं धर्मं निमित्तीकृत्य श्येनयागयोः पश्चात् सादृश्यबोध इति न तत्र क्रिययोरुपमानोपमेयभाव इति बोध्यम्। अत्रावधेयम्—तिङन्तेनोपमानं नास्ति इत्यस्य कोऽर्थः ? यथा भाष्यम् लुलुठिषते इव लुलुठिषते इत्यादि, इव समभिव्याहृतोभयतिङन्तस्थले उपमानोपमेयभावबोधो न भवतीति आयाति, क्षत्रियवदधीते इत्यादौ एकतिङन्तस्थले तु भवतीत्यपि सूचितम्। परं तिङन्तार्थः क्रिया आख्यातार्थः कर्ता वा गृह्यतामिति सन्देहे नागेशभट्टेन स्फुटं क्रिययेत्युक्तम्, कैयटोऽपि साध्यैकस्वभावेत्यादिना क्रियाया एव उपमानाऽयोग्यत्वं वर्णयति। तथा च साध्यस्वभावक्रिययोरुपमानोपमेयभावो नास्तीति सूचितम्। तथापि उपमानाऽयोगत्वे कारणं शब्दशक्तिस्वभावो वस्तुशक्ति-

स्वभाव इदन्तदितिपराणर्शभावो वा तदाख्यातार्थकर्तुः समानम्। तादृश-क्रियालिङ्गितस्यैव आख्यातार्थस्य भानात्। अतएव लुलुठिषत इत्याद्युदाहरणं संगतम् अन्यथा कर्त्रोः स्यात्। साध्यस्वभावक्रिययोरुपमाबोध इवशब्देन न भवतीति कैयटस्य मतम्। क्रियाप्रतियोगिकसादृश्यबोध इवशब्देव न भवतीति नागेशाशय आयाति। तादृशेनेवशब्देन उत्प्रेक्षाबोधो नागेशाक्षरे स्फुटम्। आश-ङ्कायामित्याद्युपक्रमानुसारं संभाव्नार्थं इवशब्दः सूच्यते। तया च लेपन-कर्तृसदृशं तम इति बोधो न भाष्यानुकूल आख्यायार्थकर्तुरपि उपमाना-योग्यत्वात्।

एवञ्चोत्प्रेक्षायामिवशब्दस्य संभावनार्थकतया तमः कर्तृकमङ्गकर्मकं व्यापनं लेपनम् लेपनप्रकारकसंभावनाविषयः। अथवा अङ्गकर्मकलेपनप्रकारक-संभावनाविषयोऽङ्गकर्मकं व्यापनं तदाश्रयस्तमः। प्रथमो धात्वर्थमुख्यविशेष्यको द्वितीयः प्रथमान्तार्थमुख्यविशेष्यकः।

अत्र वदन्ति—उत्प्रेक्षापक्षेऽपि निम्नलिखतानां कतिपयव्युत्पत्तिनियमानां भङ्गः समायाति। तथाहि शक्यार्थस्य लेपनस्य लक्ष्यार्थस्य अधोदेशव्यापनस्य च युगपद् बोधाद् युगपद्वृत्तिद्वयविरोधः। एकपदोपस्तियोः परस्परं विशेष्य-विशेषणभावविरोधः। धात्वर्थलेपनादेरिवार्थेऽन्वये न मुख्यविशेष्यतया भानं न वा न्यायनयेन आख्यातार्थेऽन्वयः। एवं नैकव्युत्पत्तिभङ्गभयं विहाय उत्प्रेक्षायाः समादरस्तर्हि उपमैव भगवती कथन्नोपास्यताम्? चैत्रो न पचति इत्यादौ कृते-र्नञर्थाभावेऽन्वयेन आख्यातार्थकृतेः प्रथमान्तपदार्थान्वियनियमस्यासार्वत्रिकत्वात् आख्यातार्थकृतेरिवार्थसादृश्यान्वये न भेतव्यम् अथवा अचेतनकर्तृस्थले कृते-र्बाधेन आश्रयत्वस्य व्यापाराश्रयत्वस्य वा आख्यातार्थस्य भानेन न्यायनयेन अङ्गकर्मकं यल्लेपनं तत्सदृशम् अङ्गकर्मकं व्यापनं तदाश्रयस्तम इति उपमा-बोधः। ननु धात्वर्थस्य आख्यातार्थान्वियनियमेन कथमिवार्थसादृश्येऽन्वयः? यथोत्प्रेक्षास्थले इवार्थसंभावनायाम्। तादृशसमभिव्यावहारविशेषस्य नियाम-कत्वात्। अथवा अस्तु लेपनकर्तृ सदृशं व्यापनाश्रयस्तम इति बोधः। आख्या-तार्थकर्तुरिवार्थान्वियात्। ननु कर्तृत्वमाख्यातार्थो न तु कर्तेति चेत् यथा प्रथमान्तकर्तृपदसमभिव्याहारस्थले कर्तुर्लाभस्तथा इवस्थलेऽपि अङ्गीक्रिय-ताम्। अतएव उत्प्रेक्षां वर्णयन् पण्डितराजः 'तेन लिम्पतीत्यादौ भेदेनाभेदेन वा तिङन्तार्थस्य प्रथमान्तार्थं एवोत्प्रेक्षणं न तु धात्वर्थस्य स्वनिगीर्णे व्यापनादौ' इति ब्रूते। शब्दान्वयगतिर्यथोत्प्रेक्षायां तथोपमायामिति भावः। अन्ये तु आल-ङ्कारिकाः कर्तृप्रत्ययसमभिव्याहारस्थले आख्यातार्थस्य वैयाकरणबुधबोधस-

मादरानुरोधेन धात्वर्थप्रकारतया भानमङ्गीकुर्वाणा उत्प्रेक्षायामपि तमःकर्तृकम् अङ्गकर्मकलेपनं तत्प्रकारकसम्भावनाविषयस्तादृशं व्यापनमिति बोधमङ्गीकुर्वन्ति। अतएव 'व्यापनादि लेपनादिरूपतया संभावितम्' इति काव्यप्रकाशः। तथा च तद्रीत्या व्युपत्तिसंकोचेन तादृशलेपनमिव तादृशव्यापनम्' इत्युपमाबोधोऽवसीयताम्।

केचन ब्रुवते—आख्यातार्थः कर्तृत्वमेवास्तु, कर्तृत्वस्येवार्थसादृश्ये स्वाश्रयप्रतियोगिकत्वेनान्वयः, अन्यत्र सादृश्ये प्रतियोगित्वेन अन्वयस्य क्लृप्तावपि एतादृशाख्यातसमभिव्याहृतेवादिस्थले व्युत्पत्तिवैचित्र्येण स्वाश्रयप्रतियोगिकत्वेनान्वये न बाधकम्। आख्यातस्य आश्रयपर्यन्तं लक्षणामपेक्ष्य एतादृशसंसर्गांशगौरवस्याकिञ्चित्करत्वात्। ननु यत्र भावनाया अन्वयस्तत्र संख्यान्वय इति नियमविरोधः, कृतेः सादृश्यान्वये सादृश्ये सख्याया अनन्वयादिति वाच्यम्, चैत्रो न पचतीत्याद्यनुरोधेन निपातस्थले संकोचात्। न चोपमास्वीकारे तूर्वोक्ततृतीयाध्यायस्थभाष्यविरोधः। तत्रत्योदाहरणानुरोधेन आख्यातार्थयोरुपमानोपमेयभावो न भवति, इति नियमस्याविरोधात्। वर्त्तते च भाष्ये तिङन्तोभयमुदाहरणम्।

कैयटेनोपमानोपमेयभावनिषेधस्यैव वर्णनात्। लिम्पतीव तम इत्यादौ नास्ति उभयतिङन्तार्थयोरुपमा, एवं ब्राह्मणवदधीतेऽपि। नागेशभट्टेन प्रायः क्रियाप्रतियोगिकसादृश्यस्य निषेधः कृतः स नाङ्गीक्रियते।

अपरे उपमापक्षपातिनः—न वै तिङन्तेनोपमानमस्तीतिभाष्येण क्रियाया उपमेयत्वमेव वारयन्ति, तन्न सम्यक् प्रतिभाति, पञ्चमाध्यायस्थभाष्येण ब्राह्मणवदधीते इत्यादौ क्रियाया उपमेयत्वस्याङ्गीकारात्। 'तेन तुल्यं क्रिया चेद्वतिः' (५।१।११५) सूत्रे क्रियापदं प्रकृतेः प्रत्ययस्य वाऽर्थस्य विशेषकमिति विचार्य अन्ते सिद्धान्तितम्—प्रत्ययार्थविशेषणमेव ज्यायः, कुत एव तत्? एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितम्। वतिना सामानाधिकरण्यं कृतम्। अपि च वतेरव्ययेषु पाठो न कर्तव्यो भवति, क्रियायामयं भवंल्लिङ्गसंख्याभ्यां न योक्ष्यते।

अत्रःकैयटः—प्रत्ययार्थविशेषणपक्षे तुल्या क्रिया साध्यमानस्वभावाऽसत्त्वभूता संभवति… क्रियामात्रं चेह वतिनाऽभिधीयते इति तद्विशेषप्रतिपत्तये क्रियाशब्दप्रयोगः। एतावता अधीते इत्यादि—तिङन्तोपमेयपदसमभिहारे वतिर्भवति ततश्च क्रियाया उपमेयत्वं स्फुटमायाति।

इतः प्रागत्रैव सूत्रे 'कथञ्च तृतीयासमर्थं नाम क्रिया स्यात् ?' इतिभाष्यव्याख्याप्रसङ्गे नागेशभट्टः—तस्मादयमत्र भाष्यार्थः—उपमानोपमेयभावविषयं प्रकृतं तृतीयासमर्थमुपमानं क्रिया नेति। तथाहि 'न वै तिङन्तेनोपमानमस्ति' इति सनुसूत्रस्थभाष्ये तिङन्तग्रहणस्य क्रियोपलक्षकत्वादसत्त्वभूतशयितव्याद्यर्थानामुपमानत्वमेव न। एवञ्च तेषां तुल्यादियोगाभावात्तेभ्यस्तृतीयेव न, पाकादिपदार्थस्य तृतीयार्थान्वितस्य सत्त्वमेव न क्रियात्वं ब्राह्मणादिपदार्थस्य च।

पाकादिघञन्तविषयेऽत्रैवेतः प्राङ नागेशः—साध्यत्वाख्यवैजात्येन पाकप्रकारकः सिद्धत्वाख्यवैजात्येन तद्विशेष्यको बोधो घञन्तात्। वस्तुत एकनिष्ठत्वाच्च प्रकारताविशेष्यतयोर्न स्फुटं ग्रहो बोध इति। एवञ्च असत्त्वभूतक्रियैव उपमेयभूताऽस्योदाहरणे इति सर्वसम्मतम्। तथा च प्रागुल्लिखितो नागेशभट्टविचारः शब्दशक्तिस्वभावो वस्तुशक्तिस्वभावो वा विलक्षणः परीक्ष्यतां येन असत्वभूता क्रिया उपमानतां न व्रजेत्।

पूर्वोक्तस्य न वै तिङन्तेनोपमानमस्ति इति भाष्यस्य व्याख्याने कैयटोक्तस्य रोदितीव गायति देवदत्तः, नृत्यतीव गच्छति देवदत्तः इत्याद्युदाहरणे इतोऽपि महती समस्या। तत्र कैयट उपमां वारयन् अध्यारोपमुत्प्रेक्षां ब्रूते। उभयोस्तिङन्तार्थयोः सादृश्यात् प्रागुक्तसमाधानस्याप्रसरात्। क्रिययोः साधारणधर्मोऽपि न दुरूहः। स्वरपादप्रक्षेपादिविकारस्य जागरूकत्वात्। देवदत्तकर्तृकं गानं तत्कर्तृकरोदनमिव इति धात्वर्थविशेष्यकः, गानकर्ता देवदत्तो रोदनकर्तेव इत्यादिकर्तृविशेष्यको बोधः संभवति।

इदन्त्ववधेयम्—एतादृशस्थलानुरोधेनैव वैयाकरणबुधानां तथा दण्डिप्रभृत्यालङ्कारिकाणां क्रियामुख्यविशेष्यकबोधे आग्रहः प्रतिभाति। प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधपक्षे कर्त्रोः सादृश्यस्य प्राधान्यं बुभुत्सितस्य रोदनगानसादृश्यस्य गौणत्वं समापतति। एवं हि मननशीलैश्चिन्तनीयम्—कर्त्रोः सादृश्योक्त्या किमभिप्रैति वक्ता ? रोदनगायनयोः सादृश्यसूचनया तु गायनस्वरसञ्चारं निन्दति। तथाचैतादृशस्थले धात्वर्थमुख्यविशेष्यतया बोध एव चमत्कारोदयः। इति।

अस्तु, उपमोत्प्रेक्षयोः किं ज्ञातमिति चिन्तनीयम्—उपमायां गायनस्य प्राधान्यात्तत्र विकृतिर्व्यज्यते। उत्प्रेक्षायान्तु देवदत्तः एवं गायति येन रोदितीति आशङ्का सम्भावना वा जायते इति सूचयति वक्ता। एतादृशवाक्यश्रोतृणां व्युत्पन्नानां मनसि कीदृग् ज्ञानं जायते ? इति परीक्ष्यैव निर्णेतुं शक्नुयात्।

एवमेव लिम्पतीव तमोऽङ्गानीत्यादावपि लेपनकर्तृतमसोः सादृश्यवर्णनेन किं भवति? एवं तमो व्याप्नोति येन अङ्गानि लिम्पतीति संभावना जायते। अनयोः किं सुन्दरमिति परीक्षणीयम्।

एवन्तु मम प्रतिभाति--धात्वर्थस्य आख्यातार्थे विशेषणतया न्यायनयेन वैयाकरणनयेन मुख्यविशेष्यतया भानमिति पक्षद्वयम्। अत्र चेवार्थसादृश्ये धात्वर्थस्य विशेषणता नोपपद्यत इति काठिन्यम्। परं ज्ञानेऽन्वयो वैयाकरणमतेऽपि न विरुध्यते। शाब्दबोधेऽपि अन्वेति। अत्र च सम्भावना ज्ञानम्, संभावनायां प्रकारकतयाऽन्वये न विरोधः। विधेयताऽपि विषयताविशेषः, तेन विधेयस्य ज्ञानेऽन्वयः। अन्यविशेषणस्यापि ज्ञानेऽन्वयः। नीलो घट इत्यत्र नीलत्वं घटे विशेषणमपि प्रकारितया ज्ञानान्वयि, तेन नीलत्वप्रकारकं घटविशेष्यकं ज्ञानमिति व्याख्यायते। तथा च सादृश्यवस्तुनाऽन्वये व्युत्पत्तयो बाधिकाः संभावनान्वये तु नेति, उपमां विहायोत्प्रेक्षावर्णनस्य रहस्यम्। इदमेव कविवचसां चमत्कारानुत्थानं न वै तिङन्तेनोपमानमस्तीति भाष्याभिप्रेतम्। तिङन्तार्थस्य विधेयता संभावनायामेव संगच्छेत, सादृश्यबोधे च सादृश्यस्य अन्यस्य वा विधेयता प्रसज्येत नतु तिङन्तार्थस्य। सादृश्यबोधे प्रतियोगिनोऽनुयोगिनश्च परस्परं भेदो देदीप्यमान एव तिष्ठति, संभावनायाञ्च भेदो मुकुलितो जायते। यथा स्थाणुधर्मिणि मन्ये पुरुषोऽयमिति संभावनायां न तथा स्थाणुपुरुषभेदो जागर्ति। तथाचेवार्थसंभावनायां चमत्कारातिशयापेक्षिण उत्प्रेक्षां रोचयन्ते। पण्डितराजस्तु तिङन्तार्थस्य लेपनव्यापाराश्रयत्वस्य विधानं ब्रूते। तत्र लेपनं लेपनाश्रयत्वञ्च समानमेवेति न तत्र विशेषचिन्ता। लेपनं हि व्यापने विधीयेत व्यापनञ्च निगीर्णत्वादनुपात्तम्, तेन उद्देश्यस्योपादानाभावान्न लेपनं विधातुं शक्यते। लेपनाश्रयत्वविधेयस्योद्देश्यन्तु तम उपात्तम् इति तथा व्यधात्। रोदितीव गायतीत्यादौ तु गानस्योपादानाद् रोदनं सुखेन विधातुमर्हम्। देवदत्तकर्तृकं गानं तत्कर्तृकं रोदनं मन्ये रोदनप्रकारकसंभावनाविषय इति धात्वर्थमुख्यविशेष्यकबोध एव विशेषचमत्कारी, नतु तथा गायनकर्तारं देवदत्तं रोदनकर्तारं मन्ये इत्यादिरीत्या बोधः। इति चमत्कारचणचेतसो विपश्चितश्चिन्वन्तु सुचिरं सारमिति।

गुरो त्वदीयेन नयेन वर्ती
विचारमार्गं परिमार्जयंश्च।
मदीयवृत्त्या समलामलं ते
त्वदीयमेवार्पयति द्रुतं तत्॥

सागर विश्वविद्यालयः सागर संस्कृत विभाग संस्कृत परिषद् से प्रकाशमान सागरिकानाम संस्कृत पत्रिका के ११वें वर्ष में प्रथम अङ्क १९७३ ई० में प्रकाशित संस्कृतमय

# उपमोत्प्रेक्षाकलकलः

अन्धकार अङ्गों को मानो लिप रहा है, आकाश कजली को वर्षा रहा है, खल की सेवा की तरह दृष्टि-निष्फल हो गई है यह मृच्छकटिक का अन्धकार वर्णन विद्वानों में छीपा नहीं है। उत्तर आधे में उपमा का विवाद न होने पर भी पहला आधा उत्प्रेक्षा का उदाहरण किया गया है यह भी मालूम है, अध्यवसान के कारण लिम्पतिवर्षति से व्यापन अर्थ प्रतीत होता है। अन्धकार कर्ता वाला अङ्गकर्म वाला व्यापन (अन्धकार का शरीर पर भर जाना) अङ्गकर्म वाले लेपन के ऐसा है, (अन्धकार से शरीर को लिपने के ऐसा है) इसी प्रकार अन्धकार कर्ता वाला आकाश कर्म वाला व्यापन (अन्धकार का आकाश में भर जाना) आकाश कर्ता वाला कजली कर्म वाला वर्षण (आकाश से कजली बरसाना) के ऐसा है। यहां इव शब्द का 'ऐसा' शब्द से अनुवाद में उपमा का अनुवाद हुआ, लिपता है मालूम पड़ता है, बरसता है मालूम पड़ता है। इस प्रकार अनुवाद में उत्प्रेक्षा का अनुवाद हुआ। यहां अधिक लोग उत्प्रेक्षा का आदर करते हैं उपमा का नहीं इसमें क्या कारण है यही यहां विचार का विषय है। अनेक लोग व्याकरण का कलह उपस्थित करके व्याकरण ही से उपमा का खण्डन और मण्डन करते हैं। उसमें आलङ्कारिक श्री जयराम भट्टाचार्य जी का मत दिया जाता है।

जहां इव का अर्थ सादृश्य होता है वहां उपमा का अवसर है, 'इवेन नित्य समासोपिभक्त्यलोपश्च' इस वार्तिक द्वारा इव के साथ नित्य समास का विधान है। जहां समास है वहीं इव शब्द का सादृश्य अर्थ है। यहां इव तिङन्त के साथ लगा है, समास नहीं है, उपमा का अर्थ नहीं है। दूसरे लोग इसको नहीं मानते, इव शब्द के साथ समास नित्य है इसमें प्रमाण नहीं। समास सहसुपा सूत्र से सिद्ध था वार्तिक

का फल विभक्ति का लोप न होना तथा स्वर में है, ऐसा कैयट आदि से व्यवस्था की गई है। और क्या ? जहां समास है वहीं इव का अर्थ सादृश्य है ऐसे नियम नहीं हो सकते। संभावना तथा सादृश्य में वाक्य और समास दोनों बहुत मिलते हैं ? तब समास न रहने पर भी उपमा का बाधक नहीं मिला, यह निकला।

उपमा अलङ्कार के योग्य उपमान यहां नहीं मिलता इसलिये यहां उपमा अलङ्कार नहीं ऐसा दण्डी के अनुयायीओं का विचार है। जैसे चन्द्र इव मुख यहां चन्द्र इव का सन्निधान हैं, इव का अर्थ सादृश्य है, उसका प्रतियोगी चन्द्र है, प्रतियोगी होने से उपमान है। वैसा इस पक्ष में नहीं है, लिम्पति पद के साथ इव का सम्बन्ध है, लिम्पति में दो अंश है, एक धात्वर्थ लेपन और दूसरा तिङ् का अर्थ कर्ता, तिङ् से व्यवधान होने से लेपन में इव का अर्थ सादृश्य का अन्वय नहीं हो सकता। किसी प्रकार व्यवहित से अन्वय भी करें तो लेपन का उपमेय नहीं है। व्यापन लिम्पति पद का ही लक्षणा द्वारा अर्थ है। शक्यार्थ लक्ष्यार्थ का एक साथ एक ही पद से भान नहीं हो सकता। तिङर्थ कर्ता के साथ सम्वन्ध करने पर लेपन कर्ता के सदृश तम ऐसा बोध होगा, कर्ता और तम के साथ कोई साधारण धर्म प्रसिद्ध नहीं इसलिये कर्ता उपमान नहीं वन सकता। तिऽर्थस्तु विशेषणम् इस भूषण कारिका के अनुसार तिङर्थ कर्ता धात्वर्थ में विशेषण होगा, वैयाकरण मत के अनुसार सादृश्य में विशेषण हो नहीं सकता। न्याय मत में भी तिङर्थ कर्तृत्व होगा, उसके अन्वय का भी नियम है कि दूसरे में न विशेषण हुए प्रथमान्त पद के अर्थ में अन्वित होगा, तम में अन्वित होगा, सादृश्य में अन्वित नहीं हो पायेगा। किसी प्रकार अन्वय करने पर भी लेपन कर्तृत्व के सदृशतम ऐसा उपमा का वोध अच्छा नहीं वनेगा। तम का उपमान कर्तृत्व ठीक नहीं मिला। स्वाश्रय प्रतियोगी कर्तृत्व सम्वन्ध से सादृश्य में कर्तृत्व का अन्वय करने पर सम्वन्ध कुक्षि में आश्रय कर्ता उपलब्ध होगा किन्तु किसी पद का अर्थ न होने से उपमान नहीं हो सकता। इसलिये योग्य उपभान न मिलने से उपमा नहीं यह निश्चित हुआ, जैसे कि दण्डी की कारिका है—

कर्ता को यदि उपमान माने तो वह सम्भव नहीं, क्योंकि क्रियापद के अर्थ क्रिया में विशेषण है, कर्ता से क्रिया प्रधान हुई, क्रिया अपने कारकों की अपेक्षा में

व्यग्र है, कारकों के साथ अन्वय अन्तरङ्ग होने से कारकों का पहले अन्वय होगा, कारकों के अन्वय से परिपूर्ण निराकाङ्क्ष क्रिया दूसरे का व्यपोह अपेक्षा के लिए समर्थ नहीं है, अतः कर्ता या क्रिया किसी का सादृश्य में अन्वय सम्भव नहीं।

यदि ऐसा कहा जाय कि जहां साथ ही दो को आकांक्षा हो वहां दोनों में साथ ही अन्वय हो जाता है, एक का अन्वय होने पर निराकांक्ष होकर दूसरे के साथ अन्वित नहीं हो सकता, साथ ही अन्वय करने में पहले निराकांक्ष नहीं हो पायेगा। जैसे पृथिवी (एव) में ही गन्ध है। यहां (एव) ही पद से पृथ्वी से भिन्न में नहीं रहने वाला पृथिवी में रहने वाला गन्ध है ऐसा अर्थ निकलता है, एकही पृथ्वी पद का ही के अर्थ भिन्न में और विभक्ति का अर्थ ( में ) में अन्वय होता है, उसी प्रकार 'खाकर जाता है' इस वाक्य में पूर्व कालिक क्रिया है, उसके लिए 'कर' प्रत्यय लगा है, उसका (उत्तर) वाद और समान कर्ता अर्थ है, खाने के वाद खानेवाला ही जाता है दूसरा नहीं, जहां दूसरा खाय दूसरा जाय वहां कर प्रत्यय नहीं लगता, यहां एक ही खाना क्रिया का वाद के साथ और जाना क्रिया के कर्ता के साथ अन्वय होता है, वह एक ही साथ होता है, खाने के बाद खाने वाला जाता है ऐसा अर्थ निकलता है। नैयायिकों के अनुसार तिङ् का अर्थ यत्न है उसका एक ही साथ खाना और जाना क्रिया के साथ अन्वय हो जाता है, उससे खाने के यत्न के वाद जाना यत्न वाला है। ऐसा अर्थ होता है। उसी प्रकार एक ही कर्ता का प्रकृत में एक ही साथ लिपना क्रिया तथा सादृश्य में अन्वय हो सकता है। उससे तार्किक नीति के अनुसार 'लिपने के कर्ता ऐसा अन्धकार' यह उपमा का बोध होगा, ऐसे ही व्याकरण मत के अनुसार 'अन्धकार कर्ता वाला लेपन अन्धकार कर्ता वाले व्यापन के ऐसा है' ऐसा उपमा का बोध संभव है।

इसके खण्डन में पहले कुछ कहा हुआ ध्यान में रखना चाहिये कि न्याय मत में तिङ् का अर्थ कर्तृत्व होता है कर्ता नहीं, अतः कर्ता उपमान नहीं मिलता, संवन्ध की कुक्षि में प्रवेश करने पर पदार्थ नहीं होता, उसका वाक्यार्थ मे अन्वय नहीं होगा, सादृश्य में अन्वय नहीं हो सकता, तथा न्याय में आख्यात का अर्थ कृतिका दूसरे का नहीं विशेषण जो प्रथमान्त पद का अर्थ उसमें अन्वय होने का नियम है।

सादृश्य ऐसा नहीं है, वह प्रथमान्त पद का अर्थ नहीं है तथा अन्धकार में विशेषण होता है।

व्याकरण मत के अनुसार भी पहला वर्णित उपमा बोध नहीं बन सकता। व्यापन अर्थ की उपस्थिति कराने वाला कोई पद नहीं है, लिम्पति शब्द से लक्षणा के द्वारा व्यापन अर्थ निकालेगें तो लेपन अर्थ नहीं मिलेगा, शक्यार्थ और लक्ष्यार्थ का एकही साथ बोध नहीं होता, उन दोनों का परस्पर अन्वय नहीं होता।

पृथ्वी में ही गन्ध है, इत्यादि वाक्यों में ऐसा नहीं है, वहां दूसरा तरीका है। पृथिवी शब्दार्थ का ही दो बार भान होता है। वैसे ही खाकर जाता है, यहां खाना शब्दार्थ का ही दोबार भान है। अथवा 'पृथिवी में ही गन्ध है' इस वाक्य के ही शब्द का ही पृथिवी से भिन्न में नहीं रहने वाला अर्थ है। चाहे ही शब्द पृथिवी और गन्ध के सम्बन्ध का द्योतक है। पृथिवी सम्बन्धी गन्ध ऐसा अर्थ है। पृथिवी से दूसरे में नही रहना और पृथिवी में रहना ये दो सम्बन्ध है, उसका निष्कर्ष होगा कि अपने से विभिन्न में नहीं रहना और अपने में रहना। इसी प्रकार 'खाकर जाता है' यहां कर प्रत्यय खाना और जाना का सम्बन्ध बताता है। अपना बाद १ और अपना जो कर्ता उसी कर्तावाला २ ये दो सम्बन्ध हैं। 'सभानकर्तृकयोः पूर्वकाले' यह पाणिनि सूत्र इन दो सम्बन्धों में तात्पर्य बताता है। इसलिये शक्यार्थ के दो बार भान का प्रसङ्ग नहीं है।

एक बात आलङ्कारिकों को सोचना है—इसी प्रकार के सन्दर्भ पर रसगङ्गाधर में 'आलङ्कारिक शास्त्र स्वतन्त्र है। उसमें व्याकरण सिद्धान्त का विरोध कुछ करने वाला नहीं है' ऐसा पण्डितराज कहते हैं। यहां आलङ्कारिक मूर्धन्य दण्डी कारिका में कर्ता धात्वर्थ क्रिया में विशेषण है, तथा धात्वर्थ क्रिया वाक्यार्थ में प्रधान रहती है। इस व्याकरण सिद्धान्त का अनुरोध करते हैं। सोचना है कि यह आलङ्कारिकशास्त्र आख्यात के अर्थ का वाक्यार्थ में प्रधानता है या नहीं ? इस विचार में स्वतन्त्र है अथवा व्याकरण सिद्धान्त का परतन्त्र है। पण्डितराज का वैसा कथन प्रौढ़िवाद है या सिद्धान्त वर्णन है।

कोई लेपन कर्ता अन्धकार के सदृश लेपन क्रिया ऐसा उपमाबोध वर्णन करता है वह ठीक नहीं है, आख्यात का अर्थ कर्तालेपन क्रिया का विशेष्य नहीं हो सकता।

क्रिया कर्ता में धर्म धर्मिभाव है उपमान उपमेय भाव नहीं हो सकता। क्रिया कर्ता का धर्म है, कर्ता उपमान और क्रिया उपमेय हो ऐसा नहीं हो सकता। आख्यात अर्थ कर्ता प्रकार वाले बोध का धातु से होने वाली उपस्थिति कारण मानी गई है। इसके अनुसार कर्ता को क्रिया में विशेषण रहना है! इसलिये कर्ता का सादृश्य में अन्वय असम्भव है। कार्यकारण भाव में संकोच करने में कुछ प्रमाण नहीं है। इसी के लिये नया करना गौरव ग्रस्त होगा। (इव) ऐसा पद का लक्षणा से कर्ता का सादृश्य इतना अर्थ किया जाय, उसके एक देश कर्ता में और आख्यात अर्थ कर्ता में क्रिया लेपन का अन्वय करके लेपन का दो बार भान मानना बड़ा क्लेशकर है, केवल उपमा का आग्रह ही इसका मूल हो जायेगा। यदि लक्षणा सुरसा के प्रसार से (इव) ऐसा पद का लेपन के कर्ता का सादृश्य इतना अर्थ किया जाय तो लेपन उपमान ऐसा शब्द के अर्थ ही में आ गया तो भी योग्य उपमान की उपलब्धि नहीं हुई। लेपन और कर्ता में खण्ड से लक्षणा मानने पर दोनों के अलग अलग अन्वय की आपत्ति है, सादृश्य में शक्ति है उसका-उपयोग है, तो दोनों वृत्तिओं का एक साथ उपयोग भी अनुचित होगा। एक पद में लक्षणा दूसरे में तात्पर्य ग्रहण करना मानने में कोई विनिगमक नहीं है। वाचक लक्षक पदों में तात्पर्यग्रहण शक्ति की कल्पना क्लेशकर ही हैं।

कोई आख्यात अर्थ कृति का स्वाश्रय प्रतियोगिकत्व सम्बन्ध से सादृश्य में अन्वय करता है, स्वशब्द से कृति उसका आश्रय कर्ता वह है प्रतियोगि जिसका ऐसा सादृश्य उसका अभिप्राय है, इसका खण्डन भी प्रायः हो चुका है, सम्बन्ध के अन्दर आया हुआ आश्रय कर्ता उपमान नहीं हो सकता, कृति अन्धकार का धर्म है इसलिये अन्धकार उपमेय का उपमान नहीं हो सकती। सादृश्य का प्रतियोगी उपमान होता है, यहां सादृश्य का कृति के साथ प्रतियोगित्व सम्बन्ध नहीं रखा गया है किन्तु स्वाश्रय प्रतियोगित्व है, इसलिये भी कृति उपमान नहीं हो सकती। और भी आख्यात अर्थ कृति का न्यायमत में अविशेषण हुए प्रथमान्त पद के अर्थ में विशेषण होना नियत है सादृश्य में कैसे विशेषण होगी।

इसका प्रकार मुक्तावली आदि में वर्णित है उसका विस्तार यहां नहीं हो सकता।

इसी प्रकार नीचे का समाधान भी ठीक नहीं है, चैत्र नहीं पकाता है ऐसी जगह कृत्ति का नहीं के अर्थ अभाव में अन्वय होता है वैसे ही प्रकृत में सादृश्य में अन्वय सम्भव है, (इव) ऐसा पद प्रथमान्त भी माना जा सकता है अतः उसके अर्थ में भी कृति का अन्वय हो सकता है, किन्तु (इव) ऐसा पद जहाँ रहता है वहाँ सादृश्य प्रतियोगिता सम्बन्ध से अन्वय के लिये साकाक्ष रहता है दूसरे सम्बन्ध से उसका कैसे अन्वय हो सकता है ? प्रतियोगि में सादृश्य का अन्वय होता है इस नियम का भङ्ग भी होगा। और देखें ऐसा अन्वय करने पर लेपन कृतिका आश्रय जो सादृश्य उस सादृश्यवाला तम ऐसा बोध होगा, जिससे उपमा की जागृति नहीं होती, कर्ता का सादृश्य तम में तौभी नहीं भासता। आश्रयत्व संसर्ग में आयेगा इसलिये लेपन कृतिका आश्रय जो सादृश्य उसका अनुयोगी तम ऐसा इस मत का इष्ट शाब्दबोध का आकार भी नहीं बनेगा। आख्यात ही का कृत्याश्रय में लक्षणा करने में अधिक गौरव होगा। सादृश्य में कृत्याश्रयत्व नहीं है अन्वय की अनुपपत्ति का परिहार होता नहीं इसलिये लक्षणा का उत्थान नहीं होगा। लेपन धातु का अर्थ ही तम में उपपन्न न होकर लक्षणा का उत्थापक होगा। अचेतन में कृति न रहने से आख्यात का व्यापार ही में लक्षणा स्वारसिक है। यदि लेपन का कर्ता उपमान हो तम उपमेय हो तो व्यापन रूप से अध्यवसित लेपन साधारण धर्म संभव है, लेपन को उपमान करने पर साधारण धर्म नहीं मिलता, एक ही धर्म और धर्मी नहीं हो सकता, इसी अभिप्राय से दण्डी की कारिका है—

यदि लेपन ही उपमान हो तो दूसरा लेपन कौन है ? जो साधारण धर्म हो सके, वही एक धर्म और धर्मी है ऐसा सावधान आदमी नहीं कहता। अतः साधारण धर्म नहीं मिलने से लेपन उपमान नहीं हो सकता। संस्कृत कारिका में लिम्पति शब्द है, उसका शक्यार्थ लिप् धातु है, धातु निर्देश में श्तिप् प्रत्यय है। किन्तु लक्षणा से लेपन अर्थ है। जैसे कि उपासना अर्थ में न्यायकुसुमाञ्जलि की कारिका में उपास्ति शब्द का प्रयोग है। यदि लेपन साधारण धर्म मानते हो तो लेपन का कौन कर्ता प्रसिद्ध है जो उपमान हो सके ! ऐसा दण्डीकारिका के पूर्व अर्ध का अर्थ है। आख्यात का अर्थ कर्ता कर्ता रूप से उपमान नहीं हो सकता ऐसा तात्पर्य मानने पर आगे कहा जाने वाला 'न वैतिङन्तेनोपमानमस्ति' इस भाष्य द्वारा समाधान में तात्पर्य लगाना होगा।

यदि लेपन ही उपमान इष्ट हैं तो उत्तर आधे से धर्म धर्मीभाव नहीं बनेगा यह समाधान ठीक ही है। यह भी अभिप्राय निकल सकता है कि लेपन का सादृश्य में अन्वय होने पर उपमान से भिन्न लेपन का कर्ता कौन है ? उसका कहाँ अन्वय है ? इसमें धर्मल्युप्ता उपमा का संदेह नहीं है, जहाँ साधारण धर्म प्रसिद्ध है, साक्षात् कथन के विना भी बुद्धि में आ जाता है, वहाँ साक्षात् कथन न होने से धर्मलुप्ता का उदाहरण होता है, यहाँ तो साधारण धर्म है ही नहीं।

इस विषय में आगे अर्थवाली कारिका से दण्डी महाभाष्य का प्रमाण देते हैं। यहाँ इव शब्द से किसी को उपमा का भ्रम होता है। वह भ्रम तिङन्त से उपमान नहीं मालूम होता ऐसे आप्तवाक्य का अतिक्रमण किया है। उत्प्रेक्षा का कारण इव शब्द में संभावनावाचकता को न जानकर उपमा का मूल सादृश्य वाचकता समझना भूल है। यह भूल बड़ी है क्योंकि 'नवैतिङन्तेनोपमानमस्ति' इस महाभाष्य के आप्तवचन का अतिक्रमण करके हुई है। 'धातोः कर्मणः समान कर्तृकादिच्छायां वा ३।१।७ सूत्र में ऐसा महाभाष्य है आशङ्का होने पर अचेतन कर्ता रहने पर भी सन् प्रत्यय का कथन करना चाहिये। अश्मा लुलुठिषते, पत्थर लुढ़कना चाहता है, कूलं पिपतिषति तट गिरना चाहता है, इच्छा चेतन में होती है, ये सब अचेतन हैं, सन् प्रत्यय नहीं प्राप्त है इसलिये दूसरा वचन बनाना चाहिये। तब तो इस नये वचन में अचेतन पद जोड़ने का प्रयोजन नहीं है। आशङ्का से सन् प्रत्यय होता है इतना ही वचन बनाना चाहिये उससे श्वा मुमूर्षति कुत्ता मरना चाहता है यह भी प्रयोग सिद्ध हो जायेगा। कुत्ते में मरने की इच्छा नहीं है और चेतन है, देखने वाला आशङ्का से मुमूर्षति कहता है। अथवा नया वचन न बनावो, चेतन की इच्छा भी आंख से दिखाने की चीज नहीं है, चेतन की चेष्टा से समझी जाती है, वैसी चेष्टा तो अचेतन में तुल्य है। इच्छा समझने के कारण चेतन अचेतन में बराबर हैं। जैसे देवदत्त में शरीर की क्रिया इच्छा बताती है वैसे ही गिरने वाले तट की भी क्रिया हैं। जो चटाई बनाना चाहता है उसको चटाई बनाऊंगा ऐसी घोषणा करने की जरूरत नहीं है। किन्तु हाथ में रसी, खूटी, पूला लिये हुए तैयार को देख कर चटाई बीनने की इच्छा मालूम पड़ती है। वैसी ही गिरने वाले तट में भी देखकर पिपतिषति बोला जाता है; छोटे-छोटे रोड़े गिरने लगते हैं,

दरारें फट जाती हैं, दरार बड़ी चौड़ी होने लगतीं हैं। मरने वाला कुत्ता भी एकान्त में छीपता है, उसकी आँखें सूज जाती हैं। अथवा उपमान से सिद्ध है। आदमीओं के लुढ़कने के ऐसा पत्थर का लुढ़कना, आदमीओं के गिरने के ऐसा तट का गिरना। तिङन्त से उपमान का भान नहीं होता। यहां कैयट की व्याख्या नीचे की तरह है आशङ्का संभावना है। तिङन्त से तिङन्त का अर्थ लेना। क्रिया केवल साध्य स्वभाव है, उसका स्वरूप बना नहीं है। उपमान उपमेय भाव वहां होता है जहां वस्तु का यह वह इत्यादि सर्वनामों से परामर्श के योग्य स्वरूप है, साध्य स्वभाव क्रिया का यह वह इत्यादि सर्वनामों से परामर्श नहीं होता, इसलिये तिङन्त से उपमान का भान नहीं होता। इव शब्द के प्रयोग होने पर अध्यारोप तो है, जैसे देवदत्त ऐसा गाता है मानों रोता है, ऐसा जाता है जैसे नाचता है मालूम पड़े। परिपूर्ण न्यून का उपमान होता है, सभी क्रिया अपने आश्रय में समाप्त हैं इसलिये उसमें न्यूनता असंभव है। वह वाक्यपदीय में कहा गया है—जिन कारणों से हंस गिरता है ऐसा कहा जाता है वे पक्षी में समाप्त हैं उपमा वस्तु नहीं है। भिन्न क्रियाओं का सादृश्य नहीं होता जैसे खाता है के ऐसा जाता है।

इस पर नागेशभट्ट की टीका—तिङन्त अर्थ से क्रिया लेनी है। भाष्य के उपमान शब्द का सादृश्य अर्थ है। कोई तिङन्त से उपमान का बोध नहीं होता ऐसा भाष्य का अर्थ कहते हैं। शब्द शक्ति का अथवा वस्तुशक्ति का विलक्षण स्वभाव है जिससे तिङन्त से सादृश्य का बोध नहीं होता तथा साध्य स्वभाव क्रिया उपमान नहीं होती। तिङन्त का अर्थ उपमान नहीं होता उपमेय होता है जैसे क्षत्रिय के ऐसा ब्राह्मण पढ़ता है, यहां तिङन्त अर्थ अध्ययन क्रिया उपमेय बनी है। अध्यारोप का अर्थ उत्प्रेक्षा है। श्येनयाग के वर्णन में कहा गया है कि श्येन जैसे झपट कर पकड़ता है वैसे ही यह यागकर्ता झपट कर शत्रु को पकड़ता है, यहां जैसे तैसे शब्द आये हैं तौभी उपमा का बोध नहीं होता, पकड़ना क्रिया एक ही है। किन्तु मध्य में एक वाक्य बनता है कि जिस धर्मवाला श्येन से पकड़ना है उस धर्मवाला यजमान का पकड़ना है ऐसा वाच्य अर्थ का बोध हो जाने पर जिस उस शब्दों से धर्मों को एक समझा जाता है तब उसको साधारण धर्म मान कर पीछे श्येन के साथ याग का सादृश्य बोध होता है क्रिया के सादृश्य का बोध नहीं होता।

इसके निष्कर्ष पर ध्यान देना चाहिये—तिङन्त से उपमान नहीं होता इस भाष्य का क्या अर्थ है, उदाहरण में दो तिङन्तों का प्रयोग है, इव शब्द के साथ दो तिङन्तों के प्रयोग होने पर उपमान उपमेय भाव नहीं होता यह केवल भाष्य के अक्षर से निकलता है। क्षत्रिय के ऐसा पढ़ता है यह भी भाष्य प्रयोग दूसरी जगह का मान कर उसका संकोच होगा या नहीं, दो तिङन्त ही में भाष्य का निषेध स्थित रहेगा। लेकिन तिङन्त का अर्थ क्रिया या कर्ता ले इस पर कैयट साध्य स्वभाव क्रिया का वर्णन करते हैं, नागेश भी क्रिया लिखते हैं। इस प्रकार उपमान की अयोग्यता का शब्द शक्ति का स्वभाव, वस्तु शक्ति का स्वभाव तथा यह वह आदि सर्वनाम से परामर्श न होना जो भी कारण साध्य स्वभाव क्रिया में है वह आख्यात का अर्थ कर्ता में भी है इसलिये क्रिया के ऐसा कर्ता भी उपमान नहीं हो सकता, अतएव लुलुठिषते इत्यादि भाष्य का उदाहरण संगत हुआ, अन्यथा कर्ता का उपमान उपमेय भाव का प्रसङ्ग रह जाता। इसलिये लेपन कर्ता के ऐसा तम यह बोध भाष्य का प्रतिकूल होगा। युक्त भी है कि उपमान के अयोग्य साध्य स्वभाव क्रिया से आलिङ्गित ही कर्ता है वैसी क्रिया के बिना कर्ता का स्वरूप परिचय नहीं हो सकता। क्रिया की कर्ता में समाप्ति कथन से वाक्य पदीय कारिका का भी अभिप्रेत कहा जा सकता है। साध्य स्वभाव क्रियाओं का उपमा बोध नहीं होता, इव शब्द का अर्थ संभावना है ऐसा कैयट के शब्दों से निकलता है। इव शब्द से क्रिया प्रतियोगिक सादृश्य का बोध नहीं होता उत्प्रेक्षा का बोध होता है ऐसे नागेश के अक्षर मालूम पड़ते हैं।

इस प्रकार उत्प्रेक्षा में इव शब्द का संभावना अर्थ होता है, तम कर्तावाला अङ्गकर्मवाला व्यापन लेपन प्रकार वाली जो संभावना उसका विषय है, संभावना एक प्रकार का ज्ञान है, व्यापन लेपन है ऐसी संभावना है। इसका लेपन प्रकार है व्यापन विशेष्य है, व्यापार को मुख्य विशेष्य मानने वाले वैयाकरणों के अनुसार शाब्द बोध का आकार है। अङ्गकर्मवाला जो लेपन वह प्रकार है जिसका ऐसा जो संभावना ज्ञान उसका विषय जो अङ्गकर्मवाला व्यापन उसका आश्रय तम ऐसा शाब्द बोध प्रथमान्त के अर्थ को मुख्य विशेष्य मानने वाले नैयायिकों के अनुसार है।

इस पर कहते हैं कि उपमा के खण्डन में इव का अर्थ सादृश्य मानने पर जिन नियमों का भङ्गरूप दोष दिया गया है उन नियमों का भङ्ग उत्प्रेक्षा का साधक इव

का अर्थ संभावना मानने पर भी होता है तब उपमा ही क्यों न माना जाय जैसे कि संभावना पक्ष में भी व्यापन और लेपन दो अर्थ करने के लिये एक साथ शक्ति लक्षणा दोनों वृत्ति का उपयोग, एक पद से उपस्थित शक्यार्थ लक्ष्यार्थ का परस्पर अन्वय करना, धात्वर्थ लेपन का इव के अर्थ संभावना में अन्वय करने पर धात्वर्थ लेपन का वैयाकरणों के अनुसार मुख्य विशेष्य रूप से भान न होना। नैयायिकों के अनुसार धात्वर्थ लेपन का आख्यातार्थ कृति में विशेषण न होना। जैसे चैत्र नहीं पकाता है इत्यादि स्थल में आख्यातार्थ कृति का अभाव में अन्वय होता है वैसे ही यहाँ सादृश्य में अन्वय हो जायेगा। अथवा अचेतन कर्ता स्थल में कृति का बाध होने से व्यापार अथवा व्यापाराश्रय में आख्यात की लक्षणा स्थारसिक ही है, उससे अङ्ग-कर्म वाला जो लेपन उसका सदृश जो अङ्गकर्म वाला व्यापन उसका आश्रय तम ऐसा उपमा का बोध न्याय प्रक्रिया के अनुसार हो जायेगा! धात्वर्थ का आख्यातार्थ में अन्वय नियम का भङ्ग संभावना या सादृश्य बोध में बराबर है। वैसे पदों के सन्निवेश विशेष वैसे बोध में कारण है यह विषय भी दोनों में समान है।

अथवा आख्यात का अर्थ कर्ता का सादृश्य में अन्वय करने से लेपन कर्ता के सदृश व्यापन का आश्रय तम है ऐसा उपमा का वोध वर्णन कर सकते हैं, आख्यात का अर्थ कर्तृत्व का प्रथमान्त के अर्थ में अन्वय करने पर जैसे कर्ता अर्थ मिलता है वैसे सादृश्य में भी अन्वय करने पर कर्ता अर्थ मिल जायेगा। इसीलिये रसगङ्गाधर में उत्प्रेक्षा का वर्णन करते हुए पण्डितराज कहते हैं कि लिम्पतीत्यादि में भेद अथवा अभेद सम्बन्ध से तिङन्त के अर्थ का प्रथमान्त के अर्थ में उत्प्रेक्षा है न कि धात्वर्थ लेपन का निगीर्ण व्यापन में शब्दों के अन्वय का प्रकार जैसा उत्प्रेक्षा में वैसे उपमा में!

दूसरे आलङ्कारिक वैयाकरण बुध के समादर का अनुरोध से आख्यान के अर्थ कर्ता को धात्वर्थ लेपन में विशेषण करते हुए शाब्द बोध वर्णन करते हैं—तम कर्ता वाला अङ्गकर्म वाला जो लेपन उस लेपन प्रकार वाली जो संभावना उसका विषय व्यापन ऐसा उत्प्रेक्षा का बोध होगा। काव्यप्रकाश मूल में व्यापन आदि लेपन आदि रूप से संभावित है ऐसा लिखा है, उसके अनुसार यह बोध होता है। इस उत्प्रेक्षा

बोध के लिये जैसे कार्यकारण भाव का संकोच करते हैं वैसा संकोच करके वैसे लेपन के ऐसा वैसा व्यापन यह उपमा बोध माना जाय।

कुछ लोग कहते हैं कि आख्यात का अर्थ कर्तृत्व ही होय, कर्तृत्व का स्वाश्रय प्रतियोगिकत्व सम्बन्ध से सादृश्य में अन्वय हो, ऐसे अन्वय का नियामक तिङन्त-संगत इव शब्दरूप विशेष समभिव्याहार को मानेंगे जिससे दूसरी जगह आपत्ति नहीं होगी। आख्यात का आश्रयपर्यन्त में लक्षणा का गौरव दूसरे लोग भी सहते ही हैं, इसलिये गौरव का परवाह नहीं, यदि कहे कि जहां आख्यात के अर्थ भावना का अन्वय होता है वहीं आख्यात अर्थ संख्या का भी अन्वय होता है इस नियम का व्यभिचार होगा क्योंकि सादृश्य में संख्या का अन्वय नहीं होता, सो मजबूत नहीं है, चैत्र नहीं पकाता है यहाँ आख्यात अर्थ भावना का अभाव में अन्वय होता है वहाँ संख्या का अन्वय नहीं होता। उसके लिये जो नियम में संकोच करेंगे उसके साथ तिङन्त संगत इव शब्द स्थल का भी संकोच कर देंगे। प्रस्तुत पद्य में उपमा स्वीकार करने पर भी पूर्वोक्त तृतीयाध्याय के भाष्य का विरोध हट सकता है, दो तिङन्त के अर्थों का आपस में उपमान उपमेय भाव नहीं होता, ऐसा ही भाष्य का अभिप्राय माना जायेगा, वहाँ भाष्य में दो तिङन्त ही उदाहरण दिये गये है। एक तिङन्त क्षत्रिय के ऐसा पढ़ता है इत्यादि स्थानों में उपमा स्वीकृत ही है। नागेशभट्ट ने साध्य क्रिया को सादृश्य का प्रतियोगी होना मना किया हैं उनसे विरोध होता है यह बड़ी वात नहीं है, उनका व्यक्तिगत वैसा अभिप्राय मान लिया जायेगा, भाष्य कैयट का अभिप्राय दो तिङन्त ही स्थल में माना जायेगा।

दूसरे उपमा पक्षपाती कहते हैं कि तृतीयाध्याय के भाष्य से इतना ही निकलता है कि क्रिया उपमेय नहीं होती। प्रकृत पद्य में लेपन को उपमान बनाने में वाधक नहीं है सो उनका कथन पञ्चम अध्याय के भाष्य से विरुद्ध है। वहां ब्राह्मण के ऐसा पढ़ता है इत्यादि वाक्यों में क्रिया को उपमेय बनाया गया है। तेन तुल्यं क्रिया चेद्वतिः ५।१।११५ सूत्र के भाष्य में क्रिया प्रकृति के अर्थ की विशेषता बताती है या प्रत्यय के अर्थ की ? इस प्रसङ्ग से विचार प्रस्तुत करके कहा गया है,—प्रत्यय के अर्थ का विशेषण ठीक है। आचार्य का सूत्र ही ऐसा-बना है कि प्रत्यय और क्रियापद में

प्रथमा समान विभक्ति दी गई है। इस प्रकार क्रिया में होने वाले वत् प्रत्यय का अव्यय में पाठ नहीं करना पड़ेगा। क्रिया में जैसे लिङ्ग संख्या का योग नहीं होता वैसे वत् प्रत्यय में भी नहीं होगा। यहाँ कैयट की टीका—तुल्य क्रिया साध्य स्वभाव वाली असत्व भूत संभव है, वत् प्रत्यय का साधारण क्रिया अर्थ है, विशेष क्रिया के लिये दूसरे क्रिया पद का प्रयोग होता है। इस प्रकार ब्राह्मणवद् अधीते में वत् प्रत्यय हुआ अध्ययन क्रिया उपमेय होती है।

इसी भाष्य पर इसके कुछ पहले नागेश भट्ट की टीका यह भाष्य का अर्थ है—उपमान उपमेय भाव का विषय प्रकृत तृतीया के अन्वय में समर्थ उपमान क्रिया नहीं है, नवैतिङन्तेन इत्यादि तृतीयाध्याय के भाष्य में तिङन्त ग्रहण उपलक्षण है, असत्व-भूत सभी शयितव्य आदि क्रिया उपमान नहीं होती। वहां तृतीया का योग न होने से तृतीया आदि नहीं होते। पाक आदि घञ् प्रत्ययान्त में तृतीया का योग है तो वह सत्व है क्रिया नहीं। ब्राह्मणवदधीते में ब्राह्मण पद का अर्थ भी क्रिया नहीं है।

इसी भाष्य पर इससे पहले नागेश भट्टपाक आदि के विषय में कहते हैं—पाक शब्द से दो क्रियायें कही जाती हैं, धातु से साध्यावस्थापन्न और घञ् से सिद्धावस्था-पन्न, पहली प्रकार और दूसरी विशेष्य, वस्तुत एक ही है उनमें प्रकारता विशेष्यता स्फुट नहीं होती। इस प्रकार असत्त्व भूत क्रिया ही इस उदाहरण में उपमेय है यह सर्वसम्मत है तब तो पहले लिखा हुआ शब्द शक्ति स्वभाव तथा वस्तुशक्ति स्वभाव की परीक्षा करें जिससे असत्त्व भूत क्रिया उपमान न हो।

पहले कैयट से उठाये गये देवदत्त रोने के ऐसा गाता है, नाचने के ऐसा चलता है, इन वाक्यों में बड़ी समस्या है, दोनों समान तिङन्त हैं, पहले के समाधान की गति नहीं है। कैयट उपमा वारण कर उत्प्रेक्षा मानते हैं। यहाँ उपमा के लिए साधारण धर्म दुर्लभ नहीं है, स्वर विकार पादप्रक्षेप विकार जागरूक है। देवदत्त कर्ता वाला गान देवदत्त कर्ता वाले रोदन के ऐसा है ऐसा उपमा बोध व्याकरण प्रक्रिया से हो सकता है, और न्याय प्रक्रिया से गान कर्ता देवदत्त रोदन कर्ता के ऐसा है।

यह ध्यान देने लायक है कि व्यापारों के सादृश्य वर्णन में ही अधिक चमत्कार है, इसीलिये आलङ्कारिक तन्त्रों में व्याकरण बुधों का समादर है, न्याय नीति

के अनुसार कर्ताओं का सादृश्य वर्णन से क्रियाओं का सादृश्य गौण पड़ जाता है। क्रियाओं का सादृश्य ही चमत्कारी है। मनन करना चाहिए कि कर्ताओं के सादृश्य से वक्ता का क्या अभिप्राय है? रोदन गायन के सादृश्य से तो गायन के स्वर सञ्चार की निन्दा करता है। इसलिये धात्वर्थ क्रिया को ही मुख्य विशेष्य मानना ठीक है।

उपमा और उत्प्रेक्षा का क्या हुआ? यह भी सोचना चाहिये, चमत्कार की परीक्षा की जाय। उपमा में गायन की प्रधानता से गाने में विकार व्यङ्ग्य होगा, यदि वक्ता का तात्पर्य गान निन्दा में हो तो उपमा उपयोगी है। उत्प्रेक्षा में ऐसा देवदत्त गाता है जिससे रोने की संभावना होती है, ऐसा बोध होगा, उसमें रोदन विशेष्य है, तो क्या यहाँ संभावना ही प्रधान है या उसके कुछ और बताना है? जैसे उपमा में स्वर विकृति बताता है, जो और व्यङ्ग है, वह चमत्कारी है या नहीं? वह भी रोदन संबद्ध है या नहीं? यह भी चिन्तनीय है कि संभावना का उत्थापक भी कोई सादृश्य झलकता है, क्योंकि उपमा मूलक अलङ्कारों में उत्प्रेक्षा है, उपमा की झलक उचित ही है। तब तो केवल उपमा की अपेक्षा संभावना की प्रधानता का ही विवाद है? सूक्ष्म फरक होने से ही विवाद का विषय बना है। अनुशासन का अनुरोध चमत्कार नहीं करता, किन्तु शब्द और अर्थ के स्वभाव का अनुरोध करता है, अनुशासन चिन्तन का मार्ग दर्शक है। इसी प्रकार लिम्पतीव तमोऽङ्गानि में अन्धकार का व्यापन लेपन के ऐसा है यह उपमा बोधक है, उपमेय व्यापन में गाढ़ता घनता व्यङ्ग है, इसलिये चमत्कार संभव है। ऐसा तम का व्यापन है जैसे लेपन संभव हो इस उत्प्रेक्षा से क्या व्यङ्ग होगा? यदि सादृश्य ही तक व्यङ्ग मानेंगे तो वह संभावना का साधक है गुणीभूत हो जायगा। यदि गाढता धनता ही व्यङ्ग है तो वह संभावना साधक सादृश्य ही का व्यङ्ग हो जायेगा संभावना का व्यङ्ग कोई प्रधान नहीं मिला। इससे उपमा को बल मिलता है। शब्द स्वभाव के विषय में दो मत विशेष प्रचलित हैं। धात्वर्थ आख्यातार्थ में विशेषण होता है ऐसा न्याय का धात्वर्थ वाक्यार्थ में सबसे प्रधान रहता है ऐसा व्याकरण का। दूसरे मत के अनुसार ज्ञेयवस्तु सादृश्य धात्वर्थ का प्रधान नहीं बन सकता, आलङ्कारिक अधिकतर व्याकरण सिद्धान्त मानते हैं। संभा-वना ज्ञान है, ज्ञान में धात्वर्थ भी विशेषण हो सकता है, जैसे शाब्द बोध का विषय

बनता है, संभावना में प्रकारता रूप से अन्वय में कोई फरक नहीं है। विधेयता भी एक विषयता है उसका भी ज्ञान में अन्वय होता है दूसरे में विशेषण भी ज्ञान में विशेषण होता है। घट में विशेषण भी नीलत्व नील घट के ज्ञान में प्रकारता सम्बन्ध से विशेषण होता है। नीलत्व प्रकार वाला घट विशेष्य वाला ज्ञान कहा जाता है, प्रकारता की जगह प्रकारिता प्रसिद्ध है, उस रीति से सादृश्य वस्तु के साथ अन्वय करने में कुछ नियम बाधक होते हैं, संभावना के अन्वय में नहीं, यही उपमा परित्याग और उत्प्रेक्षा स्वीकार का रहस्य मालूम पड़ता है। यही काव्यों में चमत्कार न होना न वै तिङन्त इत्यादि महाभाष्य का अभिप्रेत है। संभावना मानने पर ही धात्वर्थ या आख्यातार्थ विधेय हो सकता है, उपमा मानने पर सादृश्य या दूसरा कुछ विधेय होगा, धात्वर्थ या आख्यातार्थ नहीं।

सादृश्य बोध में सादृश्य के अनुयोगी और प्रतियोगी का परस्पर भेद प्रदीप्त रहता है, संभावना में भेद मुकुलित हो जाता है, मन्द अन्धकार में दूर पर ठूंठा देखकर पुरुष संभव है ऐसा ज्ञान ठूंठा और पुरुष का भेद वहां नहीं प्रकाशित करता, भेद मुकुलित होने से गाढता धनता में भी अतिशय व्यङ्ग्य हो सकता है। इस प्रकार इव शब्द के अर्थ संभावना में अधिक चमत्कार की अपेक्षा से उत्प्रेक्षा को ही पसन्द करते हैं। इस गङ्गाधर में पण्डितराज तम में लेपन कर्तृत्व रूप लेपन व्यापार के आश्रयत्व की उत्प्रेक्षा मानते हैं, तम में लेपन की अथवा लेपन के आश्रयत्व की उत्प्रेक्षा में फरक नहीं पड़ता। उनका उद्देश्य विधेय भाव पर विशेष जोड़ है। व्यापन उद्देश्य उपात्त नहीं है इसलिये लेपन का विधान नहीं हो सकता, आश्रयत्व का उद्देश्य तम उपात्त है ऐसा उनका अभिप्राय है। उपमा उद्देश्य विधेय भाव के साथ सम्पर्क नहीं कर सकती यह उनका अभिप्राय निकाला जा सकता है।

देवदत्त रोने के ऐसा गाता है इत्यादि में उपात्त रोदन में गान का विधान हो सकता है, देवदत्त का गान रोदन के ऐसा मालूम पड़ता है, रोदन प्रकार वाली संभावना का विषय गान है। इस प्रकार धात्वर्थ मुख्य विशेष्य वाला बोध चमत्कारी है। गान कर्ता देवदत्त रोदन कर्ता संभव है यह बोध चमत्कारी नहीं है। इस प्रकार चमत्कार प्रवीण चित्त वाले चतुराई से सोच सकते हैं। इति।

दारागञ्ज प्रयाग सञ्चालित संस्कृतसाहित्यपरिषत् सञ्चालित संगमनी पत्रस्य तृतीयवर्षतृतीयाङ्के २०२४ वैक्रमाब्दे प्रकाशिता

# रसगङ्गाधर-विषयिणी वार्ता

गतानां त्रिशतेर्वर्षाणामभ्यन्तरे विभिन्नविदुषामष्टौ दश वा लेखान् अवलोकयितुमवसरः समायातः, केचन पूर्णमेव ग्रन्थम् मन्यमानाः निरूपणीय-साहित्यविषयस्य आवश्यकस्य प्रागेव निरूपणाद् अवशिष्टा अलङ्कारा नाभिमताः पण्डितराजस्येत्यादिकमवर्णयन्। अन्येऽवशिष्टाः केचनालङ्काराः पण्डित-राजस्यावश्यमेव निरूपणीयाः आसन् परं नापारयन् कथमपीति अपूर्ण एवायं ग्रन्थराज इति न्यरूपयन्। अपरे तु विद्वेषिणोऽपि यशस्विनोऽप्पयदीक्षितस्य चित्रमीमांसामनुकुर्वाणः पण्डितराजो बुद्धिपूर्वकमेव समाप्तिं तत्याजेति अब्रुवन्। तत्रापि कश्चित् प्रबलप्रत्यूहख्यापनाय चतुर्थपादमप्यन्तिमपद्यस्य व्याजेन नापूरयदिति वक्तुं न संकोचमाश्रत्।

तत्र कारणं यत्किमपि भवतु अपूर्णमेव ग्रन्थमर्माणि मन्ये, पण्डितराजस्यो-पसंहारशब्दावलिं न कश्चिदद्यावधि उपास्थापयत्। न इति' शब्दमात्रेणास्यो-पसंहारः संभवति, उपक्रम इव उपसंहारोऽपि चेतश्चमत्कुर्वाणां प्रसृतां वाग्वल्लरीमपेक्षेत।

उत्तरालङ्कारप्रकरणस्यान्तिमपद्यस्य चतुर्थपादो न प्राप्यते इत्येव विश्व-सिमि, केनापि कारणेन पण्डितराज एव नापूरयच्चतुर्थपादम् अथवा तेन पूरितोऽपि प्रभ्रष्टः असुवाच्यतया लिपिकारेण न प्राप्त इति। अस्तु केनापि संनिवेशितः 'गुरुपदभाग्यासुदेतोयम्' चतुर्थपादो न पण्डितराजस्येति दृढं वच्मि, नैकचमत्कारिकाव्यकृतिनोऽस्य कविपुङ्गवस्य यादृशां स्फुटार्थानां वाचां विन्यासः हृदयङ्गमस्य यादृशस्यार्थस्य योजनायाः प्रकारस्ततो विदूरे इयं शब्दार्थयोजना।

किं कुर्वते दरिद्राः, कासारवती धरा मनोज्ञतरा।
कोपावनस्त्रिलोक्याम्—

इति चरणत्रितयेन साकं न स्पर्शमर्हति गुरुपदभाग्यासुदेतोयम् इति पदम्, एकस्यां पङ्क्तौ लेखनेऽपि संकोचमेति चेतः, स्फुटार्थानि असंकीर्णानि श्रुतिमात्रेण हृदयङ्गमानि कीदृशानि पदानि त्रिपाद्यां पण्डितराजस्य? का च दशा अस्य पादस्य? इति किमु वक्तव्यम्। पादत्रये प्रश्नार्थकः किं शब्दः प्रारम्भे स्फुटः, प्रश्नार्थकशब्दघटितेनैव प्रथमशब्देन उत्तरम्। तथाहि—किं कुर्वते इति प्रश्नः किङ्कुर्वते इत्युत्तरम्। एवं का सारवती इति प्रश्नः कासार-

वतीत्युत्तरम् । कः अपावन इति प्रश्नः कोपावन इति उत्तरम् । तादृशांशस्य लेशोऽपीदृशे चतुर्थपादे यदि नास्ति तदा कः समुत्सहते सह घटयितुम् । उत्तरालङ्कारस्य भेदान्तरं प्रकल्प्य कथमपि पदभङ्गेनोदाहरणकल्पना तु वाचो विग्लापनम् । प्रतिपादं प्रभेदान्तरं स्यात्तदा कथमपि चतुर्थपादस्य भेदान्तरोदाहरणता युज्येत । न च तथाऽस्ति, तादृशां त्रयाणां पादानां चतुर्थेन तादृशेनैव भाव्यमवश्यं पण्डितराजरचनायाम् । तादृशी च योजना कठिनतामप्यच्छति ।

प्रबलप्रत्यूहप्रभावोऽपि नासंभवः, कदाचन दुर्योजायामस्यां रचनायां रोगेण क्षीणोऽपि संसक्तो जगन्नाथस्तृतीयपादं योजयन्नेव रोगवेगेन बलवता बाधितोऽग्रिमं सम्पादयितुं न शशाक क्रमशो जगच्च जहाति स्म । यतः प्रथमपादद्वयापेक्षया तृतीयपादेऽपि ह्रासः सूक्ष्मेक्षिकया लक्ष्योक्रियते । दरिद्राः किङ्कुर्वते इत्युत्तरवाक्यं विधेयान्तरानपेक्षि परिपूर्णम् । एवं द्वितीयमपि उत्तरवाक्यं कासारवती धरा मनोज्ञतरेति विधेयांशमनोज्ञत्वपरपदघटिततया निराकाङ्क्षं पूर्णं परं त्रिलोक्यां कोपावन इत्युत्तरवाक्यं विधेयांशबोधकमपेक्षते, यद्यपि अपावन इति पदच्छेदावृत्तिभ्यां निराङ्क्षं क्रियेत तथापि पादद्वयमपेक्ष्य क्लिष्टम् । अस्तु एतद्विचारमात्रम् प्रस्तुतायां प्रबलप्रमाणाभावात् ।

एकेन अन्येन कविवरेण पूरितं पादमिमं न स्मरामि । मयाऽपि चिरादत्र किञ्चित् कृतमस्ति, बहिश्च गृहादन्वेष्टुमशक्नुवन् गृहे गमनं यावद्विस्मराम्येव । अधुना तु अधस्तनं सति प्रसङ्गे उपस्थापयामि ।

'कमलं कुर्वन्तु सरोवराः'

सरोवराः कं पदार्थम् पर्याप्तं कुर्वन्तु इति प्रश्नः । कमलं कुर्वन्तु इत्युत्तरम् । स्फुटार्थं किंपदघटितं पादत्रयमिव कमलपदमुत्तरे । तथापि पण्डितराजपाद इव अर्थस्य तादृशी अभिनवता नायाति ।

'कुत्राश्रिताः कोविदा अत्र' अत्र जगति कोविदाः कुत्र आश्रिता इति प्रश्नः, अत्र जगति कोविदाः कुत्रे पार्थिवे राजनि आश्रिता इत्युत्तरम् । नैषधपाठनप्रणाल्यां प्रसिद्धः प्रायो वाचो निर्वचने निष्णातायां नारायणीव्याख्यायां समाहृतोऽयं कुं पृथिवीं त्रायते इति श्लेषो न तथाऽप्रसिद्धिं भजते । 'काली मनसः प्रमोदवहा' का आली मनसः प्रमोदवहेति प्रश्नः काली भगवतीत्युत्तरम् प्रश्नवशाद्भगवत्याम् आलीत्वं व्यज्यमानं न मनसे सम्यक् रोचेतेत्यन्यत् । इत्यलम् अधुना ।

दारागञ्ज प्रयाग संस्कृत परिषत् से संचालित त्रैमासिक संस्कृत संगमनी पत्र के तृतीय वर्ष तृतीय अङ्क २०२४ वैक्रम वर्ष में प्रकाशित

# रसगङ्गाधरविषयिणी वार्ता की हिन्दी

बीते हुए करीव तीस वर्षों में भिन्न-भिन्न विद्वानों के प्रायः आठ दस लेख देखने का अवसर आया, कोई ग्रन्थ को पूर्ण ही मानते हुए अवश्य विचारणीय साहित्य विषयों का पहले ही निरूपण हो जाने से तथा वचे हुए अलङ्कार पण्डितराज को अभिमत न होने से इतना ही पूरा ग्रन्थ है, इत्यादि का वर्णन किये हैं, दूसरे अवशिष्ट कुछ अलङ्कार पण्डितराज को अभिमत हैं तथा उनका निरूपण करना था, किन्तु किसी प्रकार पूरा करने में समर्थ नहीं हो पाये, इसलिये यह ग्रन्थ अपूर्ण ही हैं ऐसा निरूपण करते हैं, और दूसरे कहे हैं कि यद्यपि अप्पय्य दीक्षित पण्डितराज के विद्वेषी थे तो भी बड़ा यशस्वी होने से अनुकरणीय थे, उनकी चित्र मीमांसा का अनुकरण करते हुए पण्डितराज समझकर ही समाप्ति को छोड़ दिये। उन्हीं में कोई ऐसा भी कहने में संकोच नहीं किये कि प्रबल विघ्न की प्रसिद्धि के लिये अन्तिम पद्य के चतुर्थपाद को व्याज से नहीं पूरा किये।

कारण जो कुछ हो किन्तु मैं इस ग्रन्थ मणि को अपूर्ण ही मानता हूँ, पीछे निरूपण के लिये कुछ लेख भी इनमें मिलते हैं, आज तक किसी ने पण्डितराज की उपसंहार शब्दावली को नहीं उपस्थित किया, केवल (इति) शब्द से इसका उपसंहार नहीं संभव है, उपक्रम के ऐसा उपसंहार भी चित्त को चमत्कृत करने वाली विस्तृत वाग्वल्लरी की अपेक्षा करें।

उत्तरालङ्कार प्रकरण के अन्तिम पद्य का चतुर्थपाद नहीं मिलता है यही विश्वास है, किसी कारण पण्डितराज ही नहीं पूरा किये हो, अथवा उनसे पूरा किया हुआ भी सुवाच्य न होने से नष्ट हो गया हो या प्रतिलिपि करने वाले न पाये हो। किसी से जोड़ा हुआ 'गुरुपदभाग्यासुदेतोयम्' यह चौथा पाद पण्डितराज का नहीं है ऐसा दृढ़ता से कहता हूँ, अनेक चमत्कारी काव्यों के निर्माण में कुशल इस कविपुङ्गव का जैसा स्फुट अर्थवाले वचनों का विकास और जैसे हृदयङ्गम अर्थ की योजना की शैली है, उससे बहुत दूर इसकी शब्दार्थ योजना है।

नीचे लिखे तीन चरणों को देखें—

(१) किं कुर्वते दरिद्राः, दरिद्र क्या करते हैं ? प्रश्न। दरिद्र सेवा करते हैं उत्तर।

(२) का सारवती धरा मनोज्ञतरा ? कौन सुन्दर पृथ्वी सारवाणी है ? प्रश्न। कासारवाली पृथ्वी सुन्दर होती है। उत्तर।

(३) को पावन स्त्रिलोक्याम् ? तीनों लोक में कौन अपवित्र है ? प्रश्न। कोप की रक्षा करने वाला। उत्तर। 'गुरुपदभाग्यासुदंतोयम्' यह पाद इन तीन चरणों के स्पर्श का भी योग्य नहीं है। एक पंक्ति में लिखने में भी चित्त संकुचित होता है, स्फुट अर्थवाले अलग सुनने से ही रोचक तीनों पाद में पण्डितराज के कैसे पद हैं ? इस पाद की क्या दशा है ? इस पर क्या कहा जाय ?।

तीनों पाद में आरम्भ में प्रश्न है, और उसी प्रश्न अर्थ वाले शब्द से युक्त प्रथम शब्द से उत्तर है, यह स्पष्ट है, किं कुर्वते प्रश्न किङ्कुर्वते उत्तर। का सारवती प्रश्न, का सारवती उत्तर। कः अपावनः प्रश्न और कोपावनः उत्तार है। वैसे अंश का ऐसे पाद में लेश भी नहीं है तब इसके साथ जोड़ने के लिये कौन साहस करेगा ? उत्तरालङ्कार के दूसरे भेद की कल्पना करके पदों को तोड़कर किसी प्रकार उदाहरण बनाना तो व्यर्थ वाणी का प्रसार है। हरएक पाद में दूसरे भेदों का उदाहरण होता तो चतुर्थ पाद में भी किसी प्रकार दुसरे भेद के उदाहरण की कल्पना होती। वैसा नहीं है। पण्डितराज की रचना में वैसे तीन पादों का चतुर्थपाद भी वैसा ही होना चाहिये। वैसी रचना कठिनता पाती है।

प्रवल विघ्न का प्रभाव भी असंभव नहीं है, शायद रोग से क्षीण भी जगन्नाथ कठिन योजना वाली इस रचना में लगे हुए तृतीय पाद को पूरा करते ही वलवान् रोग वेग से बाधित होकर आगे करने में समर्थ नहीं हुए क्रमशः जगत् को भी छोड़ दिये। क्योंकि सूक्ष्म दृष्टि देने पर पहले दो पादों की अपेक्षा तृतीय पाद में भी कुछ ह्रास मालूम पड़ेगा। पहला उत्तर वाक्य दूसरे विधेय की अपेक्षा नहीं करके भी परिपूर्ण है। दूसरे उत्तर वाक्य में मनोज्ञतराविधेय जोड़ने से पूर्ति की गई है, तीसरे उत्तर

वाक्य में विधेय की अपेक्षा है और वह नहीं दिया गया है। यद्यपि अपावन शब्द की यदच्छेद आवृत्ति से किसी प्रकार पूर्ति की जाती है तो भी दो पादों की अपेक्षा क्लिष्टता आई जाती है। जो हो वह कल्पना मात्र है, प्रस्तुत विषय में कोई प्रबल प्रमाण नहीं है!

किसी दूसरे कविवर से इसकी पाद पूर्ति की गई थी किन्तु बहुत दिन हुआ स्मरण नहीं होता। हमसे भी बहुत पहले इस पर कुछ किया गया है, इस समय घर से बाहर हूँ खोज नहीं सकता, घर जाने तक भूला ही हूँ। इस समय तो प्रसङ्ग आने पर नीचे लिखा हुआ कुछ नया ही उपस्थित करता हूँ।

(१) जैसे कि—कमलं कुर्वन्ति सरोवराः। सरोवर किस पदार्थ को पर्याप्त रूप में करते हैं यह प्रश्न हुआ। सरोवर कमल करते हैं, यह उत्तर हुआ। तीनों पादों से शब्द रचना का मेल है, किन्तु उनकी बराबरी में अर्थ की नूतनता प्रायः नहीं आती।

(२) कुत्राश्रिताः कोविदा अत्र। इस संसार में विद्वान् किस पर आश्रित हैं? यह प्रश्न है। इस संसार में विद्वान् राजाओं पर आश्रित हैं, कुत्र शब्द का पृथ्वी पालक अर्थ है, नैषध नारायणी टीका के अनुसार यह अप्रसिद्ध नहीं हो सकता।

(३) काली मनसः प्रमोदवहा। कौन आली मन को खुश करने वाली है, यह प्रश्न है? काली मन को खुश करने वाली है, यह उत्तर हुआ। यहां काली में सखीपना व्यञ्जना सखीभाव से उपासक के लिये विपरीत नहीं पड़ेगी। इस समय इतना बस।

●

## पटना संस्कृत सञ्जीवन पत्र २३ वर्ष तृतीयाषाढपूर्णिमाङ्के वि० २०१९ ई० १९६२ वत्सरे प्रकाशितो निबन्धः

# काव्यलक्षणं तत्समन्वयश्च

रसगङ्गाधरकाव्यलक्षणस्य किञ्चिद् व्याख्यानं प्रस्तौमि। नेदं प्रायो नूतनं विशेषगवेषणाविषयः, न्याय-भाषासम्पृक्तं कठिनञ्च, तथापि प्रसिद्धपाठ्य-

विषयो विशेषचर्चाविषयोऽपि। किञ्च विंशशताब्द्यां जाते तस्य द्वे टीके अवालोकयम्। तत्र लक्षणार्थस्य स्फुटतया प्रतिपादनाय प्रयासो वर्तते, परं महता सङ्कोचेन, अशुद्धिभिया च, तथापि अशुद्धिर्न स्थानं तत्याज। अतोऽस्य व्याख्यानं परमावश्यकं मन्ये। न्यायभाषासम्पृक्तस्य लक्षणस्य पदपदार्थजिज्ञासूनां व्याख्यानमिदं सारल्याय सम्पद्येत, अनुलोमविलोमरीत्या लक्षणस्य निर्वचनेन पदार्थः स्फुटतामेष्यतीति धियाऽयं प्रयासः।

रमणीयार्थप्रतिपादकः शब्दः काव्यम् इतिमूलम्। रमणीयो योऽर्थस्तस्य प्रतिपादकः शब्दः काव्यमित्यर्थः। कटाक्षादिचेष्टाविशेषेऽतिव्याप्तिवारणाय शब्दपदम्। यद्यपि प्रतिपादकशब्दस्य शाब्दबोधजनकत्वार्थकत्वे न कटाक्षादौ प्रसक्तिस्ततः शाब्दबोधानुदयात्, तथापि तादृशार्थकत्वे मानाभावाच्छब्दशब्दोपादानम्। शब्दशब्दोपादाने च तत्समभिव्याहारे शाब्दजनकार्थकत्वमपीति त्वन्यत्। उद्बोधकतया उपस्थितिद्वारा चेष्टादेः क्वचिच्छाब्दजनकत्वाच्च। प्रयोजनविरहेण विशेषरूपेण वाक्यत्वादिना न प्रवेशः। प्रतिपादकपदं ज्ञानजनकत्वार्थकत्वेन वाचकलक्षणव्यञ्जकसाधारणम्। रमणीयशब्दज्ञापके व्याकरणादावतिव्याप्तिवारणाय अर्थपदम्, तच्च चमत्कारजनकत्वोपलक्षितभावनाविशेषविषयत्व परं न तु शब्देतरपरम्, शब्दस्याप्यर्थत्वेनेष्टत्वात्। यत्र शब्दरूपो धर्मं उपमानिर्वाहकतया साधारणस्तत्रोपमया चमत्काराधाने शब्दस्यापि चमत्कारित्वम्। उपमाया अर्थत्वे शब्दस्याप्यर्थत्वात्, उपमाया इव तद्घटकशब्दस्यापि चमत्कारजनकभावनाविषयत्वाच्च। अधिकञ्चैतद्विषये 'शब्दार्थौशब्दो वा काव्यम्' इति प्रकाशित निबन्धे अवलोकनीयम्। रमणीयपदन्तु चमत्कृतिशून्यार्थकवाक्यवारणायेति स्फुटमेव।

'रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता' इति मूलम्। लोकोत्तरसुखस्य जनकं यज्ज्ञानं तद्विषयत्वमर्थगतं रमणीयत्वमित्यर्थः। ननु लोकोत्तरत्वं यदि वैलक्षण्यमात्रं तदा घटमानयेत्यादि वाक्यादपि कुतश्चिद् विलक्षणाह्लादजननादतिव्याप्तिः, यदि लौकिकसुखभिन्नत्वं तदा ब्रह्मस्वरूपाह्लादप्रयोजके तत्त्वज्ञानादौ अतिप्रसक्तम्, अत आह मूले 'लोकोत्तरत्वञ्च ह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः।

काव्यसामग्रीतरसामग्रीजन्यसुखभिन्नत्वं लोकोत्तरत्वं फलितम्। तस्य चमत्कारो नामान्तरम्। चमत्कारं प्रति भावनाविशेषः कारणमिति मूल एवोच्यते 'कारणञ्च तदवच्छिन्ने भावनाविशेषः पुनः पुनरनुसंधानात्मा। पुत्रस्ते जातः, धनं ते दास्यामि इति वाक्यार्थधीजन्यस्याह्लादस्य न लोकोत्तरत्वम्,

अतो न तस्मिन् वाक्ये काव्यत्वप्रसक्तिः।' पुनः निष्कृष्टलक्षणं मूले आह—'इत्थञ्च चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्' काव्यत्वमिति।

पूर्ववर्णितस्य विलक्षणसुखरूपस्य चमत्कारस्य जनिका या काव्यार्थस्य पुनः पुनरनुसन्धानरूपा भावना तद्विषयोऽर्थः काव्यार्थः तत्प्रतिपादकशब्दत्वं काव्यत्वमिति सरलार्थः। भावनायां जनकेति विशेषणं तेन भावनानिष्ठा जनकता, जन्यश्चमत्कारस्तेन चमत्कारे जन्यता चमत्कारत्वावच्छिन्ना, तथा च चमत्कारत्वावच्छिन्नजन्यतानिरूपिता या जनकता तद्वती भावनेति भावनान्तस्यार्थः। ननु काव्यार्थस्य घटानयनस्य च समूहालम्बनात्मकं ज्ञानं तेन काव्यार्थविषयकत्ववशाच्चमत्कारो जन्यते, तथा च चमत्कारनिष्ठजन्यतानिरूपितजनकतावज्ज्ञानं जातम्, तद्विषयो घटानयनमपि इति तत्प्रतिपादके घटमानयेति वाक्येऽतिप्रसक्तमतो ज्ञानपदमपहाय भावनापदोपादानम्। तेन कदाचन घटानयनस्य चमत्कारजनकज्ञानविषयत्वेऽपि तद्धाराप्रवाहे विषयत्वाभावान्नातिव्याप्तिः, भावनापदेन ज्ञानप्रवाहस्य विवक्षितत्वात्। ननु काव्यार्थ विषयकधारावाहिकज्ञानरूपभावनायामपि कदाचन विषयान्तरस्य विषयत्वसंभवे पूर्वोक्तरीत्याऽतिव्याप्तिस्तदवस्थैवेति लक्षणान्तरं मूले उक्तम्—'यत् प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्।'

येन शब्देन प्रतिपादितस्य अर्थस्य सर्वाऽपि भावना चमत्कारजनिका स शब्दः काव्यमिति सरलार्थः। तेन न पूर्वोक्तातिव्याप्तिः। तथा हि साधारणतः पुत्रस्ते जात इत्यादिवाक्यार्थस्य त्रिविधा भावना—एका काव्यार्थेन साकं काव्यार्थविषयिणी। द्वितीया पुत्रस्ते जात इत्यादिवाक्यार्थमात्रविषयिणी। तृतीया काव्यार्थभिन्नविषयान्तरविषयिणी सती स्वविषयिणी। तत्र प्रथमा काव्यार्थविषयकत्वेन चमत्कारं जनयति, परं द्वितीया तृतीया च न जनयतीति पुत्रस्ते जात इत्यादिवाक्यस्य न काव्यत्वम्। उदितं मण्डलमिन्दोरित्यादि काव्यशब्दप्रतिपाद्यस्यार्थस्य सर्वाऽपि भावना तदर्थमात्रविषयिणी तादृशार्थविषयिणी सती उदासीनवाक्यार्थविषयिणी च चमत्कारं जनयतीति तादृशशब्दे काव्यत्वसमन्वयः। येन शब्देन प्रतिपादितार्थस्य सर्वाऽपि भावना चमत्कारजनिका तासु सर्वासु चमत्कारजनकता। यथा उदिते मण्डलमिन्दोरित्यादिशब्दप्रतिपादितार्थविषयकभावनायां सर्वस्यां जनकता, तथा च तादृशशब्दप्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतासमनियतं सच्चमत्कारजनकतावच्छेदकं भवतीति उदितमित्यादि तादृशशब्दे काव्यत्वसमन्वयः।

पुत्रस्ते जात इत्यादि शब्दप्रतिपादितार्थविषयिणी त्रिविधा भावनाऽधुना प्रदर्शिता, तत्र प्रथमायां चमत्कारजनकता वर्तते, परं द्वितीयतृतीययोर्नास्ति। तादृशशब्दप्रतिपादितार्थविषयकभावनात्वन्तु तिसृष्वपि भावनासु वर्तते इति तादृशभावनात्वं चमत्कारजनकताऽधिकवृत्ति सन्नावच्छेदकमिति न पुत्रस्ते जात इत्यादि शब्दे काव्यत्वं प्रसक्तम्, इतिमूलोक्तलक्षणसमन्वयः सम्यगूह्यः। यत्पदेन काव्यत्वेनाभिमतः शब्दो ग्राह्यः, तत्त्वम् इत्यस्य काव्यत्वमिति शेषः। उच्चारणभेदेन शब्दभेदपक्षे प्रत्युच्चारणं काव्यस्यापि भेदपक्षे यदानुपूर्वीमच्छब्दप्रतिपादितेत्यादि निवेश्यम्। शब्दभेदेऽपि शब्दवृत्तिधर्मविशेषरूपाया आनुपूर्व्याः सर्वत्र तादृशशब्देषु विद्यमानतया संग्रहः। तदा यत्पदेनानुपूर्व्या ग्रहणे तत्त्वमित्यस्य तद्वत्त्वं तदवच्छिन्नत्वं तत्पर्याप्त्यधिकरणत्वमित्यादि अर्थो वक्तव्यः। यद्यप्यानुपूर्वीपर्यन्तस्यानिवेशे अव्याप्त्यादिदोषोन प्रसरति तथापि एकस्यैव काव्यस्योच्चारणभेदेन नैककाव्यत्वं प्रसज्येत्, अतस्तन्निवेश आदृतः। विशेषप्रतिबन्धकवशाद् भावनातश्चमत्काराजननसंभवे स्वरूपयोग्यजनकतामादाय निर्वाहो विधेयः, अथवा तत्र प्रतिबन्धवशाद् भावनैव न सम्पद्यत इति कल्पनीयम्। अव्युत्पन्नस्य असहृदयस्य च काव्यार्थभावनैव न समुदेतीति न जन्यजनकभावे व्यभिचारः।

इदमत्रावधेयम्—अर्थविषयकभावनात्वमवच्छेदकमुक्तं युक्तञ्च तत्, अर्थविषयकभावनायां चमत्कारजनकतायाः सत्त्वादर्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं स्यात्तथापि भावनात्वावच्छेदकस्य लक्षणे प्रवेशे न तात्पर्यम्, सर्वार्थभावनायां भावनात्वस्य सत्त्वेन साधारण्येनाऽव्यावर्तकत्वात्। अर्थविशेष एव काव्यतदितरार्थभावनाविशेषकः। अत एवाग्रिमे लक्षणे मूले भावनात्वं विहायार्थस्यैवावच्छेदकत्वेन प्रवेशः। अर्थविषयकभावनायां चमत्कारजनकता वर्तते तदा तादृशभावनानिष्ठेन धर्मेणावच्छेदकेन भाव्यम्। तादृशभावनायाञ्च भावनात्वम् अर्थविषयकत्वञ्च धर्मद्वयम्, उभयोरवच्छेदकत्वेऽपि भावनात्वस्य लक्षणघटकत्वे प्रयोजनाभावादर्थविषयकत्वस्यावच्छेदकत्वेन प्रवेशोऽवशिष्यते। अर्थविषयकत्वमर्थविषयित्वञ्च नार्थान्तरम्, अर्थविषयित्वं स्वरूपेण विषयिण्यां भावनायां विद्यते। अर्थश्च विषयो विषयितासम्बन्धेन विषयिभावनायाम्। अतस्तादृशविषयित्वस्य अर्थस्य वा अवच्छेदकत्वेन प्रवेशो द्विधालक्षणविधानस्य प्रक्रिया तथापि अग्रिमलक्षणे जनकतावच्छेदकार्थेत्यादिरीत्या प्रतिपादनादर्थमेवावच्छेदकत्वेन व्यवहरामि। अर्थस्य विषयितासम्बन्धेन भावनावृत्तित्वादर्थनिष्ठावच्छेदकता विषयित्वसम्बन्धावच्छिन्ना बोध्या। चमत्कारनिष्ठाजन्यता

चमत्कारत्वावच्छिन्ना, भावनानिष्ठजनकताया अवच्छेदेकोऽर्थः। तथा च चमत्कारत्वावच्छिन्नजन्यतानिरूपितभावनानिष्ठजनकताया अवच्छेदकस्यार्थस्य प्रतिपादकशब्दत्वं काव्यत्वमिति फलितम्।

इत्थमेव यत्तत्पदयोः परित्यागेन लक्षणकरणे प्रक्रिया। इदं प्रकारविधया प्रवेशेन लक्षणविधानमिति व्यवह्रियते। प्रकारविधया प्रवेशे गौरवं संसर्गविधया प्रवेशे च लाघवमित्यादि संसर्गताप्रकारतावादिमतविवेचनमन्त्वतिक्लिष्टं परित्यज्यते। परं संसर्गो यदि पारम्परिको न भवेत्तदा संसर्गविधया प्रवेशेन लक्षणकरणं लघूभूतमित्येव भूयान् व्यवहारः। संसर्गस्य पारम्परिकत्वे तु परम्परायाः संसर्गत्वे मानाभावादिति वदन्तः प्रकारतया निवेशमधिकं रोचयन्ते नैयायिकसरणिप्रवीणाः।

अत्र यत्प्रतिपादितार्थेत्यादि तत्त्वमन्तेन प्रकारविधया प्रवेशेन लक्षणकरणं तस्य निष्कर्षस्तु चमत्कारत्वावच्छिन्नेत्यादिकाव्यत्वमन्तेन मया प्रदर्शितः। प्रथमं विशेषणं तदनन्तरं विशेष्यं ततस्तस्य विशेष्यं पुनस्तस्य विशेष्यमित्यादिरीत्या निवेशः प्रकारतया निवेश उच्यते। अग्रिमलक्षणन्तु संसर्गविधया प्रवेशेन कृतमस्ति। पूर्वलक्षणे प्रतिपादकशब्दत्वमितिकथनेन प्रतिपादकताधर्मः काव्यत्वेनाभिमते शब्दे वर्तते इति तूक्तप्रायमेव। तथा च चमत्कारत्वावच्छिन्नजन्यतानिरूपितभावनानिष्ठजनकताया अवच्छेदकस्य अर्थस्य प्रतिपादकशब्दत्वमिति पूर्वोक्तलक्षणेऽव्यावर्तकत्वाद् भावनानिष्ठपदं निःसार्यं स्वपदेन चमत्कारत्वं धृत्वा तदनन्तरवर्ति प्रतिपादकत्वान्तं संसर्गविधाय चमत्कारत्ववत्त्वं काव्यत्वमिति लक्षणं मूले स्वविशिष्ट जनकतावच्छेदकार्थप्रतिपादकता संसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम् चमत्कारत्वं यत्र वर्तते, तत्काव्यमिति तस्य सरलार्थः। सम्बन्धश्च स्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकार्थप्रतिपादकत्वम्। स्वं चमत्कारत्वं तदवच्छिन्ना या चमत्कारनिष्ठा जन्यता तन्निरूपिता भावनानिष्ठा जनकता तदवच्छेदको योऽर्थस्तस्य प्रतिपादकत्वम् लक्ष्ये काव्यत्वेनाभिमते शब्दे। प्रथमं वर्णितं लक्षणमपेक्ष्यात्र कश्चिन्नूतनोऽर्थो नास्ति केवलः प्रकारभेदो लक्षणनिरूपणस्येति ध्येयम्। मूलस्थस्वविशिष्टजनकतेत्यस्य स्वावच्छिन्नजन्यतानिरूपितजनकतेति तात्पर्यार्थो बोध्यः। समन्वयोऽस्य पूर्वलक्षणप्रतिपादितार्थानां धारण एव संभवति। संसर्गे भावनानिष्ठेति पदं नोपात्तं परं समन्वयो भावनानिष्ठजनकतामादायैव। शब्दशब्दस्यापि निस्सारणेऽपि प्रतिपादकता शब्द एव यास्यति। यद्येतादृशपारम्परिकस्य संसर्गत्वे मानं स्यात्तदा भवेदिदं लक्षणमुत्कृष्टम्, न चास्ति तस्मात्प्रा-

क्तमेव लक्षणं सम्यक्। काव्यं चमत्कारत्ववत् चमत्कारो वेति प्रामाणिको व्यवहार उपलभ्येत भवेदस्य पारम्परिकस्य संसर्गत्वं प्रामाणिकम्। काव्यं चमत्कारि चमत्कारजनकं वेति व्यवहारस्तु काव्ये चमत्कारजनकतावगाही जायते। काव्ये तादृशजनकता च काव्यप्रतिपादितार्थभावनाद्वारेति स्वावच्छेद-कार्थप्रतिपादकत्वसम्बन्धेन चमत्कारजनकतावत्त्वं काव्यत्वमिति लक्षणन्तु पारम्परिकस्य प्रामाणिकसंसर्गतया सुवचम्।

एतावता यावता संक्षेपेण सारल्येन च संभवति मूलोक्तलक्षणव्याख्यान-मेव लिखितम्। अतः परमस्यैव स्फुटतरपरिष्करणं साहित्याध्येतॄणां क्लिष्ट-मापतिष्यति परं मम गुरवोऽध्यापयन्तिस्म, अतस्तस्य अध्ययनाध्यापनयोः प्रचारस्सर्वथा परित्यागो नोचितः, तत्रापि गुरुमुखाच्छ्रुतमक्षरशो न स्मरामि, काचित् तादृशोशैली एव स्फुरति, तदनुसारं संक्षेपेण सारल्येन च वर्णयामि। लेखविस्तरभयाच्च विशेषेण विवरीतुं न प्रभवामि।

(१) तत्र प्रथमलक्षणरीत्या वर्णयामि। भावनात्वस्यावच्छेदकत्वेन न प्रवेश इति प्रागेवोक्तम्। अर्थनिरूपितविषयित्वस्यावच्छेदकत्वेन प्रवेशं कृत्वा यत्तत्पदघटितं लक्षणम्, यत्प्रतिपादितार्थनिरूपितविषयिता चमत्कारत्वावच्छि-न्नजन्यतानिरूपितजनकताया अवच्छेदिका तत्त्वम्। नार्थः कश्चिन्नूतनोऽत्र, जनकता च सर्वत्र भावनानिष्ठा अवसेया, संक्षेपेणाग्रे चमत्कारजनकतामात्रोक्तौ अपि चमत्कारत्वावच्छिन्नजन्यतानिरूपितजनकता ग्राह्या।

(२) प्रतिपादके प्रतिपादकता, प्रतिपाद्ये प्रतिपाद्यता, प्रतिपादकता च आनुपूर्व्यवच्छिन्ना, तन्निवेशफलं प्रागुक्तमनेककाव्यत्ववारणम्। यदानुपूर्व्यव-च्छिन्नप्रतिपादकतानिरूपितप्रतिपाद्यतावदर्थनिरूपितविषयित्वं चमत्कारजनक-तावच्छेदकं तद्वत्त्वम् इति लक्षणम्।

(३) आनुपूर्व्यवच्छिन्नेत्यस्य शब्दान्तरमेव आनुपूर्वीनिष्ठावच्छेदकतानि-रूपितावच्छेद्यतावदिति प्रतिपादकताविशेषणम्। विषयित्वं जनकतावच्छेदक-मित्यस्य विषयित्वनिष्ठावच्छेदकतानिरूपितेतिशब्दान्तरमेव। विषयित्वं स्वरू-पेणावच्छेदकमिति प्रागेवोक्तम्। विषयित्वेऽर्थो निरूपितत्वसम्बन्धेन विशेषणम्। एवमर्थे प्रतिपाद्यता स्वरूपेण विशेषणम्, तत्र प्रतिपादकता निरूपितत्वेन, तत्रावच्छेदकताऽपि निरूपितत्वेन, अवच्छेदकतायाम् आनुपूर्वी निष्ठत्वेन विशे-षणम्, आनुपूर्वी च यद्रूपपदेन निवेश्यम्—यद्रूपनिष्ठनिष्ठत्वसम्बन्धावच्छि-न्नावच्छेदकतानिरूपिता या निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिष्ठाव-च्छेदकता तन्निरूपिता या निरूपितत्वसम्बन्धावच्छिन्ना प्रतिपादकतानिष्ठावच्छे-

दकता तन्निरूपिता या स्वरूपसम्बन्धावच्छिन्ना प्रतिपाद्यतानिष्ठावच्छेदकता तन्निरूपिता या निरूपितत्वसम्बन्धावच्छिन्नार्थनिष्ठावच्छेदकता तन्निरूपिता या स्वरूपसम्बन्धावच्छिन्ना विषयित्वनिष्ठावच्छेदकता तन्निरूपिता चमत्कारजनकता तद्रूपवत्त्वम् काव्यत्वम्। निवेशफलप्रदर्शनन्तु विस्तरभिया त्यज्यते।

(४ विषयताघटितं लक्षणम्। यत्र यत्र विषयितायाः प्रवेशस्तत्रतत्र विषयतायाः प्रवेशेनापि लक्षणं संभवति। न च वस्तुतोऽर्थभेदः। एतावानेव विशेषो यद्विषयितास्वरूपेण भावनायां वर्तते तेन विषयितानिष्ठावच्छेदकता स्वरूपसम्बन्धावच्छिन्ना भवति, विषयता तु भावनायां निरूपकत्वसम्बन्धेन वर्तते। तेन विषयतानिष्ठावच्छेदकता निरूपकत्वसम्बन्धावच्छिन्ना जायते, अतोऽत्र लक्षणे प्रकारभेदमात्रम्।

व्युत्पन्ना बहूनि लक्षणानि कर्तुं प्रभवन्ति, दिक्प्रदर्शनन्तु अत्र कर्त्तव्यम्। अत्रापि स्वरूपसम्बन्धरूपावच्छेदकताकल्पे निवेशद्वयम्। अनतिरिक्तवृत्त्यवच्छेदकताकल्पे द्वित्राणि यत्तत्पदघटितानि च पञ्चषाणि लक्षणानि प्रदर्शयितुमीहे, तदप्यधुना लेखवृद्धिभिया विरमामीति।

❁

**पटना संस्कृतसञ्जीवनपत्र २३ वर्ष श्रावणपूर्णिमा चतुर्थाङ्के २०१९ वै० १९६२ ई० वत्सरे प्रकाशितो निबन्धः**

# काव्यस्य कानिचिल्लक्षणानि

इतः प्राक्तने संस्कृतसञ्जीवनस्याङ्के 'काव्यस्य लक्षणं तत्समन्वयश्च' इति मल्लेखः प्रकाशितः तस्य शेषोऽयम्। व्युत्पित्सवस्तमवबुध्यैवेममवगन्तुं प्रभविष्यन्ति।

(५) स्वरूपसम्बन्धरूपावच्छेदकताकल्पे काव्यैकदेशार्थविषयितायाः अपि चमत्कारजनकतावच्छेदकत्वात्काव्यैकदेशवृत्तिरूपमादाय काव्यैकदेशेऽतिव्याप्तिवारणाय तत्प्रतिपादितार्थविषयिता सामान्यं चमत्कारजनकतावच्छेदकं तत्त्वम् लक्षणम्, यत्प्रतिपादितेत्यादेः पूर्ववदेव अत्र अग्रे च परिष्कारो बोध्यः। काव्यैकदेशार्थविषयितायाः काव्यार्थभावनातः पृथग्भावनायामपि सत्त्वात् तत्र तादृशभावनाया अभावान्न तादृशविषयितासामान्यं तादृशजनकतावच्छेदकमिति न काव्यैकदेशेऽतिव्याप्तिः।

(६) एतादृश एवार्थे तादृशफलायैव सामान्यपदप्रक्षेपफलितस्य व्यापकत्वस्य निवेशे यत्प्रतिपादितार्थविषयितात्वव्यापकं चमत्कारजनकतावच्छेदकत्वं तत्त्वमिति लक्षणम् ।

(७) पूर्वप्रसक्तातिप्रसङ्गवारणायैव अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वपक्षे यत्प्रतिपादितार्थविषयित्वं चमत्कारजनकतानतिरिक्तवृत्ति तत्त्वं लक्षणम् । काव्यैकदेशार्थविषयिता तु चमत्कारजनकत्वाभाववत्यां काव्यार्थविषयिण्यामपि भावनायां वर्त्तत इति काव्यैकदेशे नातिप्रसङ्गः ।

(८) प्राचां मते यत्तदोरननुगमादिति वदन्तः परिष्कारप्रवीणाः यत्तत्पदघटितं लक्षणमननुगतं मन्यन्ते, तत्र प्रथमलक्षणे यत्प्रतिपादितेत्यारभ्य जनकतावच्छेदकमुपगच्छामः । अधुना तु जनकतावच्छेदकमारभ्य यत्पदार्थोऽन्ते निवेश्यते, विशेषणविशेष्यभावे व्यत्यास इति भावः । एवमग्रेऽपि बोध्यम् । अर्थविषयित्वमित्यस्य अर्थनिरूपितविषयित्वमित्यनर्थान्तरम् । विशेषणविशेष्यभावव्यत्यासे तु विषयितानिरूपकोऽर्थं इति रीत्या प्रोच्यते । तथा च प्रथमलक्षणरीत्या लक्षणम् – चमत्कारजनकतावच्छेदकविषयितानिरूपकार्थप्रतिपादकत्वं काव्यत्वमिति ।

(९) प्रागुक्तद्वितीयरीत्या चमत्कारजनकतावच्छेदकविषयितानिरूपकार्थनिष्ठप्रतिपाद्यतानिरूपितप्रतिपादकतावच्छेदकानुपूर्वीमत्त्वम् ।

(१०) तृतीयरीत्या चमत्कारजनकतानिरूपितस्वरूपसम्बन्धावच्छिन्नविषयित्व निष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नार्थनिष्ठावच्छेदकतानिरूपितस्वरूपसम्बन्धावच्छिन्नप्रतिपाद्यतानिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रतिपादकतानिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिष्ठावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नत्वं काव्यत्वम् । अत्र पर्याप्त्यादिनिवेशेन लक्षणान्तरप्रकारोऽपि उह्यताम्, क्लिष्टताभयात्तु त्यज्यते ।

(११) षष्ठरीत्या चमत्कारजनकतावच्छेदकत्वव्याप्यविषयितात्वावच्छिन्न निरूपकतानिरूपितनिरूप्यतावदर्थप्रतिपादकत्वम् काव्यत्वम् । अस्यैव व्यापकत्वलक्षणान्तर्भावेन निर्वचने चमत्कारजनकतावच्छेदकत्वनिष्ठाभावीयप्रतियोगितानिरूपितपारम्परिकावच्छेदकतावद्धर्मवत्त्वं लक्षणम् । अभावश्च यद्रूपावच्छिन्नप्रतिपादकतानिरूपित प्रतिपाद्यतावदर्थनिरूपितविषयित्वनिष्ठाभावीयप्रतियोगित्वं नास्तीत्याकारकः । परम्परावच्छेदकत्वस्य बहुतरा अवच्छेदकता अन्तर्भाव्य निर्वचनं क्रियत इति त्यज्यते ।

(१२) सप्तमरीत्या चमत्कारजनकत्वाभाववदवृत्तिविषयितानिरूपकार्थ-प्रतिपादकशब्दत्वमिति लक्षणम् ।

(१३) मूलोक्तस्वविशिष्टेत्यादिलक्षणवत्संसर्गतया प्रवेशं कृत्वा लक्षणान्तरं सम्भवति, सर्वेषां तथा प्रदर्शने पुनर्द्वादशलक्षणनिर्वचनापत्त्या महान् विस्तरः स्यादिति प्राक्तनस्य द्वादशलक्षणस्यैव तथा रीतिं प्रदर्श्योपसंहरामि । द्वादशे लक्षणे स्वपदेन चमत्कारत्वं धृत्वा अन्यान् प्रतिपादकान्तान् संसर्गतया प्रवेश्य चमत्कारत्ववत्त्वं लक्षणम् । चमत्कारत्ववत्ता च स्वावच्छिन्नजन्यतानिरूपितजनकत्वाभाववदवृत्तिविषयितानिरूपकार्थप्रतिपादकतासम्बन्धेनेति दिक् ।

पटना संस्कृत सञ्जीवन संस्कृत पत्रिका के २३ वें वर्ष विक्रम संवत् आषाढ़ पूर्णिमा २०१९ तीसरे अङ्क में संस्कृत में प्रकाशित

# काव्य का लक्षण और व्याख्यान

रस गङ्गाधर के काव्य लक्षण का कुछ व्याख्यान प्रस्तुत करता है, इसमें प्रायः कोई विशेष नूतन नहीं है तथा शोध भी नहीं कहा जा सकता, नव्यन्याय की भाषा से मिश्रित होने के कारण कठिन मालूम पड़ता है, तथा प्रसिद्ध पाठ्य का विषय होने से चर्चा में आने से उपेक्षणीय भी नहीं है। और यहां इस विंशवी शताब्दी की दो टीकाओं को देखा, उसमें स्फुट प्रतिपादन तथा लक्षण समन्वय का प्रयास है, तो भी अशुद्धि के भय से बड़ा संकोच किया गया है। तौभी अशुद्धि स्थान को नहीं छोड़ी है इस लिये इसका कुछ विवरण आवश्यक मानता हूं। न्याय भाषा में विहित लक्षण के पद-पदार्थों को जो समझना चाहेगे उनके लिये यह व्याख्यान कुछ सरल पड़ेगा, और उलट पलट कर लक्षण के वर्णन से पदार्थ कुछ स्फुट होंगे, इस बुद्धि से यह प्रयास है।

रमणीय अर्थ का प्रति पादक जो शब्द वह काव्य है यह रस गङ्गाधर मूल का पहला साधारण लक्षण है, रमणीय अर्थ का ज्ञान कराने वाली कटाक्ष आदि चेष्टाओं में अतिव्याप्ति के वारण के लिये शब्द यह विशेष्य दिया गया है। यद्यपि प्रतिपादक

की प्रतिपत्ति को शाब्द बोध रूप मान लें तो चेष्टा में अतिव्याप्ति नहीं है, चेष्टादि शाब्दबोध जनक नहीं हैं। तो भी शब्द पद न रहने पर प्रति पत्ति को शाब्दबोध रूप मानने में प्रमाण नहीं अत: चेष्टा की व्यावृत्ति फल है, शब्द पद देने पर प्रतिपत्ति को शाब्दबोध रूप से प्रवेश में फल नहीं है, शब्द पद न रहने पर शाब्द बोध रूप से प्रवेश में गौरव होगा। चेष्टा भी जहां उद्बोधक होकर उपस्थिति द्वारा शाब्दबोध का जनक होय वहां अतिव्याप्ति रहेगी। वाक्यत्व आदि विशेष रूप से प्रवेश का फल न होने से सामान्य रूप से प्रवेश है। प्रतिपादक पद का ज्ञान जनक अर्थ है वाचक लक्षक व्यञ्जक साधारण है। रमणीय शब्द का ज्ञापक व्याकरण आदि में अतिव्याप्ति वारण के लिये अर्थ पद है। प्राय: चमत्कार को पैदा करने वाली जो भावना उसका विषय अर्थपद से लिया जाता है, शब्द से भिन्न अर्थ पद का अर्थ नहीं है। शब्द को भी अर्थ पद से लेना है, जहां शब्द ही उपमा का निर्वाहक साधारण धर्म है, वहां उपमा से चमत्कार करने में शब्द भी चमत्कारी है। उपमा को अर्थ पद से लेने पर शब्द भी लिया जायेगा। उपमा के ऐसा उपमा का घटक शब्द भी चमत्कार को पैदा करने वाली जो भावना उसका विषय है। इससे कुछ अधिक विचार प्रकाशित मेरे 'शब्दार्थ या शब्द काव्य है' निबन्ध से देखने लायक मिलेगा। चमत्कार से शून्य अर्थ का वारण के लिये रमणीय पद है यह तो स्फुट ही है। लोकोत्तर चमत्कार का कारण जो ज्ञान उसका विषय होना रमणीयता है ऐसा मूल है। लोकोत्तर पद का अर्थ यदि विलक्षण मात्र होगा तो कभी घड़ालाओं इत्यादि साधारण वाक्य से भी विलक्षण आह्लाद पैदा होने से अतिव्याप्ति होगी, यदि लौकिक सुख से भिन्न लेगे तो ब्रह्मानन्द सुख का अभिव्यञ्जक तत्त्वज्ञान में अतिव्याप्ति होगी, काव्य भावनाओं से जो सुख विशेष होता है उसमें एक जाति है जिसका नाम चमत्कारत्व है, वह सहृदयों के अनुभव से सिद्ध है। काव्य सामग्री से भिन्न जो सामग्री उससे पैदा होने वाले सुख से भिन्न सुख चमत्कार है यह फलित हुआ। चमत्कार का भावना विशेष कारण है यह मूल में लिखा है। भावना बार-बार अनुसन्धान रूप है। तुमको पुत्र हुआ, तुमको धन दूंगा इन वाक्यार्थो की भावना से जो सुख है वह लौकिक है लोकोत्तर नहीं है इसलिये इन वाक्यों में अतिव्याप्ति नहीं होगी। इस प्रकार चमत्कारों को पैदा करने वाली जो भावना

उसका विषय जो अर्थ उसका प्रतिपादक शब्द काव्य है यह निष्कृष्ट लक्षण हुआ। चमत्कार का जनक भावना कहने से चमत्कार जन्य हुआ उसमें जन्यता, जन्यता का अवच्छेदक चमत्कारत्व, चमत्कारत्वावच्छिन्ना जन्यता हुई, जनक भावना में जनकता रही, जन्यता जनकता नित्य साकाङ्क्ष हैं इसलिये उनके बीच में निरूपित लगेगा। तब चमत्कारत्वावच्छिन्न जो चमत्कार में जन्यता उससे निरूपित जो भावना में जनकता उस जनकता वाली जो भावना उसका विषय जो अर्थ उसका प्रतिपादक जो शब्द वह काव्य है ऐसा लक्षण हुआ। जहां काव्यार्थकेसमूहालम्बन ज्ञान में ही घडा लाओ इत्यादि कोई साधारण वाक्यार्थ विषय बन गया, वहां काव्यार्थ ज्ञान होने से, चमत्कार होगा, चमत्कार का जनक जो ज्ञान उसका विषय घड़ा लाओ उदासीन वाक्यार्थ भी हुआ उसका प्रतिपादक शब्द घड़ा लाओ यह उदासीन वाक्य हो गया, उसमें अतिव्याप्ति के वारण के लिये ज्ञान पद को छोड़कर भावना पद दिया गया, धारावाही अनेक ज्ञान को भावना कहते हैं, सभी ज्ञानों में उदासीन वाक्यार्थ को विषय बनना संभव नहीं इसलिये उदासीन वाक्यार्थ भावना का विषय नहीं हुआ इस अभिप्राय से अतिव्याप्ति का वारण हुआ, कहीं काव्यार्थ की भावना में भी उदासीन वाक्यार्थ विषय हो जाय, अथवा एक ज्ञान का विषय भी उस ज्ञान से मिलित भावना का विषय हो सकता है अतः उदासीन वाक्य में अतिव्याप्ति रह जायेगी इसी लिये मूल में दूसरा लक्षण किया गया। भावना में भावनात्व है चमत्कार की जनकता भी है, इस लिये चमत्कार जनकता का अवच्छेदक भावनात्व हुआ। जिस शब्द से प्रतिपादित अर्थ रूप विषय वाली भावना में रहने वाला भावनात्व चमत्कार जनकता का अवच्छेदक हो वह शब्द काव्य है ऐसा उसका अर्थ है। जिसका ज्ञान वह ज्ञान का विषय कहा जाता है, काव्य शब्द प्रतिपादित अर्थ की भावना है, प्रतिपादित अर्थ विषय हुआ उस विषय वाली भावना अर्थ विषयक भावना कही गई है। यहाँ चमत्कार जनकता का अवच्छेदक भावनात्व कहा गया, जनकता अवच्छेदक जनकता का समनियत—अधिक या कम में नहीं रहने वाला होगा, जिस अर्थ की सभी भावनाओं में चमत्कार जनकता रहेगी तभी तद्विषयक भावनात्व अवच्छेदक होगा। उदासीन वाक्यार्थ विषयक सभी भावनाओं में चमत्कार जनकता

नहीं है इस लिये उदासीन वाक्यार्थ विषयक भावनात्व चमत्कार जनकता का अवच्छे- नहीं होगा। इस प्रकार घड़ा लाओ इत्यादि उदासीन वाक्य में अतिव्याप्ति नहीं होगी। उदित भया विधुमण्डल इत्यादि काव्य शब्द से प्रतिपादित अर्थ की सभी भावनाओं में चमत्कार जनकता है। इस प्रकार उस काव्यार्थ विषयक भावनात्व चमत्कार जनकता का अवच्छेदक हुआ, इस लिये ऐसे काव्यों में उक्षण समन्वय हुआ ! और स्पष्ट देखिये तुमको पुत्र हुआ इत्यादि उदासीन वाक्यार्थ की भावना साधारण रूप से तीन प्रकार का समझें। (१) एक काव्यार्थ के साथ काव्यार्थ विषय वाली, इसमें चमत्कार जनकता है। (२) तुमको पुत्र हुआ इत्यादि केवल उदासीन वाक्यार्थ की भावना, इसमें चमत्कार जनकता नहीं है। (३) घड़ालाओ इस वाक्यार्थ के साथ साथ तुमको पुत्र हुआ इस उदासीन वाक्यार्थ की भावना, जिसमें काव्यार्थ विषय नहीं है और दूसरे विषय हैं, यह भावना चमत्कार जनकता वाली नहीं हैं। इस प्रकार समझना चाहिये कि उदासीन वाक्यार्थ की सभी भावनाओं में चमत्कार जनकता नहीं हैं। उदित भया विधुमण्डल इत्यादि काव्यार्थ की सभी तीनों प्रकार की भावनाओं में चमत्कार जनकता है, केवल काव्यार्थ विषय वाली भावना, इसमें चमत्कार जनकता है। (२) काव्यार्थ विषय के साथ घड़ालाओ वाक्यार्थ की भावना, यह भी चमत्कारजनक है। (३) काव्यार्थ के साथ तुमको पुत्र हुआ इस उदासीन वाक्यार्थ की भावना, इसमें भी चमत्कार जनकता है। इस प्रकार काव्यार्थ की सभी भावनाओं में चमत्कार जनकता है इसलिये काव्यार्थ विषयक भावनात्व चमत्कार जनकता का अवच्छेदक होगा और काव्य में लक्षण समन्वय होगा।

उच्चारण भेद से शब्द का भेद होता है इस पक्ष में काव्यों का भी भेद होगा। सभी काव्यों में लक्षण जाय इसके लिये आनुपूर्वी का प्रवेश है। एक वर्ण के बाद दूसरा उसके बाद तीसरा इस रीति से आनुपूर्वी का वर्णन होता है ? शब्द भेद होने पर भी सभी में आनुपूर्वी के रहने से लक्षण समन्वय हो जाता है। जिस आनुपूर्वी वाले शब्द से प्रतिपादितार्थ विषयक भावनात्व चमत्कार के जनकता का अवच्छेदक ही उस आनुपूर्वी वाला शब्द काव्य हैं ऐसा लक्षण होगा। जहां भावना होने पर भी विशेष प्रतिबन्ध के कारण चमत्कार न पैदा हुआ वहां स्वरूप योग्य

जनकता छेकर लक्षण समन्वय होगा। अथवा ऐसी प्रतिबन्धक दशा में काव्यार्थ की भावना ही नहीं होती ऐसा माना जा सकता है ? अव्युत्पन्न अथवा असहृदय को काव्यार्थ की भावना ही नहीं होती, इस रीति से जन्य जनक भाव में व्यभिचार नहीं है। यहां यह ध्यान देने योग्य है कि भावनात्व को अवच्छेदक बनाया गया वह उतना कारीगर नहीं है ? भावनात्व सभी भावनाओं में रहने वाला है चमत्कार को नहीं करने वाली भावनाओं को नहीं छोड़ता। भावना को संकुचित करने वाला भावना में रहने वाला प्रतिपादितार्थ विषयकत्व है, वैसा विषयकत्व और उसकी विषयिता एक ही है, विषय वाली भावना में विषयित्व स्वरूप सम्बन्ध से रहता है, विषयिता सम्बन्ध से अर्थ भावना में रहता है, अर्थ विषय में विषयता है, वह विषयता निरूपकत्व सम्बन्ध से भावना में रहती है, अर्थ की विषयिता अर्थ निरूपित विषयिता कही जाती है, इस प्रकार भावनात्व से भिन्न भावना में रहने वाले अर्थ ? अर्थनिष्ठ विषयता २ अर्थ निरूपित विषयिता तीन धर्म चमत्कार जनकता का क्रमशः अवच्छेदक होने से तीन लक्षण हो सकते हैं, किन्तु अग्रिम मूल लक्षण में चमत्कारजनकतावच्छेदकार्थ लिखा गया है इसलिये अर्थ को अवच्छेदक बनाकर अभी वर्णन किया जाता है। इस प्रकार चमत्कारत्वावच्छिन्न जो चमत्कार में रहने वाली जन्यता, उससे निरूपित जो भावना में रही जनकता उसका अवच्छेदक जो अर्थ काव्यार्थ उसका प्रतिपादक शब्द काव्य हुआ। यत् तत् शब्द को निकाल कर इसी प्रकार लक्षण बनाने की प्रक्रिया है। यत्-तत् के अर्थ अनुगत नहीं हैं ऐसा कहकर यत्-तत् शब्द लगा हुआ लक्षण अच्छा नहीं माना जाता, इसको प्रकारविधया लक्षण रचना कहा जाता है, विशेषण-विशेष्य रूप से पदार्थों का लक्षण में प्रवेश होता है ? कुछ पदार्थों को सम्बन्ध के अन्दर प्रवेश करके लक्षण बनाने को संसर्गविधया लक्षण रचना कहा जाता है। संसर्गता-प्रकारतावादि का लाघव-गौरव विचारना कठिन होगा इसलिये छोड़ा जाता है। तोभी संसर्ग वाले लक्षण में लाघव का व्यवहार होता है, उसमें भी प्रमाणित पारम्परिक सम्बन्ध को ही ठीक माना जाता है।

अग्रिम मूल का लक्षण संसर्गता से प्रवेश करके है। प्रतिपादक शब्द कहने से प्रतिपादकत्व धर्म शब्द में है यह कहा ही गया, पहले लक्षण की पूरी धारणा करके

आदि में चमत्कारत्व को स्वपद से लेकर अवच्छिन्न से शुरू करके प्रतिपादकत्व तक सम्बन्ध बनाया गया है ? चमत्कारत्व वाला शब्द काव्य है ऐसा लक्षण हुआ, साक्षात् समवाय सम्बन्ध से चमत्कारत्व जाति सुख विशेष में रहती है, एक ही वस्तु सम्बन्ध भेद से भिन्न जगह रहती है, इस वर्णनीय परम्परा सम्बन्ध से काव्य शब्द में रखना है, स्वचमत्कारत्व से अवच्छिन्न जो चमत्कार में रहने वाली जन्यता उससे निरुपित जो भावना में रहने वाली जनकता उसका अवच्छेदक जो अर्थ उसका प्रतिपादकत्व सम्बन्ध काव्य शब्द में पहुँच गया, उस सम्बन्ध से चमत्कारत्व काव्य शब्द में रहा, पहले किये हुए लक्षण से इसमें प्रकार भेद ही विशेष है अर्थ विशेष नहीं है। मूल में स्वविशिष्ट जनकता लिखा हुआ है उसका तात्पर्य चमत्कारत्वावच्छिन्नजन्यता निरू-पित जनकता में समझे, लक्षण में भावनानिष्ठ जनकता नहीं लिखा है किन्तु लक्षण का समन्वय भावना में रहने वाली जनकता को लेकर ही होगा। ऐसा पारम्परिक सम्बन्ध प्रमाणित हो तो यह लक्षण ठीक है, अन्यथा पहला लक्षण ही ठीक है। काव्य चमत्कारत्व वाला है या चमत्कार हैं ऐसा व्यवहार प्रमाणित हो तब ऐसा सम्बन्ध भी प्रमाणित हो सकता है। काव्य चमत्कारी है, काव्य चमत्कार का कारण है, इत्यादि व्यवहार प्रमाणित है किन्तु वह व्यवहार चमत्कार-जनकता का सम्बन्ध काव्य शब्द में प्रगट करता है, चमत्कारत्व का सम्बन्ध काव्य शब्द में नहीं बताता। काव्य में चमत्कार जनकता काव्यार्थ की भावना द्वारा रहेगी, तब जनकता का काव्य में सम्बन्ध स्वावच्छेदकार्थ प्रतिपादकत्व होगा। स्व जनकता उसका अवच्छेदक अर्थ काव्यार्थ उसका प्रतिपादकत्व काव्य-शब्द में है, इस सम्बन्ध को लेकर चमत्कार जनकता वाला शब्द काव्य है ऐसा लक्षण हो सकता है, जनकता का सम्बन्ध काव्य में कहा ही गया है। इसका पारम्परिक सम्बन्ध प्रामाणिक कहा जा सकता है।

इतने तक जितना सारल्य या संक्षेप संभव है मूल लक्षण की व्याख्या ही की गयी है, इसके बाद इसी का कुछ और स्फुट परिष्कार यद्यपि साहित्य अध्येताओं के लिये क्लेशकर होगा, किन्तु मेरे गुरु पढ़ाते थे, अतएव अध्ययन अध्यापन में चलित कहाया सर्वथा परित्याग के योग्य नहीं है, यद्यपि गुरुमुख से सुना हुआ अक्षरशः स्मरण में नहीं तौ भी कोई शैली स्फुटित होती है, उसके अनुसार संक्षेप और सरलता से वर्णन करता हूँ तथा विस्तार भय से विशेष बिवरण नहीं कर पा रहा हूँ।

( १ ) प्रथम लक्षण की रीति से वर्णन है, भावनात्व अवच्छेदक का प्रवेश नहीं यह पहले कहा गया है। अर्थ निरूपित विषयिता को यहां जनकता का अवच्छेदक बनाया जाता है। यत्-तत् का प्रवेश करके लक्षण है, भावना में रही जनकता को लेकर लक्षण समन्वय होगा। जिस शब्द से प्रतिपादित अर्थ से निरूपित विषयिता चमत्कारत्व से अवच्छिन्न जन्यता से निरूपित जनकता का अवच्छेदक हो वह शब्द ही काव्य है, आगे संक्षेप के लिये चमत्कार जनकता शब्द से उल्लेख होगा उसका स्वरूप पूर्ववर्णित के अनुसार होगा।

( २ ) प्रतिपादक काव्य शब्द में प्रतिपादकता रहेगी, प्रतिपादकता का अवच्छेदक उस शब्द में रहने वाली आनुपूर्वी होगी, प्रतिपादकता उस आनुपूर्वी से अवछिन्न कही जायेगी, प्रतिपादक से प्रतिपाद्य काव्यार्थ में प्रतिपाद्यता रहेगी, प्रतिपादकता और प्रतिपाद्यता परस्पर नित्य साकाङ्क्ष्य हैं इसलिये बीच में निरूपित लगेगा। यत् शब्द से और तत् शब्द से आनुपूर्वी ली जायेगी, तत् काव्यम् की जगह तदवच्छिन्न काव्य कहा जायेगा। आनुपूर्वी से अवच्छिन्न प्रतिपादकता से निरूपित जो प्रतिपाद्यता उस प्रतिपाद्यता वाला जो अर्थ ( काव्यार्थ ) उससे निरूपित विषयिता चमत्कार जनकता का अवच्छेदक हो उस आनुपूर्वी से अवछिन्न काव्य है। अथवा उस आनुपूर्वी वाला या उस आनुपूर्वी का पर्याप्त सम्बन्ध से अधिकरण काव्य है ऐसा भी कहा जा सकता है।

( ३ ) प्रतिपादकता का अवच्छेदक आनुपूर्वी कही गई है, अवच्छेदक में अवच्छेदकता रहती है, जो अवच्छेदक से अवछिन्न रहता है वह अवच्छेदकता से निरूपित कहा जाता है। आनुपूर्वी को यद्रूप पद से लिया जायेगा, यद्रूपावच्छिन्न प्रतिपादकता की जगह यद्रूपनिष्ठावच्छेदकता निरूपित प्रतिपादकता बना भी समानार्थक ही है, अवच्छेदकता में यद्रूप निष्ठत्व सम्बन्ध से विशेषण है, उस अवच्छेदकता की भी अवच्छेदकता यद्रूप में रहने वाली निष्ठत्व सम्बन्ध से अवच्छिन्न होगी, दोनों अवच्छेदकताओं के मध्य में निरूपित बोला जायेगा। इसी प्रकार विषयित्व जनकतावच्छेदक की जगह स्वरूपसम्बन्धावच्छिन्नविषयित्वनिष्ठावच्छेदकता से निरूपित जनकता कही जायेगी। विषयित्व में अर्थ निरूपितत्व सम्बन्ध से विशेषण है इसके

लिये अर्थ में रहने वाली अवच्छेदकता निरूपितत्व सम्बन्ध से अवच्छिन्न होगी। अर्थ में प्रतिपाद्यता स्वरूप सम्बन्ध से विशेषण है इससे प्रतिपाद्यता में रहने वाली अवच्छेदकता स्वरूप सम्बन्ध से अवच्छिन्न होगी, प्रतिपाद्यता में प्रतिपादकता निरूपितत्व सम्बन्ध से विशेषण है। प्रतिपादकता में अवच्छेदकता निरूपितत्व सम्बन्ध से विशेषण है। जो जिस सम्बन्ध से विशेषण है उसमें अवच्छेदकता उस सम्बन्ध से अवच्छिन्न होगी। जिस रूप आनुपूर्वी में रहने वाली जो निष्ठत्व सम्बन्ध से अवच्छिन्नावच्छेदकता उससे निरूपित जो निरूपितत्व सम्बन्ध से अवच्छिन्न अवच्छेदकता में रहने वाली अवच्छेदकता उससे निरूपित जो स्वरूप सम्बन्ध से अवच्छिन्ना प्रतिपादकता में रहने वाली अवच्छेदकता उससे निरूपित जो स्वरूप सम्बन्ध से अवच्छिन्न प्रतिपाद्यता में रहने वाली अवच्छेदकता उससे निरूपित जो निरूपितत्व सम्बन्ध से अवच्छिन्न अर्थ में रहने वाली अवच्छेदकता, उससे निरूपित जो स्वरूप सम्बन्ध से अवच्छिन्न विषयित्व में रहने वाली अवच्छेदकता उससे निरूपित चमत्कार जनकता हो उस रूप वाला काव्य है। इन अवच्छेदकताओं के निवेश का फल विस्तार भय से छोड़ा जाता है।

( ४ ) विषयता से युक्त लक्षण। तृतीय लक्षण में जहां विषयिता का प्रवेश है उसकी जगह विषयता रखकर लक्षण किया जायेगा। और कोई फरक नहीं होगा, विषयिता स्वरूप सम्बन्ध से भावना में विशेषण होती है इसलिए उसमें रहने वाली अवच्छेदकता स्वरूप सम्बन्धावच्छिन्ना होती है। विषयता भावना में निरूपकत्व सम्बन्ध से विशेषण होगी इसलिए विषयता में रहने वाली अवच्छेदकता निरूपकत्व सम्बन्ध से अवच्छिन्न होगी। तीसरे में अर्थ निरूपित विषयित्व का प्रवेश होने से अर्थ में रहने वाली अवच्छेदकता निरूपितत्व सम्बन्ध से अवच्छिन्न कहीं गई है। चतुर्थ में अर्थनिष्ठ विषयता का प्रवेश होने से अर्थ में रहने वाली अवच्छेदकता निष्ठत्व सम्बन्ध से अवच्छिन्न कही जायेगी। परिष्कार में प्रवीण वस्तु को समझकर बहुत लक्षण बना सकते हैं, यहां केवल मार्ग का प्रदर्शन करना है। यहां भी स्वरूप सम्बन्ध रूप अवच्छेदकता कल्प में दो तरह का, और अनतिरिक्तवृत्तित्वरूप अवच्छेदकता कल्प में भी दो या तीन प्रकार का लक्षण दिखाना चाहता हूँ। यत्-तत् पद से घटित भी पांच

छः लक्षण दिखाना अभीष्ट है।

वहीं पर श्रावण पूर्णिमा चतुर्थ अङ्क में संस्कृत में प्रकाशित।

## काव्य के कुछ लक्षण

पहले से ही सम्बन्ध है, जो इस अग्रिम को समझना चाहते हैं वे पहले के चारों लक्षणों को समझकर ही इनको समझ सकते हैं।

( ५ ) सम्पूर्ण काव्य के अर्थ की भावना से चमत्कार होता है, उस काव्य के एक अवयव के अर्थ की भावना अलग करें तो उस भावना से चमत्कार नहीं होता, किन्तु जिस काव्यार्थ भावना से चमत्कार होता है वह भावना काव्य के अवयव के अर्थ की भी भावना है, जो काव्यार्थ निरूपित विषयिता है उसमें अवयवार्थ से निरूपित भी विषयिता है, वह भी अवयवार्थ निरूपित विषयिता व्यक्ति चमत्कार जनकता का अवच्छेदक है, तब काव्य का एक देश अवयव को यत् शब्द से लेकर काव्य के एक देश में अतिव्याप्ति होगी उसके लिए यह पाँचवा लक्षण है। जिस शब्द से प्रतिपादित अर्थ की विषयिता सामान्य चमत्कार जनकता का अवच्छेदक हो वह शब्द काव्य है। विषयिता सामान्य का सभी विषयता अर्थ करना सरल होगा। काव्य के एक देशार्थ की विषयिता जब काव्यार्थ की भावना में रहती है वहां चमत्कार होता है, जो काव्यार्थ की भावना से अलग काव्य के एक देशार्थ की भावना है उससे चमत्कार नहीं होता, वह काव्य के एक देशार्थ की विषयिता चमत्कार की जनकता का अवच्छेदक नहीं हुई, इस प्रकार काव्य के एक देशार्थ की सभी विषयिता चमत्कार जनकता का अवच्छेदक नहीं हुई इसलिये काव्य के एक देश में अतिव्याप्ति का वारण हुआ।

(६) इसी अर्थ में इसी फल के लिये सामान्य पद छोड़ कर व्यापकत्व का निवेश करके छठा लक्षण किया जाता है। विषयिता जनकता का अवच्छेदक है कहने से विषयिता में जनकता की अवच्छेदकता है यह आया। सभी विषयिता में जनकतावच्छेदकता कहने पर जहां जहां विषयितात्व है वहाँ वहाँ जनकतावच्छेदकता है यह फलित हो गया। उसी का शब्दान्तर हुआ विषयितात्व का व्यापक जनकतावच्छेद-

कता, उसके अनुसार लक्षण हुआ कि जिस शब्द से प्रतिपादित अर्थ के निरूपित विषयितात्व का व्यापक चमत्कार जनकता की अवच्छेदकता हो वह शब्द काव्य है।

(७) पहले के फल के लिये ही सामान्य, व्यापक, अवच्छेदकता पदों को हटा कर अनतिरिक्तवृति पद देकर सातवां लक्षण बनता है, जहां जनकता है वहीं रहने वाली विषयिता हो जनकता से अतिरिक्त = जनकता जहाँ नहीं है वहीं नहीं रहने वाली विषयिता हो, ऐसा अर्थ होगा, जिस शब्द से प्रतिपादित अर्थ की विषयिता चमत्कार जनकता से अतिरिक्त जगह न हो वह शब्द काव्य है। ऐसा लक्षण हुआ। काव्य के एक देश अर्थ की विषयिता उस भावना में भी है जो भावना केवल एक देशार्थ की है काव्यार्थ की नहीं है। उस भावना में चमत्कारजनकता नहीं रहती, इसलिये अतिरिक्त में रहने वाली हुई, लक्षण समन्वय नहीं होगा अतिव्याप्ति नहीं होगी।

यत्-तत् के विना आठवां लक्षण है, पहले के प्रथम लक्षण की रीति इसमें समझनी चाहिये, अर्थ निरूपित विषयिता बोलते थे उसको उलटा करके विषयिता का निरूपक अर्थ बोला जायेगा, पहले प्रतिपादक शब्द से शुरू करते थे, इसमें चमत्कार जनकता से शुरू करके अन्त में प्रतिपादक शब्द को पकड़ेंगे। इस प्रकार चमत्कार जनकता का अवच्छेदक जो विषयिता उसका निरूपक जो अर्थ उसका प्रतिपादक शब्द काव्य है, यह लक्षण हुआ।

(९) पहले के द्वितीय लक्षण की रीति से यह नवां लक्षण है, अर्थ का प्रतिपादक शब्द कहने से अर्थ में प्रतिपाद्यता और शब्द में प्रतिपादकता मालूम हुई, प्रतिपादकता का अवच्छेदक शब्द में रहने वाली आनुपूर्वी पहले बताई गई है, प्रतिपाद्यता और प्रतिपादकता के मध्य में निरूपित लगाया ही गया है। इस प्रकार चमत्कार जनकता का अवच्छेदक जो विषयिता उसका निरूपक जो अर्थ उसमें रहने वाली जो प्रतिपाद्यता उससे निरूपित जो प्रतिपादकता उसका अवच्छेदक जो आनुपूर्वी उस आनुपूर्वी वाला शब्द काव्य है। यह लक्षण हुआ।

(१०) इस दशवें लक्षण के सभी विषय पहले तृतीय लक्षण में आ गये हैं, उसी प्रकार सम्बन्धों से अवच्छिन्न विशेषणों में अवच्छेदकता आई है। तीसरे में जो पहले हैं वे दशवें में अन्त में आये हैं, चमत्कारजनकता से शुरू है। चमत्कार जनकता से निरूपित जो स्वरूप सम्वन्ध से अवच्छिन्न विषयितानिष्ठ अवच्छेदकता उससे निरूपित जो निरूपितत्व सम्बन्ध से अवच्छिन्न अर्थ निष्ठ अवच्छेदकता उससे निरूपित जो स्वरूप सम्वन्ध से अवच्छिन्न प्रतिपाद्यतानिष्ठ अवच्छेदकता उससे निरूपित जो निरूपितत्व सम्वन्ध से अवच्छिन्न प्रतिपादकतानिष्ठ अवच्छेदकता उससे निरूपितत्व सम्वन्ध से अवच्छिन्न अवच्छेदकतानिष्ठ अवच्छेदकता उससे निरूपित जो निष्ठत्व सम्वन्ध से अवच्छिन्न आनुपूर्वीनिष्ठ अवच्छेदकता उस अवच्छेदकता वाली जो आनुपूर्वी उससे अवच्छिन्न शब्द काव्य है। ऐसा लक्षण हुआ।

(११) पहले के छठे लक्षण के अनुसार ग्यारहवें में दो लक्षण दिखाये जाते हैं। पहले में व्याप्य लगाकर दूसरे में व्यापकत्व लगाकर, किन्तु व्यापकत्व शब्द नहीं दिया गया है व्यापकत्व का लक्षण काव्य लक्षण में जोड़ दिया गया है। छठे में विषयितात्व का व्यापक जनकतावच्छेदकत्व कहा गया है, ग्यारहवें में अवच्छेदकत्व व्याप्य विषयित्वत्व कहा गया। इस प्रकार चमत्कार जनकतावच्छेदकत्व का व्याप्य जो विषयितात्व उससे अवच्छिन्न जो निरूपकता उससे निरूपित जो निरूप्यता, उस निरूप्यता वाला जो अर्थ उसका प्रतिपादक शब्द काव्य हुआ। इसी का व्यापकत्व लक्षण का अन्तर्भाव करके विवेचन करने पर चमत्कारजनकतावच्छेदकत्व में रहने वाला जो अभाव उसकी प्रतियोगिता निरूपित परम्परा से जो अवच्छेदकता उस अवच्छेदकता वाला जो आनुपूर्वी धर्म उस धर्म वाला शब्द काव्य है। अवच्छेदकता में रहने वाला अभाव जिस आनुपूर्वी रूप से अवच्छिन्न जो प्रतिपादकता उससे निरूपित जो प्रतिपाद्यता उस प्रतिपाद्यता वाला जो अर्थ उससे निरूपित जो विषयिता उसमें रहने वाला जो अभाव उसकी प्रतियोगिता नहीं है इस आकार वाला परम्परा से अवच्छेदकता का निर्वचन मध्यपाती बहुत अवच्छेदकताओं को लेकर होगा इसलिये नहीं लिखता।

(१२) पहले के सातवें लक्षण के अनुसार ही बारहवां लक्षण है, सातवें में जनकता से अनतिरिक्तवृत्ति है उसका अर्थ ही हुआ कि जनकता जहाँ नहीं है वहाँ

नहीं रहने वाली अर्थात् जनकता के अभाव वाले में नहीं रहने वाली, उसको बारहवें में जोड़ दिया गया है। चमत्कार जनकता के अभाव वाले में अवृत्ति जो विषयिता उसके निरूपक अर्थ का प्रतिपादक शब्द काव्य है यह लक्षण हुआ, काव्य के एक देशार्थ की विषयिता चमत्कारजनकता जहां नहीं है वहां भी है इसलिये अतिव्याप्ति नहीं है।

(१३) मूल में स्वविशिष्ट इत्यादि रीति के अनुसार बड़ा सम्बन्ध बना कर छोटा लक्षण तेरहवां किया जाता है। पहले के बारहों लक्षण के अनुसार बड़ा बारह सम्बन्ध बनाकर फिर बारह लक्षण हो सकते हैं, उससे विशेष ग्रन्थ का विस्तार हो जायेगा, इसलिये उसको छोड़कर केवल बारहवें लक्षण के अनुसार सम्बन्ध बनाकर केवल दिशा का प्रदर्शन के लिये यह लक्षण होता है। चमत्कारत्व वाला शब्द काव्य है, स्वपद से चमत्कारत्व को लेकर चमत्कारत्व का शब्द में सम्बन्ध स्वावच्छिन्न जन्यता निरूपित जनकता के अभाव वाला जो उसमें नहीं रहने वाली जो विषयिता उसका निरूपक जो अर्थ उसका प्रतिपादकत्व शब्द काव्य में गया।

❁

अयोध्या संस्कृतं पत्रे साप्ताहिके २८।२।१९४७ ईशाब्दे प्रकाशिता

# आलङ्कारिकग्रन्थस्य दुर्दशा

आविष्टया यया स्पृष्टो नागेशः सरलैव सा ॥
मुग्धा नो मोहयेदन्यान् तद्गङ्गाधरमाश्रये ॥

नाविदितोऽयं विषयविवेचनाकरः प्रसङ्गागतानां पदार्थानां प्रतिपादने प्रखर आलङ्कारिककुलशेखरो रसगङ्गाधरः, यत्र व्याकरणमूलग्रन्थेषु दुर्लभया स्फुटया परिष्कारवाचा पदार्थप्रतिपादनशैली विराजते। यत्र च काणादं पाणिनीयञ्च सम्यङ्नाधीतवतां न पदार्थबोधनेऽप्यधिकारः किमुत व्याख्याने। इत्यपि न तिरोहितं विपश्चिताम्। तस्य च शास्त्रसंगरस्य रसगङ्गाधरस्य शिरसि चिरात्प्रकाशिता वादभीरुरनुपासितगुरुचरणा अज्ञानशरणा सरलानाम्नी टीका-चटितेति नूनं तत्पण्डितकुलकलङ्क एव। एवं चेयं सरला मुग्धा यदनवगतान् अपि विषयान् न परित्यजति, अपितु यथाकथञ्चिदशुद्धं व्याख्यानं विधाय

छात्रवर्गं भ्रमगर्ते पातयति, धाष्ट्र्येन च नागेशमहोदयस्याप्युपहासं विदधती आडम्बरभूमिकया अप्रवीणान् अतितरां मोहयति। इयं प्रायः सर्वेष्वपि कठिनस्थलेषु अशुद्धं व्याख्याति।

अस्मिँश्च लघुशरीरे लेखे कतिपयानां दिग्दर्शनं विधित्सुरभ्यर्थयेऽधीतिनो यदवश्यं पुस्तके चिन्हानि कुर्वीरन्, समयेऽवश्यंविवेचयन्तु कीदृशीयं टीकेति। पृष्ठसंख्या चात्रत्या निर्णयसागरात्प्रथमं समुत्थितस्य सरलासहितस्य रसगङ्गाधरस्य बोध्या।

प्रथमं पण्डितराजस्योपरि आक्षेपरूपं सरलायाः काव्यशास्त्राज्ञाननाटकं पश्यन्तु पाठकाः–संदेहालङ्कारे 'आज्ञा सुमेषोरि' त्यादिपद्ये ३०५ पृष्ठे 'वाचकशब्दाभावाद् व्यङ्ग्य एव भवितुमर्हति संशयः' इति रसगङ्गाधरमूलम्। प्रसिद्धश्च किंशब्दस्य मतभेदेन जिज्ञासाया जिज्ञासाविषयत्वस्य वा वाचकत्वम्, जिज्ञासया च संशयो व्यज्यते। अत्रत्यसाहित्यप्रधानाध्यापकोऽपि स्मरति किमोजिज्ञासिते इति, एतत्समानार्थकमन्यद्वा। शब्दखण्डग्रन्थादिषु च वर्तत एव, परमलङ्कारग्रन्थेऽन्यत्रापिमिलेदिदं यदिभवेदस्या अलङ्कारशास्त्रप्रवेशः। तथापि काव्यप्रकाशप्रकाशशून्यतामपि सूचयन्ती सरला अधस्तनमुद्गमति 'संदेहस्य स्फुटवाच्यत्वात्, काव्यप्रकाशस्याप्यभिमतस्तादृशः संदेहः' इत्यादि, किंशब्दघटितमपि संदेहस्योदाहरणं परं न वाच्चस्येति न जानाति। अधुनाऽपि जयपुरेऽपि केचन नैयायिका वर्तन्ते, यदि सरला सारल्यमाश्रयेदवश्यं शिक्ष्येत परं सा मोहमापन्ना।

एवं ६ पृष्टे काव्यलक्षणसमन्वयोऽप्यस्या अवलोक्यताम्। चमत्कारत्वावच्छिन्न जन्यतानिरूपिता जनकतेति ग्रन्थाभिप्रेतम्। सरलायान्तु चमत्कारत्वविशिष्टा जनकतावच्छेदकतेति व्याख्यानेन जनकतावच्छेदकतायामर्थनिष्ठायां चमत्कारत्वावच्छिन्नत्वरूपं चमत्कारत्वविशिष्टत्वमभिहितम्। सर्वथाऽशुद्धंतत्।

तथा २८ पृष्टे अप्रामाण्यनिश्चयानालिङ्गितेतिविभावतावच्छेदकप्रसङ्गे कटाक्षकारिणी एषा सरला 'विशेष्यतासम्बन्धः समवायः' इति प्रक्षिप्तपाठेनमर्मप्रकाशेन एवं प्रतारिता अवर्णयद्येन इयमगम्येति नायकस्य ज्ञानदशायामपि नायिकाया विभावत्वमापद्येत। यासु यासु नायिकासु तादृशं ज्ञानं समवायसम्बन्धेन नास्ति ताः सर्वा विभावा भवेयुः। इयमगम्येति ज्ञानस्य या विशेष्यभूता न भवन्ति तासु विभावत्वस्येष्टतात्। परम् एवं बोधने सरलायाः क्व सामर्थ्यम्।

२५१ पृष्टे अरविन्दवत् सौन्दर्यमस्येत्यस्य शाब्दबोधव्याख्यानमपि सरलायावैदुष्यमाश्चर्यान्वितं विद्धाति, महाविदुषो भूमिकायामुद्धृतोऽयमंशः कथमशुद्ध्या गर्ते पातयतीति विज्ञाय सरलाऽवश्यं रोमाञ्चमाश्रयेत् परमिदं तयाऽवधातव्यम्। न कस्यचित् स्वभावादेव शास्त्रं दासतां गतम्, अपितु व्यवसायाधीनं शास्त्रम्, जाने यद्यसौ सम्यगवदधीत नैवं त्रुटिरागच्छेत्, परं-मार्गं गच्छता सर्वंव्यवस्थापयता तेन मुधैव सरला प्रतारिता, तथाहि अरविन्द-पदस्य अरविन्दसौन्दर्ये लक्षणायां सौन्दर्ययोरेव उपमानोपमेयभावः, अरविन्द-सौन्दर्यं प्रतियोगि उपमानम्, इदमर्थसम्बन्धि सौन्दर्यञ्च अनुयोगि उपमेयम्, सादृश्यस्य सत्यं निरूपकमुपमानं परं न प्रयोजकम्, किन्तु साधारणधर्म एव। एवं सौन्दर्यसादृश्यं सौन्दर्येण प्रतियोगिना निरूपितं न तु प्रयोज्यम्, सौन्दर्यप्रयोज्यञ्च न सौन्दर्यसादृश्यमपितु अरविन्दसादृश्यं मुखादिवृत्तीतिविषये-स्फुटे सौन्दर्यसादृश्यस्यापि प्रयोजकं सौन्दर्यं सौन्दर्येण च प्रयोज्यं सौन्दर्य-सादृश्यमिति व्याचक्षाणा प्रतियोगित्वार्थं निरूपितत्वमनवगच्छन्ती सरला यदि आलङ्कारिकग्रन्थस्य टीका तदा गतमलङ्कारशास्त्रेणेति चेरिवद्यते चेतः, साधा-रणपदार्थविषयेऽपि अस्याः परिचयः पाठकैः परीक्ष्यताम्।

उत्तरालङ्कारे ३९९ पृष्टे जिज्ञासां प्रतीष्टसाधनसज्ञानस्य कारणत्वे प्रक्रान्ते जिज्ञासायां प्रश्ने प्रवृत्तिस्तदैव भवेत्, इत्यादि टीकते, प्रवृत्तिः कस्य-वस्तुनो नामेति सा न जानाति, कथमन्यथा इच्छाजन्यां प्रयत्नरूपां प्रवृत्तिं इच्छारुपाया जिज्ञासायाः कारणतया वर्णयेत्?, बालोऽपि पाठ्यते जानाति इच्छति यतत इत्यादिरीत्या यत्नं प्रतीच्छा कारणं नतु इच्छां प्रतियत्न इति। तत्रैव ७०१ पृष्टे ज्ञानानीत्यस्य विशेषणतया निरवच्छिन्नप्रकारताभाञ्जि इति-मूले लिखितम्। तस्याभिप्रायस्तु मुक्तावल्यां निर्विकल्पकप्रकरणे यथा अध्या-पयन्ति यदनुलिख्यमानजात्यखण्डोपाधीनां स्वरूपतो भानम्, तन्निष्ठा प्रकारता धर्मेणानवच्छिन्ना जायते तथैव विष्णुत्वस्य स्वरूपतो भानविषयकः।

सरला तु ७०० पृष्टे येषां ज्ञानानां प्रकारता अवच्छिन्ना नास्ति अर्थात् परिमाणं न शक्यते कर्तुं यतो धर्मा अनन्ता इति व्याचष्टे। विलक्षणमिदं व्याख्यानम्।

यच्चि चेयं गम्भीरविषयमस्प्रष्टुमेवान्वग्रहीष्यन्नाधिकं दुःखमपतिष्यत् परमियमाग्रहिला ग्रन्थस्वरूपमपि कलुषीकरोति, पश्यन्तु तिरस्कारप्रकरणे ६८८ पृष्टे–एवञ्च बलवदनिष्टाननुबन्धित्वं बलवदिष्टाननुबन्धित्वञ्चोपायेच्छा-द्वेषयोः कारणतावच्छेदकत्वेन देयमेवेत्याहुरितिमूलपाठः सम्यक्, कारणता-

वच्छेदककुक्षौ द्वयोः प्रवेशस्य आवश्यकता सन्दर्भादायाति, सरलातु कारणतावच्छेदके न देयमितिपाठं कल्पयित्वा कारणतावच्छेदके न देयमितिनकारस्य निवेधार्थंकतयाऽपि यत्किमपि उद्गिरन्ती किमदनर्थं प्रसूत इति विद्वांस एव समीक्षन्ताम् ।

एनावता शास्त्रान्तरविषय एवाज्ञानमस्या इति नावसेयं पाठकैः, आलङ्कारिकव्युत्पत्तिरप्यस्या अग्रिमे 'रसगङ्गाधरटीकयोर्विमर्शः' नामकलेखे परीक्षिष्यते पाठकैः सम्यक्, अधुनाप्यस्या आलङ्कारिकविज्ञानस्यैकां वर्णिकां पठन्तु सहृदयाः । यस्यारोपः स विषयी यस्मिन्नारोपः स विषय इत्यालङ्कारिकाणामेव, प्रसिद्धा सरणिः शास्त्रान्तरेषु अस्या वैपरीत्येनोपलब्धेः, अत्राप्यस्या अज्ञानसामाज्यम्, न केवलं ग्रन्थार्थमपितु मूलपाठमपि विपरीतं विदधाति । तथाहि विषमलक्षणे अमृतलहरीत्यादिपद्ये ५९५ पृष्टे विषयांशमालम्ब्य स्फुरितोविरोधो विषय्यंशविमर्शोत्तरं निवर्तते इति पाठं परिकल्पयति, द्वितीये पृष्टे व्याख्याति च किमपि विचित्रम् । वस्तुतस्तु इत्थम्, निमित्तकारणे राज्ञि समवायिकारणत्वाध्यवसायः, निमित्तिकार्ये च प्रतापे समवेतकार्यत्वस्यारोपः, तस्माद् विषयि समवायिकारणत्वं समवेतकार्यत्वञ्च, विषयो निमित्तकारणत्वं निमित्तिकार्यत्वञ्च, समवायिकारणाद्विसदृशकार्योत्पत्तौ विरोधः, निमित्तकारणाद्विसदृशकार्योत्पत्तेः प्रसिद्धेः परिहारोविरोधस्य, तस्मात् निमित्तसमवायित्वयोरव्युत्पन्नया पद्यार्थमबुद्ध्यमानया सरलया ग्रन्थस्य ग्रन्थर्थिस्य च सर्वथा विपरीतं विहितम् । युज्यते च तत्स्थाने विषय्यंशमालम्ब्य स्फुरितोविरोधो विषयांशविमर्शोत्तरं निवर्तते इति पाठः ।

किमपि संशोधनकौशलस्यापि निदर्शनमस्याः दर्शनीयमेवास्ते । जयपुरीय स्वर्गीय श्रीदुर्गाप्रसादजो महामहोपाध्याय संशोधिते उपमाप्रकरणे १९४ पृ० मर्मप्रकाशस्य इन्दूपमशब्दव्याख्याने कर्मसाधनेनोपमशब्देन समासाद्वा इति शुद्धः पाठः, परन्त्वनया तु संस्कृतसाहित्येऽकारान्तोपमशब्दस्यासंभवमवगच्छन्त्या २१४ पृष्टे तत्स्थाने कर्मसाधनेनोपमाशब्देन समासाद्वा इति सन्दर्भाशुद्धः पाठः परिकल्पितः, एवं बहूनि स्थलानि अशुद्धानि । एतावतैव अज्ञानबलोच्छ्रिताया अस्या विविधतन्त्रस्वतन्त्रस्य नागोजीभट्टमहोदयस्योपरि कीदृश आक्षेप इति विदितमेव भविष्यति तथापि किञ्चिदग्रिमे लेखे प्रदर्शयितुं प्रयतिष्ये इति ।

अयोध्यावाले साप्ताहिक संस्कृतं पत्र में २५।२।१९४७ ईस्वी अङ्क में संस्कृतमय प्रकाशित

# आलङ्कारिकग्रन्थस्य दुर्दशा

विषयों के विवेचना का आकर प्रसङ्ग से आये हुए पदार्थों के प्रतिपादन में प्रखर आलङ्कारिक कुल का शेखर रसगङ्गाधर प्रसिद्ध है, जिसमें व्याकरणमूल ग्रन्थों के दुर्लभ स्फुट परिष्कार भाषा से पदार्थों के प्रतिपादन की शैली सुशोभित है, और उसमें काणाद और प्राणिनीय शास्त्र को अच्छी तरह नहीं पढ़ने वालों का पदार्थ ज्ञान में भी अधिकार नहीं है व्याख्यान में क्या कहा जाय, यह भी विद्वानों में छीपा नहीं है, इन शास्त्रों के संग्राम रसगङ्गाधर के शिर पर चिरकाल से प्रकाशित शास्त्रार्थ में भीरु गुरु चरणों की उपासना नहीं की हुई अज्ञान शरण वाली सरला टीका चीपकी हुई है यह अवश्य पण्डितकुल का कलङ्क ही है, और इस प्रकार यह सरला इतनी मुग्ध है कि अज्ञात वस्तुओं को छोड़ती नहीं है किन्तु किसी प्रकार कुछ अशुद्ध व्याख्या करके छात्र वर्ग को भ्रम के गढ़े में गिराती है, तथा धृष्टता से श्री नागोजी भट्ट महोदय का भी उपहास करती हुई आडम्बर की भूमिका वनाकर मन्द जिज्ञासुओं को अधिक मोह लेती है, यह प्रायः सभी कठिन स्थलों पर अशुद्ध व्याख्या करती है, इस लघुकाय लेख में कुछ का दिग्दर्शन कराना चाहता हुआ अध्ययनशीलों से प्रार्थना करता हूँ कि पुस्तकों पर अवश्य चिन्ह करें तथा समय पाकर विचार करें कि यह टीका कैसी है ?, यहाँ की पृष्ट संख्या निर्णय सागर से पहले-पहले प्रकाशित सरला सहित रसगङ्गाधर की समझनी चाहिये। पहले पण्डितराज के ऊपर आक्षेप रूप सरला के शास्त्रों के अज्ञान नाटक को पाठक देखें।

सन्देह अलङ्कार प्रकरण में आज्ञासुमेपोरित्यादि पद्य पर ३-५ पृष्ट में वाचक शब्द न होने से संशय व्यङ्ग्य ही होना चाहिये ऐसा रसगङ्गाधर मूल का अर्थ है, जिज्ञासा या जिज्ञासा विषय का वाचक किम् शब्द है ऐसा प्रसिद्ध है, जिज्ञासा से संशय व्यङ्ग्य होता है, किम् की जिज्ञासित में शक्ति है ऐसा अथवा ऐसे अर्थ वाले दूसरे वाक्य को यहां के साहित्य प्रधानाध्यापक भी स्मरण करते हैं, शब्द खण्ड के ग्रन्थ आदि में है,

साहित्य शास्त्र में भी कहीं दूसरी जगह मिले यदि इसका प्रवेश अलङ्कारशास्त्र में हो, तोभी काव्य-प्रकाश की समझ की शून्यता सूचित करती हुई सरला का नीचे लिखा उजागर ही है, संदेह स्फुट वाच्य है, काव्यप्रकाश को भी ऐसा सन्देह अभिमत है। इत्यादि। उसको यह मालूम नहीं कि किम् शब्द से युक्त पद्य को दोनों संदेह अलङ्कार का उदाहरण मानते हैं, रसगङ्गाधर में कहा गया कि वाच्य संदेह का उदाहरण नहीं है, काव्य-प्रकाश में नहीं कहा गया कि वाच्य संदेह का उदाहरण है, तब दोनों में कोई विरोध नहीं, इसलिए अपने समर्थन में काव्य प्रकाश का नाम लेना शास्त्र व्युत्पत्ति-हीनता ही है ? अभी भी कोई नैयायिक जयपुर में हैं, सरला यदि सरलता अपनाती तो अवश्य समझ पाती वह तो बहुविज्ञता मोह में पड़ी है। इसी प्रकार छठे पृष्ठ पर काव्य लक्षण का समन्वय भी इसका देखें—

चमत्कारस्वावच्छिन्नजन्यता निरूपित जनकता ऐसा ग्रन्थ का अभिप्रेत है, सरला चमत्कारत्वविशिष्टजनकतावच्छेदकता ऐसा व्याख्यान करती है, ऐसे व्याख्यान से अर्थ में रहने वाली जनकतावच्छेदकता में चमत्कारत्व विशिष्ट या चमत्कारत्वावच्छिन्नत्व कहा गया, वह सर्वथा अशुद्ध है।

इस प्रकार २८ पृष्ठ पर अप्रमाण्य निश्चय से अनालिङ्गित इत्यादि से विभावतावच्छेदक के प्रसङ्ग में कटाक्ष करने वाली सरला प्रक्षिप्त पाठ वाले मर्मप्रकाश से ठगी गई ऐसा वर्णन की है जिससे यह अगम्य है ऐसे नायक के ज्ञान दशा में भी नायिका विभाव हो जायेगी, जिन-जिन नायिकाओं मे वैसा ज्ञान समवाय सम्बन्ध से नहीं है वे सभी नायिका विभाव हो जायेंगी। मर्मप्रकाश में यहां विशेष्यता सम्बन्ध समवाय है ऐसा अशुद्ध पाठ चल पड़ा है। सरल अर्थ तो यह है कि 'यह अगम्य है इस ज्ञान का जो-जो नायिका विशेष्य नहीं हैं वे विभाव हैं।' लेकिन ऐसा समझने की सरला की शक्ति कहां ?।

२५१ पृष्ठ पर अरविन्द के ऐसा इसका सौन्दर्य इसके शाब्दबोध का सरला का व्याख्यान उसके पाण्डित्य को आश्चर्य से युक्त करता है, बड़े विद्वान् से भूमिका में उद्धृत भी यह सन्दर्भ अशुद्धि के गड्ढे में कैसे गिरता है ऐसा समझकर सरला को अवश्य रोमाञ्च होगा, किन्तु समझना चाहिये उसका कि स्वभाव से ही शास्त्र किसी

का दास नहीं होता, व्यवसाय के अधीन शास्त्र है, मैं जानता हूँ कि वे बड़े विद्वान् सावधानी से सोचते तो ऐसी त्रुटि नहीं आती किन्तु रास्ते चलते सभी की व्यवस्था करते उस विद्वान् से सरला ठगी गई है। अरविन्द पद की अरविन्द सौन्दर्य में लक्षणा है, अरविन्द के सौन्दर्य के ऐसा इसका सौन्दर्य है ऐसा अर्थ है, दोनों सौन्दर्यों का उपमान उपमेय भाव है, अरविन्द के सौन्दर्य का सादृश्य इसके सौन्दर्य में हैं, सादृश्य का प्रतियोगी अरविन्द सौन्दर्य उपमान है तथा सादृश्य का निरूपक है, सादृश्य का अनुयोगी इसका सौन्दर्य उपमेय है, सादृश्य का निरूपक उपमान होने से उपमान से निरूपित सादृश्य कहा जाता है, ऐसा ही निरूपित शब्द मूल में दिया गया है। सादृश्य का निरूपक उपमान होता है किन्तु प्रयोजक नहीं होता, सादृश्य का प्रयोजक साधारण धर्म ही होता है, सौन्दर्य सादृश्य का प्रयोजक सौन्दर्य नहीं हो सकता, सौन्दर्य सादृश्य सौन्दर्य निरूपित है किन्तु सौन्दर्य प्रयोज्य नहीं है, सौन्दर्य साधारण धर्म से प्रयोज्य अरविन्द का सादृश्य मुख आदि में रहने वाला होगा, इस प्रकार यहाँ का विषय स्फुट है, तौभी सौन्दर्य सादृश्य का प्रयोजक सौन्दर्य है, सौन्दर्य सादृश्य सौन्दर्य से प्रयोज्य है ऐसा व्याख्यान करती हुई निरूपित प्रतियोगिक अर्थ नहीं जानती हुई सरला यदि आलङ्कारिक ग्रन्थ की टीका है तो अलङ्कार शास्त्र ही चला गया, इससे चित्त वहुत खिन्न होता है, साधारण साहित्य पदार्थ के पदार्थों में भी सरला के परिचय की पाठक परीक्षा करें।

६९९ पृष्ट पर उत्तरालङ्कार प्रकरण में जिज्ञासा के प्रति इष्ट साधनता ज्ञान की कारणता का प्रसङ्ग चला है, वहां जिज्ञासा रूप प्रश्न में तभी प्रवृत्ति हो इत्यादि अभिप्राय वाली सरला टीका है, प्रवृत्ति किस वस्तु का नाम है ? इसको सरला नहीं जानती, नहीं तो इच्छा से जन्य प्रयत्न रूप प्रवृत्ति को इच्छा रूप जिज्ञासा का कारण कैसे वर्णन करती ?, वालक भी पढ़ाया जाता है कि पहले वस्तु को समझता है तब चाहता है व उसके लिए यत्न करता है इत्यादि रीति से यत्न का कारण इच्छा है यत्न इच्छा का कारण नहीं है। वहीं ७०१ पृष्ट पर ज्ञानों का विशेषण निरवच्छिन्न प्रकारता वाले ऐसा दिया गया हैं, उसका अभिप्राय तो वैसा है जैसा कि मुक्तावली के निर्विकल्पक प्रकरण में पढ़ाया जाता है कि जिसका उल्लेख न हो ऐसे जाति या अखण्ड उपाधि

का स्वरूप से मान होता है, उसमें रहने वाली प्रकारता धर्म से अवच्छिन्न नहीं होती, इत्यादि, उसी प्रकार विष्णुत्व का स्वरूप से भान है ऐसा ग्रन्थ का अभिप्राय है, ७०० पृष्ठ पर सरला का ऐसा लेख है कि जिन ज्ञानों की प्रकारता अवच्छिन्न नहीं है, अर्थात् उसका परिमाण नहीं कर सकते, क्योंकि धर्म अनन्त हैं, इत्यादि। विलक्षण यह व्याख्यान है। यदि यह अपरिचित विषयों को नहीं छूने की कृपा करती तो अधिक दुःख नहीं पड़ता किन्तु यह बहुत आग्रह वाली है शुद्ध ग्रन्थ के स्वरूप को भी खराब करती हैं, जिज्ञासु लोग तिरस्कार प्रकरण ६८८ पृष्ठ पर देखें। उपाय की इच्छा के कारणभावच्छेदक रूप से वलवान् अनिष्ट के अननुवन्धित्व को देना चाहिए, इसी प्रकार उपाय द्वेष के कारणतावच्छेदक रूप से बलवान् इष्ट के अननुबन्धित्व को देना चाहिए ऐसे अभिप्राय से मूल का शुद्ध स्वरूप है, कारणतावच्छेक कुक्षि में दोनों के प्रवेश की आवश्यकता आती है, सरला वहां कारणतावच्छेदक में न देना चाहिये ऐसे पाठ की कल्पना करती है, और न का निषेध करके जो कुछ अशुद्ध कहती हुई कितने अनर्थ को पैदा करती है ?, इसकी समीक्षा विद्वान् ही करें।

इतने से इसका अज्ञान दूसरे शास्त्रों से सम्बन्ध विषयों में ही है ऐसा पाठक निश्चय न कर लें, इस लेख में भी अलङ्कार शास्त्र की अव्युत्पत्ति को दिखाया गया है, आगे के रसगङ्गाधर टीकयोर्विमर्शः लेख में भी संस्कृत पाठक इसकी अच्छी परीक्षा करेंगे, यहाँ भी इसके अ लङ्कारिक विज्ञान वानगी ( नमूना ) और सहृदय वर्ग पढ़े।

जिसका आरोप होता है वह विषयी, जिसमें आरोप होता है वह विषय कहा जाता है। यह अलङ्कार की सरणि है, दूसरे शास्त्रों में इससे विपरीत भी मिलता है। इसमें भी इसका अज्ञान साम्राज्य है, केवल ग्रन्थ के अर्थ को ही नहीं किन्तु मूल पाठ को भी विपरीत करती है ! जैसे कि विषमालङ्कार अमृत लहरी इत्यादि पद्य में ५९५ पृष्ठ पर विषय अंश को लेकर विरोध स्फुरित होता है, और विषयी अंश के विमर्शवाद निवृत्त होता है, ऐसे पाठ की कल्पना करके दूसरे पृष्ट पर कुछ विचित्र ही व्याख्यान करती है, विषय तो इस प्रकार है, निमित्त कारण राजा में समवायि कारणत्व का आरोप है, इसी प्रकार निमिति कार्य प्रताप में समवेतकार्यत्व का आरोप है, इससे विषयी समावायिकारणत्व और समवेतकार्यत्व है, निमित्तकारणत्व

और निमित्तकार्यत्व विषय है, समवायिकारण से विसदृश कार्य की उत्पत्ति में विरोध है, निमित्त कारण से विसदृश कार्य की उत्पत्ति प्रसिद्ध होने से विरोध का परिहार है, सरला ने तो ग्रन्थ और ग्रंथ के अर्थ को सर्वथा विपरीत कर दिया, निमित्त समवायी इत्यादि समझती नहीं, पद्य का अर्थ भी कैसे समझे, इसलिये उसके स्थान पर विषयी अंश को लेकर विरोध स्फुरित होता है और विषय अंश के विमर्श के बाद निवृत्त होता है यही पाठ ठीक है। कुछ इसके संशोधन कला का निदर्शन भी देखने लायक है।

जयपुर के स्वर्गीय म: म. दुर्गाप्रसाद जी संशोधित निर्णयसागर की पुस्तक में उपमा प्रकरण १९४ पृष्ट पर मर्मप्रकाश इन्दूपयम शब्द के व्याख्यान में कर्म साधन उपम शब्द से समास होने से ऐसा शुद्ध पाठ है, किन्तु इसने संस्कृत साहित्य में अकारान्त उपमशब्द को असंभव समझा, २१४ पृष्ट पर उसकी जगह कर्मसाधन उपमाशब्द से समास होने से ऐसा अर्थ वाला संदर्भ से अशुद्ध ही पाठ की कल्पना की। इस प्रकार बहुत स्थल अशुद्ध हैं।

इतने ही से अज्ञानबल से बढ़ी चढ़ी इसका विविध तन्त्रों में स्वतन्त्र श्री नागो जी भट्ट के ऊपर कैसा आक्षेप है? यह मालूम ही हो जायेगा तो भी कुछ अग्रिम लेख में और दिखाने का यत्न करूंगा।

अयोध्यास्थ साप्ताहिक संस्कृत पत्रे २५।३।१९४७ ईशाब्दे प्रकाशितः

# रसगङ्गाधरटीकयोर्विमर्शः

रसगङ्गाधरस्य विविधतन्त्रस्वतन्त्रश्रीनागोजीभट्ट निर्मिता गुरुमर्मप्रकाशटीका मूलनिर्मितेरनन्तरम् अल्पीयसैव कालेन रसगङ्गाधरमसेविष्ट। टीका कर्तुर्बहुमुखी विद्वत्ता प्रसिद्धतया न वर्णनमपेक्षते, परमलङ्कारशास्त्रेऽपि महानस्य प्रभाव आपतदिति प्रदीपोद्योतपरम्परया अनन्तरमुद्भावितासु काव्य प्रकाशटीकासु काव्य प्रकाशस्य पठन-पाठन शैलीसु च प्ररूढतया दर्शनात् स्फुट वक्तुं युज्यते, उपमाया विषये सादृश्यसाधर्म्ययोः कियान् भेदः,

इवादि शब्देषु सादृश्यनिरूपिता वा शक्तिः, श्रोत्यार्थीविभेद जीवातुः कः, इत्यादयो वैयाकरण सिद्धान्त लघुमञ्जूषायां तथा एभिर्महाभाष्यादिस्वारस्यप्रदर्शनेन युक्तिप्रयुक्तिभिश्च व्यवस्थापितं येन अयं सिद्धान्त आलङ्कारिक इति रटन्तष्टीकासु अध्यापने च प्रावर्तयन्नालङ्कारिक विद्वांसः, उद्योत विद्योतनात् प्राक् प्रणीतासु काव्यप्रकाशटीकासु उपरिनिर्दिष्टा विषया न रूढमूलाः, भूयांश्च व्याख्याभेदः प्राचलत्, नैका व्याख्यानप्रणाली काव्यप्रकाशस्य प्रातिष्ठत, प्रदीप ग्रन्थ उद्योतमन्तरा व्याख्यान्तरमिव न प्ररूढमूलोऽभवत्, उद्योत द्योतितस्तु सिद्धान्तभावमापन्नः, प्रदीपेनाप्रकाशिता अपि कतिपयपदार्था उद्योतद्योतिता आलङ्कारिकैः सादरमादीयन्तेति टीकाप्रटीकापरिशीलनेन प्रत्येमि।

प्रसिद्धा नागेशमहोदयस्यानेकशास्त्रमर्मप्रकाशनव्यसनितया व्यापृतस्यातिसंक्षितप्रतिपादनशैली, तादृशेनाऽपि गुरुमर्मप्रकाशेन रसगङ्गाधरस्याद्यांश एवासेव्यत, अग्रे च कुत्रचित् किमपि उपलभ्यते तत्तु केनापि तस्य शिष्येण टीकितमिति प्रतिभाति, अस्य साधनन्तु लेखान्तरेण संभवतीति सन्तोष्टव्यं वाचकैः, तत्रापि लेखकपरम्पराकृताशुद्धिरद्यापि मूलं न मुञ्चति, तदा मर्मप्रकाशस्य को विकाश इति स्वयमेवावसेयत्। यथा प्रायो बहुषु पुस्तकेषु सहोक्तिप्रकरणे मूल खण्डनप्रस्तावे मर्मप्रकाशस्य राज्ञा सह सेना आगच्छति इत्यत्र तृतीयापत्तेः इत्यशुद्धः पाठो नाद्यावधि शुद्धतां नीतः, अशुद्धिवशाच्च सरलाया विविधोपहासं सहते, स्वतन्त्र ग्रन्थे मञ्जूषायामसकृत्स्व सिद्धान्त पोषणाय भागवत वचनानि पठन्तोऽपि वैयाकरणाः सरलाकृतं नागेशस्य भागवतापरिचयरूपमाक्षेपं सहन्ते, न केवलं वर्णानामेव विपर्ययो लेखकपरम्परया प्रवाहितोऽपितु कुत्रचित्पदस्य कुत्रचिद् वाक्यस्यापि अन्यत्र टीकाकृता सन्निपेशितस्य अन्यत्रलेखनं मुद्रणं च जातम्, महांश्च प्रयासोऽस्य संशोधने।

सरलायां भूमिकायां सञ्चिता विषयाः बहुशोमया विवेचिताः, अधिकांशास्तत्र शुद्धाः प्रतिभान्ति, अन्येऽपि कदाचन समये स्फुरेयुः, अनुभवामि च तत्र मर्मप्रकाशस्य मार्मिकत्वम्।

नूतना द्वितीया सरलाटीका तु अन्यलेखेन पाठकैः कृतपरिचया महतो विदुष आक्षेपवचसैव प्रतिष्ठासुतया प्रस्तुतेऽस्मिन् ग्रन्थेऽनधिकारितया च न स्पृशति मर्माणि मर्मप्रकाशप्रकाशितान्यपि, तया आक्षिप्तानामेव स्थलानां विचारं पाठकानां सेवायै उपहरामि, आशासेच पुस्तकान्युद्घाट्यावश्यं विचारेणानुग्रहीष्यन्ति मामिति, पृष्ठ संख्याचात्र सरला सहितस्यैव रसगङ्गाधरस्य।

यथा सरलाया उपोद्घाते ३५-३६ पृष्ठयोरिमान्यक्षराणि—

उन्मूलितः सह मदेन बलाद्बलारेरुत्थापितो बलभृतां सह विस्मयेन ।
नीलातपत्रमणिदण्डरुचा सहैव पाणौ धृतो गिरिधरेण गिरिः पुनातु ?,

अत्र गिरिधरेण मणिदण्डकान्त्या सह गिरिः पाणौ धृतः, मणिदण्ड कान्ति मंणौ तिष्ठेत् सा कथं पाणौ तिष्ठेत् ?, अन्य-उपमान धर्मस्य अन्यत्र उपमेये आरोपात्पदार्थ निदर्शनेति स्पष्टं सर्वेणाम् । किन्तु नागेशो व्याख्याति 'सदृशवाक्यार्थयोरैक्यारोपान्निदर्शना अर्थाद् वाक्यार्थनिदर्शना, कोवाऽऽलङ्कारिको नोपहसेदिदम् ? इति । अत्र मणिदण्डमात्रकान्तिः पाणावारोपणीयेति सरलायाः सारल्यमात्रम्, अपितु नीलातपत्रसहितस्य मणिदण्डस्य कान्तिः, सच वाक्यार्थो न पदार्थः, एवं न केवले पाणावारोपः किन्तु धृतगिरौ पाणौ, सोपि वाक्यार्थो न पदार्थः, ४८६ पृष्ठस्थितस्य 'नीलातपत्रमणिदण्डरुचोगिरिधारणोत्तरकालिकत्वात्' इति मूलस्य स्वारस्यमप्यत्रैव नतु सरलाया अर्थे, निदर्शना प्रकरणस्थले लक्षणमपि एतादृशमेव वाक्यार्थनिदर्शनायाः, एवञ्च-वाक्यार्थविदर्शनायाः स्फुटत्वे सर्वे आलङ्कारिका उपहसेयुः मर्मप्रकाशं यदि विलुप्तमलङ्कारविज्ञानं, नास्ति जगतीति स्फुटं ममवचः, अलङ्कार शास्त्रेऽप्रविष्टया सरलया तु किमन्यत्प्रक्रियेत ।

उपोद्घाते ३६ पृष्ठे चेदृशी सरला—प्राचीसन्ध्या इति पद्यस्थ परम्परितरूपके नयनशोणिम्नि ज्वालत्वाद्यारोपस्तदैव भवेद्यदा क्रोधे कालानलत्वारोपो भवेत्, किन्तु राज्ञां हितैष्यपि नागेशो राज्ञि अनलसमारोपं करोति धन्यः, इति । पद्यमिदं ३०९ पृष्ठे मालापरम्परितरूप कस्योदाहरणमीदृक्—

प्राची सन्ध्यासमुद्यन्महिमदिनमणेर्मनिमाणिक्यकान्तिः ज्वालामाला कराला कवलितजगतः क्रोधकालानलस्य आज्ञा कान्तापदाम्भोरुहतलविगलन्मञ्जुलाक्षारसानां क्षोणीन्दो संगरे ते लसति नयनयोरुद्भटा शोणितश्रीः

एतद्विषयेऽत्रैव मूलम्-इह तु नयनशोणिम्नि ज्वालाद्यारोपोऽनलसमारोपं नियमेनापेक्षते, तत्रैव 'राज्ञीतिशेषः' एतावन्मात्रं मर्मप्रकाशः, पुनरप्येतद्विषये ३१४ पृष्ठे 'तत्र प्राचीत्यारम्य दर्शित इत्यन्तं मूलम्, तच्च सरला टीकते, तत्र सरलामते महिमनि दिनमणेरारोपो दिनमणेः प्राच्याः संध्यायाश्च राजसम्बन्धिन्यां शोणिमश्रियि आरोपः, एवं क्रोधे कालानलस्य कालानलसम्बन्धि ज्वालामालायाः नृपसम्बन्धिन्यां नयनशोणिमश्रियि च आरोप इति सरलाया अभिप्रेतं प्रतिभाति, परमस्मिन् प्रकरणेऽन्वत्र च मूलकारोऽसकृदवोचत्-परम्प-

रितारोपे यत्सम्बन्धिनो यत्सम्बन्धिनि आरोपस्तस्य तस्मिन्नारोपः, अथवा यस्य यस्मिन्नारोपस्तत्सम्बंधिनस्तत्सम्बंधिनि आरोपः, श्रुतश्चात्र नयनशोणिमश्रियोराजराजसम्बंधित्वम् पद्ये स्फुटतया, तादृशशोणिमश्रियि दिनमणेः संध्याया आरोपो दिनमणेराज्ञि आरोपस्य, एवं कालानलसम्बन्धि ज्वालामालायाः नयनशोणियश्रियि आरोपो राज्ञि कालानलसमारोपस्य कारणमिति कविसम्प्रदायसिद्धं ग्रन्थाभिप्रेतञ्च मर्मप्रकाश प्रकाशितम्, महिम्नः सम्बन्धिन्येव दिनमणेः संध्याया आरोपो महिमनि दिनमणेरारोपं समर्थयेत् न राजसंबन्धिनि, एवं क्रोध सम्बन्धिनि कालानल ज्वालमालाया आरोपः क्रोधे कालानलारोपं समर्थयेत् न तु राजसंबन्धिनि इति अविप्रतिपन्नः पन्थाः आलङ्कारिकग्रन्थानामस्य च ग्रन्थस्य। एतादृशमर्मप्रकाशेऽप्युपहासो मुग्धायाः सरलायाः, यदि च अङ्कुरेत् कस्यचिच्चित्तभूमौ शोणिमश्रियि महिम्नः क्रोधस्य च सम्बन्ध इति अङ्कुरतु नाम परं न विकसेत्, वर्त्ततां नामकथञ्चित् कुत्रचिज्जगति पद्ये त्वस्मिन् तेशब्देन राजसम्बन्ध एव कविसम्मतः शोणिमश्रियि न तु महिमक्रोधयोः, राजहितैषीति सरलाया आक्षेपवचसोऽभिप्रेतं न सम्यक् स्फुरति। यदि राज्ञि अनलसमारोपोऽनुचितोऽभिप्रेयात् तदा कवितायामपि न्यूनता आपतति वहुश उपलब्धो, रसगङ्गाधरेऽपि आवृत्त्या रामचन्द्रेऽनलसमारोपोऽधिगम्येत।

यत्तु उन्मूलित इति पद्यस्थोन्मूलितशब्दे विप्रतिपत्तिप्रदर्शनं तत्तु अकिञ्चित्करम्, खड्धातोर्भेदनमपि विदारणमेव खन्धातोखदारणरूपम्, कोऽनयोर्विशेषः?, सत्यञ्चश्रुतं सरलया भागवतादिकं परं किं तयाऽवधारितं यन्मूलतो गोवर्धनस्योत्पाटने गोवर्धनतले जलस्य संभवाज् जले प्लवमाना गोपजना आसन् अथवा स्थल एव?, पर्वतानां मूलन्तु भूमेरन्तस्तले निरूढं भवति।

उपोद्घाते ३६ पृष्टे सरलाया इमान्यक्षराणि—निर्भिद्यक्ष्मारुहाणामिति पद्यस्थभ्रान्तिमद्धनो भ्रान्तिमतां तिरश्चामपि एवम् आनन्दं जनयतीति जगदानन्दहेतुर्भगवानितिव्यज्यते इत्यनेन तिरश्चामेव भ्रमं स्फुटमाह पण्डितराजः, किन्तु स्वर्णदण्डभ्रमेण भृशं पोषितं मनोयेषां ते जनाः पादान् किरणान् धित्सन्ति धर्तुमिच्छन्ति इति जनानां भ्रममाह इति नागेशभट्टः, स्थापनार्थस्य धाधातोर्ग्रहणे न क्वचित्प्रयोगः। अत्रहि वास्तवोऽयमर्थः—वृक्षाणामतिगहनं मध्यं निर्भिद्य गोत्रां पृथिवीं गतेषु प्रातःकालिककिरणेषु स्वर्णदण्डभ्रमण संभृतमानसाः शुकशिशवः पादान् स्वचरणान् धित्सन्ति स्थापयितुमिच्छन्ति तिर्यक्प्रसृतशाखासु स्थित्यभ्यासित्वात्, विविच्यतामिदानीं कणेहत्यमार्मिकत्वं नागेशमहोदयस्य, शुकशावका इति वक्तव्ये शुकवालका इति प्रयोग एव साहित्य-

पराक्रमणपराक्रमं सूचयेत्, इति च पदोक्त्या शुकशिशव इति शिशुपदेन भ्रान्तिपात्रतासंघटनौचित्येन च तिरश्चामेव आनन्दः स्वयमुपनिबद्धः कविनेति समर्थयति, इति। तत्रैव व्याकरणफक्किकाऽभ्यासित्वेन च नागेशमुपहसति च।

१९६ पृष्टे सम्पूर्णपद्यम्

निर्भिद्य क्ष्मारुहाणामतिघनमुदरं येषु गोत्रां गतेषु
द्राघिष्ठस्वर्णदण्डभ्रमभृतमनसोहन्त धित्सन्ति पादान् ॥
यैः संभिन्नदलाग्रप्रचलहिमकणे दाडिमीबीजबुद्ध्या
चञ्चुचाञ्चल्यमञ्चन्ति च शुकशिशवस्तेंऽशवःपान्तु भानोः ॥

अत्र मर्मप्रकाशस्याभिप्रायः—पादान् किरणान्, पूर्वार्धेन जनानां भ्रमनिरूपणम्, तत्र आश्चर्यद्योतकस्य हन्तपदस्य सम्यक् स्वारस्यम्, मूलस्थतिरश्चामपीत्यत्रापिशब्देन जनानां भ्रम आनन्दोवा मूलाभिप्रेत इत्यत्र न विवादः प्रतिभाति, सरला तु पद्यानुक्तविधया जनानन्दं लोकप्रसिद्धं वर्णयेत्, मर्मप्रकाशस्तु पद्योक्तविधयाऽपि वर्णयति, सरलातु उभयवाक्ये एकमेव कर्तृपदं योजयति चकारेण क्रियां समुच्चिनोति, मर्मप्रकाशेन कर्ताऽपि समुच्चीयते। पादशब्दस्य श्लिष्टतया धातोरर्थान्तिरवशात्तिर्यग्भ्रमो भागद्वयेनापि वर्णितो भवतु परं पूर्वार्धस्य जनभ्रमेऽपि अवश्यं तात्पर्यं कवेर्मूलस्य चेति मर्मप्रकाशस्याभिप्रायः। तत्र प्रथमं कारणं हन्तपदम्, तिरश्चां भ्रमस्वभावात् तद्भ्रमे आश्चर्याभावात्, मनुष्यभ्रमस्य तु आश्चर्यान्वितत्वं तर्कबुद्धिप्रसिद्धेः, द्वितीयं निमित्तं सन्प्रत्ययः मनुष्यभ्रमस्य सद्योनिवृत्तिसम्भवादिच्छामात्रं न तु क्रियाऽपि वर्णिता, तिरश्चान्तु क्रियाऽपि वर्ण्यते, क्रियाविघाताच्च तेषां भ्रमोनिवर्तते, एतच्च मर्म हन्तेत्याश्चर्यम्, अञ्चन्तीत्यस्य व्यापारं कुर्वन्तीतिव्याख्यानेन नागेशमहोदयेन प्रकाशितम्, मनुष्यभ्रमे एव स्वर्णस्योपयोगो न तु तिर्यग्भ्रमे, फक्किकाभ्यासिनो वैयाकरणा अर्धमात्रायामपि अपेक्षात्मकां दृष्टिं निक्षिपन्तो भवन्ति ध्वनिमार्गे बुधाः, सरलातु लघुकौमुदीप्रक्रियामपि विस्मृतवती कथं पश्येदिदम्। नास्माकमत्युक्तिः, पश्यन्तु पाठकाः परिसंख्याप्रकरणसरलां यत्र राजपुरुषेत्यस्य प्रातिपदिकसंज्ञा समासग्रहणेनोद्दङ्किता वर्तते, राजपुरुषेत्यवस्थायां प्रातिपदिसञ्ज्ञायाः न फलमपितु राजन्ङस्पुरुषसु इत्यवस्थायाम् प्रातिपदिकसञ्ज्ञां कुर्वन्ति लघुकौमुदीपाठकाश्छात्रा, एवञ्च प्रकाशितं मर्मापि न पश्यति सरला तदा अनुक्तमभ्यूहितं स्वर्णपदस्वारस्यं तृतीयं कथं पश्येत्, न शुकशिशवः स्वर्णदण्डे स्थित्यभ्यासिनः, मनुष्या एव स्वर्णदण्डं धर्तुमिच्छेयुः,

कथं नाम मार्मिकविदुष आलङ्कारिकाचार्यस्यापि नागेशमहोदयस्य सरलेव स्वर्णपदे दृष्टिर्नापतेत् ?, कथम्वा तेन स्वर्णपदस्य पादपूर्तिमात्रत्वं सह्येत ?, सरलया तु कल्पनादृष्टेरभावात्सोढुं शक्यते।

धाधातोर्धातुपाठानुशासनात् धारणे सिद्धां शक्ति न मनुते स्थापनायाञ्च प्रवीति तदा किं कार्यम् ?. एवमाग्रहिलायै पाणौ स्थापयितुमिच्छन्तीति अपि व्याख्यानं रोचताम्, बालकशब्दप्रयोगस्तु शावकापेक्षया प्रसिद्धतया-टीकायां कृतो न तु कवितायाम्, अन्यच्च किमपि व्याकरणविषयकास्फूर्ति-निबन्धनं सरलाकृतं मर्मप्रकाशोपहासमुपवर्ण्य समापयाम्यमुं लेखन्।

३६ पृष्टे उपोद्घातेऽधस्तनानि सरला विजृम्भितानि—पुरःपुरस्तादरि-भूपतीनामिति अरिभूपतीनां पुरोनगर्यः भस्मावशेषा भवन्तीत्यादिः स्फुटोऽर्थः, किन्तु नागेशेन पुरः पुरस्तात् पूर्वं पूर्वमिति वैयाकरणानामतीव हास्यास्पदं द्विर्भावं प्रयुज्य श्लोकमेवासंगतं चकार, तथाहि भस्मावशेषा इत्यत्र बहुव्रीहि समासाश्रयणे अरिभूपतीनामिति षष्ठीविभक्तेरनन्वयः, तदाहि अरिभूपतिरिति प्रथमायोग्या, शत्रुरूपाणां राज्ञां भस्मरूपाः शेषाः भवन्तीति तत्कृते व्याख्या-नेऽपि राज्ञामितिषष्ठ्याः शेषा इत्यत्रान्वये शेषा इत्यस्थ चोद्देश्यसमर्पकत्वे राज्ञां शेषाः कीदृशा भवन्तीति विधेयसमर्पकपदाभावाद् वाक्यार्थानिष्पत्तिः, भस्मशेषा इत्यस्य विधेयसमर्पकत्वे के भस्मशेषा जायन्ते इत्याकाङ्क्षा जायते न तु केषामिति। किञ्च सर्वस्यद्वे इति सूत्रेण पुरःपुरः, पुरस्तात् पुरस्तात्, इति वा द्विर्भावोयुक्तो न तु. अस्प्रत्ययान्त अस्ताति प्रत्ययान्तयोः, असाम्प्रदा-यिकत्वात्, ४१६ पृष्टे भस्मैवावशिष्टांशो यासां ता इति भस्मशेषा इत्यस्य व्याख्यानं सरलाकृतं वर्तते। ४१६ पृष्टे पद्यम्—

पुरःपुरस्तादरिभूयतीनां भवन्ति भूवल्लभ भस्मशेषाः।
अनन्तरं ते भृकुटीविटङ्कात् स्फुरन्ति रोषानलविस्फुलिङ्गाः॥

अत्र मर्मप्रकाशः—राजवर्णनमिदम्, हे भूबल्लभः पुरःपुरस्तात् पूर्वंपूर्वं शत्रुरूपाणां राज्ञां भस्मरूपाः शेषा अवशेषा भवन्ति, एतावन्मात्रं पूर्वार्धस्य व्याख्यानं करोति, अत्रायं विवेकः— सरलामते शत्रुनगरीणामेव भस्मावशेषाः, मर्मप्रकाशमते शत्रुनृपाणां भस्मावशेषाः, नगरीविनाशे शत्रुसत्त्वे पुनर्नगरीणा-मुत्पादसंभवात् न तादृशोत्कर्षो राज्ञः सिध्यति निश्शत्रुतावर्णनेन भूयानुत्कर्प एवं भावना नागेशकल्पस्य नागेशस्य। किञ्च पूर्वं पूर्वमिति व्याख्याने यदा-यदा क्रोधकृतभृकुटीविपरिणामस्तदा तदा ततः प्रागेव शत्रवोभस्मसाद्भव-न्तीति व्यञ्जनासाहाय्येन राजोत्कर्षं साधयति।

सरला च अज्ञा उद्धता च न नागेशमहोदयलेखाद् व्याकरणमपि शिशिक्षति, अज्ञानां त्वरितंजायते महान् सम्प्रदायः, अत्रत्य सरलाक्षराण्युपेक्ष्यापि व्याकरणकुलविद्वेषमूलं भस्मैवावशिष्टांशो यासां ता इति व्याख्यानं सरलाकृतमवदधतु पाठकाः, अवशिष्टपदप्रदानेन शेष इत्यत्र कर्तरि कर्मणि वा प्रत्ययः सरलयाऽभिप्रेयते, हन्त हा तथासति पूर्वनिपातमापतितं न पश्यति स्वनिपातमिव, अन्धस्यकृते सूर्यं इव किं कुर्वीत सहृदयताशून्यायाः सरलायाः कृते मर्मप्रकाशः ?, भावप्रत्ययान्तत्वमन्तरा शेषार्थस्य कथं विशेष्यत्वसंभवः ?, विशेष्यतया च व्याख्याति नागेशः, भावप्रत्ययान्तत्वे च के भस्मशेषा इति सरलाया एवाकाङ्क्षा नतु विदुषाम्, यथा कस्य पाक इत्येवाकाङ्क्षा न तु कः पाकः, यथा अरिभूपतयोभस्मनाऽवशिष्यन्ते अशिष्यन् वा इत्यत्र क्रियासामानाधिकरण्ये तृतीया तथाऽत्रापि भस्मनोऽपि क्रियासामानाधिकरण्यभूह्यम् । तथा च नागेशमते अरिभूपतीनामित्यत्र कारकविभक्तिप्रयुक्ताऽपि मार्मिकाणां व्यञ्जना समुल्लसतुतभाम् । अन्ये च विधेयाविमर्शकादिविषयकाः प्रश्ना निर्मूला एव किं लेखवर्धनेन ? ।

परं द्विर्भावमाक्षिपन्ती भङ्गुरावयवा सरला तर्ककर्कशप्रज्ञाप्रवेश्यं पाणिनीयं पञ्जरमपि स्पृशति अहो साहसं तस्याः, न पश्यति द्विर्वचनोपायं तदा समानार्थकस्य पदस्य द्विःप्रयोगमेव कथं न अनुते ?; समानार्थकपदस्यापि समानुपूर्वीकस्यैव द्विःप्रयोग इति सम्प्रदायस्तस्या इति चेदस्तु परमन्धः, यतः प्रसिद्धां पौनः पुन्यम्, पौनः पुनिकः, कौतस्कुतः, इत्यादौ विभिन्नानुपूर्वीं न पश्यति, तस्याः प्रक्रियायाः अवगमाय श्रद्धया गुरुकरणे कस्यचिद् व्याकरणविदः शरणे द्विःप्रयोगरूपद्विर्वचनपक्षे द्वित्वानन्तरं प्रत्ययद्वयेन पुरःपुरस्तादितिसिद्धिखर्गंस्यते इति किं बहुना ? ।



**अयोध्या साप्ताहिक संस्कृत पत्र २५।३।४७ ई० संस्कृतमय प्रकाशित**

# रसगङ्गाधरटीकयोर्विमर्शः

रसगङ्गाधर की अनेक तन्त्रों में स्वतन्त्र श्री नागोजी भट्ट से विरचित गुरुमर्म प्रकाश टीका मूल निर्माण के बाद थोड़े ही समय में रसगङ्गाधर की सेवा करने लगी, टीकाकार की सर्वतोमुखी विद्वत्ता प्रसिद्ध होने से वर्णन की अपेक्षा नहीं करती, लेकिन अलङ्कार शास्त्र में भी इनका बड़ा प्रभाव है ऐसा स्पष्ट कहा जा सकता है,

प्रदीपउद्योत की परम्परा से बाद में होने वाली काव्यप्रकाश टीकाओं में तथा काव्य-प्रकाश की पठन-पाठन शैली में इसका प्रभाव रूढमूल देखा जाता है। उपमा के विषय में सादृश्य और साधर्म्य में कितना भेद है ? इव आदि शब्दों में सादृश्य आदि की शक्ति, श्रोती आर्थी आदि भेदों का जीवन क्या है ? इत्यादि वैयाकरण सिद्धान्त लघु-मञ्जूषा में महाभाष्य आदि के प्रदर्शन के द्वारा युक्ति और प्रयुक्तिओं से इन्होंने वैसा व्यवस्थित किया है जिससे यह आलङ्कारिक सिद्धांत है ऐसा कहते हुए आलङ्कारिक विद्वान् टीकाओं में तथा पढ़ाने में प्रचार किये हैं, उद्योत के विकास के पहले विरचित काव्यप्रकाश टीकाओं में ये विषय रूढ़मूल नहीं हुए थे, इनके बहुत भिन्न व्याखान होते थे, एक भी काव्यप्रकाश की व्याख्या प्रणाली प्रतिष्ठित नहीं हो पाई थी, प्रदीयगन्थ उद्योत के बिना दूसरे व्याख्यानों के ऐसा सिद्धान्त ग्रन्थ नहीं होता, उद्योत का विकाश पाकर प्रदीप सिद्धान्त ग्रन्थ हो गया, प्रदीप से नहों प्रदर्शित भी कितने पदार्थ उद्योत से द्योतित होते हुए आलङ्कारिकों से सादर गृहीत हुए ऐसा टीका-प्रटीकाओं के परिशीलन से समझ पाता हूँ। अनेक शास्त्रों के मर्मप्रकाश का व्यसन से बहुत कार्यों में सर्वदा व्यस्त नागेश महोदय की बहुत संक्षेप से लेखनशैली प्रसिद्ध है, वैसे भी गुरु मर्मप्रकाश से रसगङ्गाधर का प्रायः आधा ही अंश सेवित हुआ, आगे तो कही कुछ जो मिलता हैं वह तो उनके किसी शिष्य से टीका किया हुआ समझता हूँ, इसका साधन तो दूसरे लेख से संभव है इसलिये वाचकों को यहां सन्तोप करना चाहिये, उस पर भी लेखक परम्परा से पैदा हुई अशुद्धि जड़ नहीं छोड़ती, ऐसा भी मिलेगा कि समान विषय और समान भाव में उद्योत में शुद्ध मिलता है और मर्मप्रकाश में बहुत अशुद्ध होने से दुर्बोध हो गया है, यह सम्पादक-प्रकाशक विद्वानों की उपेक्षा है, उसका भी दूसरा कारण है, तब मर्मप्रकाश का क्या विकाश है ? यह स्वयं समझ लेना चाहिये, जैसे प्रायः बहुत पुस्तकों में सहोक्ति प्रकरण में मूल के खण्डन के प्रसङ्ग में 'राज्ञा सह सेना आगच्छति इत्यत्र तृतीयापत्ते' मर्म-प्रकाश का अशुद्ध पाठ आज तक शुद्ध नहीं हुआ, और अशुद्धि के कारण सरला का अनेक प्रकार के उपहास को सहता है, स्वतन्त्र ग्रन्थ मञ्जूषा में अपने सिद्धान्त की प्रसिद्धि के लिए भागवत वचनों का अनेक उद्धरण वैयाकरण पढ़ते हैं तो भी सरला से

किया गया नागेश का भागवत से परिचय न होना आक्षेप सहते हैं, लेखक परम्परा से केवल वर्णों का ही विपरीत होना नहीं चला है किन्तु कहीं २ पद का भी है, कहीं ऐसा भी मिलता है कि मूल लेखक से दूसरी जगह जोड़े हुए वाक्य बाद के लेखकों से दूसरी जगह जोड़ा गया है तथा विपरीत मुद्रण हुआ है, इसके संशोधन में बड़ा प्रयास है, सरला की भूमिका में संगृहीत बहुत विषयों पर विचार किया हूं, उसमें अधिकतर शुद्ध मालूम पड़ते हैं, दूसरे भी प्रायः समय से शुद्ध हो जायेगें, उसमें मर्मप्रकाश की मार्मिकता का अनुभव करता हूं।

दूसरी नई सरला टीका तो मेरे दूसरे लेख से पाठकों की परिचित हुई है, बड़े विद्वान् के आक्षेप वचन से ही प्रतिष्ठा चाहती है, वस्तुतः इस ग्रन्थ का अधिकारी नहीं है, मर्मप्रकाश से प्रकाशित मर्मों का स्पर्श नहीं करती, उससे आक्षिप्त स्थलों का ही विवेचन पाठकों की सेवा के लिये उपहृत करता हूं और आशा करता हूं कि पुस्तकों को खोलकर अवश्य विचार से मुझे अनुगृहीत करेंगे। इसमें पृष्ठ संख्या सरला सहित रसगङ्गाधर की है। जैसे कि सरला के उपोद्धात में ३५-३६ पृष्ठों में ये अक्षर हैं—

**उन्मूलितः सहमदेन बलाद्बलारेरुत्थापितो बलभृतां सह विस्मयेन।**
**नीलातपत्रमणिदण्डरुचा सहैव पाणौ धृतोगिरिधरेण गिरिः पुनातु॥**

इन्द्र के घमण्ड के साथ ही बल से उखाड़ा गया बलशालीओं के विस्मय के साथ उठाया गया नीले छते के मणिदण्डे की रुचि के साथ ही गिरधर भगवान् द्वारा हाथ में रखा हुआ पर्वत पवित्र करे। यह पद्य का अर्थ हुआ। यहां मणिदण्ड की कान्ति के साथ गिरधर से हाथ में पर्वत रखा गया, मणिदण्ड की कान्ति मणि में रहे, हाथ में कैसे रह सके ? दूसरे उपमान के धर्म का दूसरी जगह उपमेय में आरोप से पदार्थ निदर्शना यह सभी को स्पष्ट है, किन्तु नागेश व्याख्यान करते हैं कि सदृश वाक्यार्थों के ऐक्य आरोप से निदर्शना है, अर्थात् वाक्यार्थनिदर्शना है। कौन आलङ्कारिक इसको न हसे ?, इति।

यहां केवल मणिदण्ड की कान्ति का हाथ में आरोप है ऐसा सरला का समझना उसका सारल्य मात्र है, किन्तु जिसके ऊपर नीला छता ताना हुआ है ऐसे मणि-

दण्डे की कान्ति का आरोप है, वह अनेक पदों का अर्थ है इसलिये वाक्यार्थ है, एक पद का अर्थ न होने से पदार्थ नहीं है, इसी प्रकार उसका आरोप भी केवल हाथ में नहीं है, बल्कि जिस हाथ के ऊपर नीला पर्वत रखा हुआ है वैसे हाथ में है, वह वाक्य का अर्थ है पद का अर्थ नहीं है, इसलिये यहाँ वाक्यार्थ का वाक्यार्थ में आरोप है पदार्थ का पदार्थ में आरोप नहीं है, ४८९ पृष्ठ पर 'नीले छते के मणिदण्ड की कान्ति हाथ में पर्वत धारण करने पर है' ऐसा मूल में लिखा है, वह मर्मप्रकाश के अर्थ में ही समन्वित होता है सरला के अर्थ में विरुद्ध पड़ता है, निदर्शना प्रकरण में वाक्यार्थ निदर्शना का ऐसे ही लक्षण और उदाहरण भी हैं, इस प्रकार वाक्यार्थ निदर्शना स्फुट होने पर यदि सभी आलङ्कारिक मर्मप्रकाश की हसी उड़ावें तो इस समय अलङ्कार विज्ञान विलुप्त हो गया संसार में है ही नहीं, ऐसा मेरा स्पष्ट कथन है, अलङ्कारशास्त्र में अप्रविष्ट सरला दूसरा क्या करे ?

उपोद्घात ३६ पृष्ठ पर ऐसी सरला–प्राची सन्ध्या इस पद्य के परम्परित रूपक में आँखों की लाल शोभा में ज्वाला आदि का आरोप तब होय जब क्रोध में कालानल का आरोप हो, किन्तु राजाओं की हितैषी भी नागेश राजा में काल अग्नि का आरोप करते हैं धन्य हैं इति, ३०९ पृष्ठ पर यह पद्य मालापरम्परित रूपक उदाहरण ऐसा है—

जो अच्छे प्रकार उदय लेती हुई महिमा वाले सूर्य की मानमणि की कान्ति प्रातः सन्ध्या है, जो संसार का ग्रसन करने वाले क्रोध काल आग की भयंकर ज्वालाओं की माला है, जो कान्ता के चरण कमल की तली से टपकती हुई सुन्दर लाक्षारसों की आज्ञा है, हे पृथ्वीपति संग्राम में तुम्हारे आँखों में वह पूरा तेज लाल शोभा चमक रही है। इस विषय पर यहीं नीचे लिखा मूल है—यहाँ तो आँख की लाली में ज्वाला आदि का आरोप आग के आरोप की अवश्य अपेक्षा करता है, यहीं पर मर्म प्रकाश इतना ही है कि राजा में ऐसा शेष है, अर्थात् मूल में कहा गया आग का समारोप राजा में समझना। फिर भी इस विषय में ३१४ पृष्ठ पर तत्र प्राची यहां से शुरू करके दर्शितः तक मूल हैं, उसकी सरला टीका करती है, वहाँ सरला के मत में महिमा में दिन मणि सूर्य का आरोप और सूर्य की प्रातः सन्ध्या का राजा की आंख लाली की

शोभा में आरोप है, इसी प्रकार क्रोध में काल आग का तथा काल आग की ज्वाला माला का राजा की आँखलाली शोभा में आरोप है ऐसा सरला का अभिप्राय मालूम पड़ता है, लेकिन परम्परित रूपक के रहस्य का ज्ञान न होने से उसका ऐसा औधत्य है। यहाँ और दूसरी जगह मूलकार अनेक वार कहे हैं कि परम्परित आरोप में जिसके सम्वन्धी का जिसके सम्वन्धी में आरोप होता है उसका उसमें आरोप होता है, अथवा जिसका जिसमें आरोप होता है उसके सम्बन्धी का उसके सम्वन्धी में आरोप होता है, आँखलाली की शोभा राज की सम्वन्धी है ऐसा पद्य के ते शब्द से स्पष्ट सुना गया है, वैसी आँखलाली शोभा में सूर्य की सन्ध्या का आरोप राजा में सूर्य के आरोप का कारण होगा, इसी प्रकार काल आग की ज्वाला माला का आँखलाली शोभा में आरोप राजा में काल आग के आरोप का कारण होगा, यह कवि सम्प्रदाय से सिद्ध ग्रन्थ का अभिप्रेत है तथा मर्मप्रकाश से प्रकाशित है, महिमा के सम्बन्धी में सूर्य की सन्ध्या का आरोप महिमा में सूर्य के आरोप का कारण होगा, राजा की आँखलाली शोभा में सूर्य की सन्ध्या का आरोप महिमा में सूर्य के आरोप का समर्थन नहीं कर सकता, इसी प्रकार क्रोध के सम्वन्धी में काल आग की ज्वाला माला का आरोप क्रोध में काल आग के आरोप का समर्थन कर सकता है, राजा की आँखलाली शोभा में ज्वाला माला का आरोप क्रोध में काल आग के आरोप का समर्थन नहीं कर सकता, यह आलङ्कारिक ग्रन्थों का और इस ग्रन्थ का निःसंदिग्ध मार्ग है, ऐसे मर्म-प्रकाश पर भी मुग्ध सरला का उपहास, यदि किसी की चित्त भूमि पर लाली शोभा में महिमा का अथवा क्रोध का सम्वन्ध अङ्कुरित हो सके तो अङ्कुरित हो किन्तु विकसित नहीं हो पायेगा, जगत् में कहीं पर किसी प्रकार हो तो हो, इस पद्य में तो ते शब्द से राजा का ही सम्वन्ध कविसम्मत है आँखलाली शोभा में महिमा या क्रोध का सम्बन्ध नहीं। राजाओं के हितैषी इत्यादि सरला के आक्षेप वचन का ठीक अभि-प्राय नहीं मालूम होता, यदि राजा में काल आग का आरोप अनुचित है ऐसा अभि-प्राय हो तो खेद है कि उसकी कविता में भी न्यूनता आती है। यदि राजाओं पर काल आग को लागू करे तो राजाओं का हितैषी न हो सके, रूपक होने से राजा को ही काल अग्नि कहने से राजा का उत्कर्ष ही होगा कि शत्रुओं को भस्म कर देगा, रसगङ्गाधर में भी आवृत्ति से श्रीरामचन्द्र में भी आग का समारोप मिल सके।

जो कि पहले प्रदर्शित उन्मूलित इत्यादि पद्य के उन्मूलित शब्द में विरोध दिखाया गया है वह सरला का व्यर्थ है, खड्धातु का भेदन अर्थ विदारण है, वही खन् धातु का अवदारण है, इनमे क्या फरक है। ठीक ही सरला ने भागवत आदि को सुना किन्तु क्या उसने उसको गुना भी ?, कि जड़ से गोवर्धन पर्वत को उखाड़ने पर गोवर्धन के नीचे पानी संभव होने से क्या गोपजन पानी पर तैर रहे थे अथवा स्थल ही पर थे ?, पर्वतों का जड़ तो पृथ्वी में दूर तक भीतर घुसा रहता है।

उपोद्घात ३६ पृष्ठ पर नीचे अभिप्राय के सरला के अक्षर हैं—निर्भिद्यक्ष्मारुहाणामित्यादि पद्य की भ्रान्तिमान की ध्वनि में भ्रम में पड़े हुए पक्षियों के भी आनन्द को जगत् के आनन्द के कारण भगवान् पैदा करते हैं ऐसा व्यङ्ग्य होता है इत्यादि लेख के द्वारा पण्डितराज पक्षिओं के ही भ्रम को स्पष्ट कहते हैं, किन्तु सोने के दण्डे के भ्रम से पोषित है मन जिसका ऐसे जन किरणों को लेना चाहते हैं ऐसा मनुष्यों के भ्रम का वर्णन नागेश करते हैं, स्थापना अर्थ वाले धातु का ग्रहण में कहीं प्रयोग नहीं होता, यहाँ वास्तविक अर्थ यह है—वृक्षों के वहुत घने मध्य भाग को छेदकर पृथ्वी पर गये हुए जिन प्रातःकाल के किरणों में सोने के दण्डे के भ्रम से संभ्रान्त मन वाले शुगों के बच्चे अपने पैरों को रखना चाहते हैं, चारो तरफ फैली डालीओं पर ठहरने की पक्षिओं की आदत है, इस समय नागेश महोदय के मार्मिक ज्ञान का साक्षात् विवेचन करें, शुकशावक प्रयोग करने की जगह उनका शुकबालक प्रयोग ही साहित्य पर आक्रमण के पराक्रम को सूचित करे, इति, च शब्द से शिशु पद से भ्रम के पात्र का उचित संघटना से पक्षिओं का ही आनन्द कवि द्वारा स्पष्ट बताया गया है ऐसा सरला अपने मत का समर्थन करती है, और वहीं व्याकरण की फक्किका का अभ्यासी होने से नागेश का उपहास करती है, एक सौ १९९ पृष्ठ पर सम्पूर्ण पद्य है—वृक्षों के घने मध्य भाग को छेदकर पृथ्वी पर गये हुए प्रातःकाल के किरणों में सोने के दण्डे के भ्रम से संभ्रान्त मन वाले मनुष्य किरणों को लेना चाहते हैं ऐसा मर्मप्रकाश मत में, सरला मत में वैसे शुगों के बच्चे उस पर अपना पैर रखना चाहते हैं, पत्तों के आगे भाग पर चञ्चल ओंस के विन्दु पर किरणों के सम्पर्क से अनार के दाने की बुद्धि होने से शुगों के बच्चे अपने ठोरों को चलाते हैं, वे सूर्य के किरण रक्षा करें, ऐसा उस पद्य का अर्थ है।

यहां मर्मप्रकाश का अभिप्राय—पाद शब्द का अर्थ किरण है, पद्य के पूर्व अर्थभाग से मनुष्यों के भ्रम का निरूपण है, उस भ्रम में आश्चर्य के द्योतक हन्त पद का अधिक स्वारस्य है, मनुष्यों के भ्रम में ही आश्चर्य है, पक्षिओं का भ्रम अधिक स्वाभाविक है, मूल में तिरश्चामपि इसमें अपि शब्द होने से मनुष्यों का भ्रम या आनन्द मूल का अवश्य अभिप्रेत है इसमें विवाद नहीं है, सरला तो पद्य में नहीं कही हुई रीति से लोक प्रसिद्ध जन आनन्द का वर्णन कर सकती है, मर्मप्रकाश तो पद्य में कही रीति से भी वर्णन करता है, सरला दोनों वाक्यों में एक ही कर्ता रखती है चकार से क्रिया का समुच्चय वताती है, मर्मप्रकाश कर्ता का भी समुच्चय करता है, पाद शब्द में श्लेष करके धातु का अनेक अर्थ में शक्ति मान कर दोनों भागों से पक्षि भ्रम का किसी प्रकार वर्णन हो किन्तु मनुष्य भ्रम में तात्पर्य कवि और ग्रन्थकार का अवश्य है, ऐसा मर्मप्रकाश का अभिप्राय है। उसमें पहला कारण हन्त पद है, पक्षिओं का भ्रम स्वभाव होने से उनके भ्रम में आश्चर्य नहीं है, मनुष्य भ्रम में आश्चर्य है क्योंकि उसकी तर्कबुद्धि प्रसिद्ध है, द्वितीय कारण सन्प्रत्यय है, मनुष्य भ्रम बहुत शीघ्र हट सकता है, इसलिये भ्रम से इच्छा ही हो पाई क्रिया का वर्णन नहीं किया गया, पक्षीओं के भ्रम में क्रिया का भी वर्णन हुआ, उनका भ्रम क्रिया के विघात से हटता है, इन रहस्यों को नागेश महोदय हन्त का आश्चर्य और भ्रान्ति का व्यापार करते हैं ऐसे व्याख्यान से प्रकाशित किये हैं, फक्किका के अभ्यासी वैयाकरण आधी मात्रा में भी अपेक्षा रूप दृष्टि को डालते हुए ध्वनि मार्ग में बुध हैं, सरला तो लघुकौमुदी प्रक्रिया को भी भूल गई उसको कैसे देखें ?, यह मेरी अत्युक्ति नहीं है, पाठक परिसंख्या प्रकरण में सरला को देखें जिसमें राजपुरुष की प्रातिपदिक सञ्ज्ञा समास ग्रहण से लिखी गई है, राजपुरुष अवस्था में प्रातिपदिक सँज्ञा का फल नहीं है किन्तु राजन्ङस् पुरुषसु इस अवस्था में प्रातिपदिक संज्ञा लघुकौमुदी पढ़ने वाले छात्र करते हैं, इस प्रकार मर्मप्रकाश से प्रकाशित मर्म को भी जब सरला नहीं देखती तब नहीं कहे हुए को समझने के लिये तीसरा स्वर्ण पद का स्वारस्य मर्म को कैसे देखें ?, मनुष्यों के भ्रम में ही सुवर्ण का उपयोग है पक्षिओं के भ्रम में नहीं, पक्षी सोने के दण्डे पर ठहरने के अभ्यासी नहीं है,

मनुष्य ही सोने के दण्ड को लेना चाह सकते हैं, मार्मिक विद्वान् आलङ्कारिकाचार्य नागेश महोदय की दृष्टि सरला के ऐसा स्वर्णपद पर क्यों नहीं पड़े ?, कैसे उसका पादपूर्ति मात्र प्रयोजन माने ?, सरला तो कल्पना दृष्टि न होने से वैसा भी मान सकती हैं।

धा धातु का धातु पाठ अनुशासन से धारण में शक्ति सिद्ध है उसको नहीं मानती, स्थापना अर्थ में मानती हैं, क्या किया जाय ?, ऐसी हठी को हाथ में रखना चाहते हैं ऐसा भी अर्थ रुचता, बालक शब्द शावक शब्द की अपेक्षा अधिक प्रसिद्ध है तो भी उसका प्रयोग टीका में किया गया है कविता में नहीं, और एक व्याकरण की स्फुर्ति न होने के कारण रटना से किये गये मर्मप्रकाश के उपहास को दिखाकर इस लेख को समाप्त करता हूँ।

३६ पृष्ठ उपोद्घात में सरला के नीचे खेलवाड़ हैं—पुरः पुरस्तादरिभूपतीनां पद्य में शत्रु राजाओं की नगरीआं भस्मशेष होती हैं इत्यादि अर्थ स्पष्ट हैं, किन्तु नागेश पुरः पुरस्तात् का पहले पहले अर्थ करते हुए वैयाकरणों के हसनेलायक द्वित्व का प्रयोग करके श्लोक ही को असंगत कर दिये हैं, जैसे कि भस्मशेष शब्द में बहुव्रीहि मानने पर भूपतीनां की षष्ठी विभक्ति के अर्थ का अन्वय नहीं होगा, वैसा होने पर अरिभूपति में प्रथमा योग्य हो जायेगी, शत्रु राजाओं के भस्म रूप शेष होते हैं ऐसे उनके व्याख्यान से षष्ठी विभक्ति के अर्थ का शेष में अन्वय करने पर शेष उद्देश्य समर्पक है, कैसा शेष ? यह आकाङ्क्षा होगी, विधेय समर्पक पद है नहीं इसलिए वाक्य का अर्थ ही नहीं बनेगा, भस्मशेषा को विधेय समर्पक मानने पर कौन भस्म शेष ऐसी आकाङ्क्षा होगी किसका भस्मशेष ऐसी नहीं, और भी सर्वस्य द्वे इस सूत्र से पुरः पुरः अथवा पुरस्तात् पुरस्तात्, ऐसा द्विर्वचन होगा असुप्रत्ययान्त और अस्ताति प्रत्ययान्त का नहीं, क्योंकि वैसा सम्प्रदाय नहीं है। ४१६ पृष्ठ पर भस्म ही अवशिष्ट अंश है जिनका वे ऐसा सरला का व्याख्यान है, ४१६ पृष्ठ पर सम्पूर्ण पद्य है। हे राजन् पहले पहले शत्रु राजाओं के भस्म रूप शेष होते हैं मर्मप्रकाश मत में, सरला मत में हे राजा पहले शत्रु राजाओं की नगरीआं भस्मरूप अवशेष वाली हो जाती हैं, पीछे तुम्हारे भौवें के विकट परिणाम से रोष आग की चीनगारीआं चमकती हैं, ऐसा उसका साधारण अर्थ है।

इस पर मर्मप्रकाश—यह राजा का वर्णन है, हे राजा पहले पहले शत्रु रूप राजाओं के भस्मरूप अवशेष होते हैं, इतना ही पूर्वार्ध का व्याख्यान करता है।

इस पर यह विचार—सरला के मत में शत्रुओं की नगरी का भस्म अवशेष हुआ, मर्मप्रकाश मत में शत्रु राजाओं का भस्म शेष हुआ, नगरीओं का विनाश होने पर भी शत्रुओं के रहने से फिर नगरी का निर्माण संभव होने से राजा का अच्छा उत्कर्ष नहीं होता, सर्वथा शत्रुओं के विनाश से राजा का बड़ा उत्कर्ष सिद्ध होता है यह नागेश कल्प नागेश की भावना है, और भी—द्विर्वचन से वीप्सा द्योतित होगी, जब जब तुम्हारे भौवें का विकट रूप होगा तब तब उसके पहले शत्रु राजाओं का भस्मशेष होगा, इससे भी व्यञ्जना की सहायता से राजा का उत्कर्ष सिद्ध होगा, इसी अभिप्राय से राजहितैषी मर्मप्रकाश राज वर्णन लिखता है।

यहाँ के सरला के अक्षरों की उपेक्षा करके भी व्याकरण कुल के विद्वेष का मूल भस्म ही अवशिष्ट अंश है जिनका वे इत्यादि सरला से किये गये व्याख्यान पर पाठक ध्यान दें, अवशिष्ट पद देने से शेष शब्द में कर्ता या कर्म में प्रत्यय है ऐसा सरला का अभिप्राय है, हाहन्त वैसा होने पर आपड़े पूर्व निपात को अपने निपात के ऐसा नहीं देखती, अन्ध के लिये सूर्य के ऐसा सहृदयता शून्य सरला के लिये मर्मप्रकाश क्या करें, शेष शब्द भाव प्रत्ययान्त प्रसिद्ध है, वह अभेद सम्बन्ध से किसी का विशेष्य ही होगा, भाव अभेद सम्बन्ध से द्रव्य या गुण का विशेषण नहीं हो सकता यह शब्द स्वभाव तथा वस्तु स्वभाव है, नागेश महोदय शेष शब्द के अर्थ को विशेष्य बनाते हैं, शेष भाव विशेष्य तथा विधेय है, इसलिए सरला से पहले लिखा गया उद्देश्य विधेय का कलह शब्दार्थ व्युत्पत्ति विकलता के कारण है, भाव प्रत्ययान्त मानने पर कौन भस्मशेष ? ऐसी सरला ही की आकांक्षा हो सकती है विद्वानों की नहीं, भाव क्रिया है, क्रिया को कर्म की आकांक्षा होगी, कर्म में षष्ठी होती है, जैसे कौन पाक ऐसी आकांक्षा नहीं होती किसका पाक ऐसी होती है, जैसे शत्रु राजाओं का भस्म रहा इस वाक्य में भस्म का क्रिया के साथ सामानाधिकरण्य है वैसे शेष शब्द के अर्थ क्रिया के साथ भस्म का सामानाधिकरण्य होने से कर्मधारय समास है, वैसे ही नागेश मत के कारक विभक्ति होने से मर्मज्ञों का व्यञ्जना समुल्लास अच्छा होगा।

तो भी भङ्गुर अवयववाली सरला द्विर्वचन पर आक्षेप करती हुई तर्क से कर्कश बुद्धि वालो के प्रवेश के योग्य पाणिनीय पञ्जर को भी छुती है अहो उसका साहस, द्वित्व के उपाय को नहीं देखती तो समान अर्थ वाले दो पदों के प्रयोग को ही क्यों नहीं समझ लेती ?, वैसा भी समान आनुपूर्वी वालों का ही प्रयोग होता है ऐसा उसका सम्प्रदाय है, यह कहें तो ठीक है, अज्ञों का बहुत शीघ्र बड़ा सम्प्रदाय बन जाता है, किन्तु अन्धा है, पौनःपुन्यम्, पौनःपुनिकः, कौतस्तुतः, इत्यादि प्रसिद्ध भिन्न अक्षर वालों को नहीं देखती, यदि उस प्रक्रिया को समझने के लिये श्रद्धा से किसी व्याकरण विज्ञ को गुरू करेगी तब दो बार प्रयोग रूप द्विर्वचन पक्ष में द्वित्व के बाद दोनों अंशों से दो प्रत्ययों द्वारा पुरः पुरस्तात् की सिद्धि को समझ जायेगी, ऐसे मेरे बहुत लेखों से क्या होगा ? इति ।

**अयोध्यास्थ संस्कृतं पत्रे ७।८।१९५७ ईशाब्दारब्धचतुरङ्कैः प्रकाशिता व्यक्तिविवेकविवृत्तिपरिचयपूर्विका काशीस्थचौखम्भातः प्रथमं मुद्रापिता**

# रसगङ्गाधरस्य चन्द्रिका टीका

परमवृद्धानां मैथिलश्रोत्रियवंशावतंसानां चिराध्यापनप्रसृतशिष्य प्रशिष्य समज्ञानां ध्वन्यालोकविवृति प्रभृति व्याख्याभिश्चिरात् साहित्यसंसार प्रसिद्धशेमुषीकाणां मुजफरपुरस्थराजकीयसंस्कृतमहाविद्यालयस्य भूतपूर्वं प्रधानाचार्यप्रद्योतितानां कवितावितुता कविशेखरपदमपि प्रकाशयतां पण्डितप्रवरश्रीबदरीनाथझामहोदयानां कुशलकृतिरेषा चन्द्रिका टीका परिपूर्णविषया प्रतिविक्यं प्रकाशमाना खण्डनमण्डनादि विशेषविशदा नातिकार्यकरस्य गुरूमर्मप्रकाशस्य टिप्पनीरूपायाः सरलायाश्च सत्तायांमपि रसगङ्गाधरस्य विस्तृत संस्कृतव्याख्याविषयिणीमभिलाषां सम्यक् शमयति । अधुना विषयान्तरविशेषव्यवसायवशात्समयं न लभे एतादृशेषु ग्रन्थेषु मनोयोगं योजयितुं परं प्राक्तनपरिश्रमवशात्पुस्तकस्योपरि नितान्तं स्निग्धतया

चन्द्रिकां सुधामिमामासेवितुं प्रवृत्तः शममवापम् । विशेषावलोकनेन भविष्यति लाभइत्यन्वभवञ्च । सरला साहाय्यमा विस्कुर्वाणाऽपि चन्द्रिका न तादृशी सरला सरस्वती किन्तु गभीराशया मानिनीव न सुलभप्रसादा ।

तथापि व्याकरणन्यायसाहित्याचार्याणां मुजफरपुरीयराजकीय संस्कृत-महाविद्यालयीयसाहित्यप्रधानाध्यापकानां स्वीयाध्यापनकौशल समुत्तीर्णनैक-पटुतराचार्य शिष्याणां श्रीमन्मनीषिमदनमोहनझामहोदयानां भूमिकादि-पूर्वाङ्गपूरिता ग्रन्थानुवादेन सह टीकामपि व्याकुर्वती विशेषविषयान् सोपपत्ति विशदयन्ती समुचिता हिन्दी व्याख्या सर्वंविधमपि भाषासारल्यं समर्पयन्ती सहचरी प्रकाशतेतमाम् ।

व्याख्याद्वययुतस्यास्य प्रकाशनं सर्वाङ्गपूर्णम् इत्यवश्यं वक्तुं शक्यम्, प्रथमाननमात्रस्य प्रथमभागस्य प्रकाशनमिदम् एवंविधैः कतिपयैरङ्गैरूयेतं वर्तते येन दृश्यमानमेव प्रेक्षकाणामाशयं सद्यो द्वितीयभागो लोचन पथम-वतरतीति प्रमापयति । परं वर्षद्वयेन नोदैतासौ न वा उद्गच्छन् श्रुतीः सन्तर्प-यतीति खेदः ।

एवं गुणगरिमाणं गृह्णन्नप्ययम् अवश्यं पुण्य पुरुषाणां तोषाय भविष्यति परमधन्यस्य मम क्लेशदां शास्त्रवैदुष्यह्रासरणिमवद्योतयन् शोकायापि भवतीति कष्टम् । प्रायोऽयमेव शोकोदशाब्याः प्राक् संस्कृतं पत्रस्य २५।२।१९४७ ईश्वीयेऽङ्के 'आलङ्कारिक ग्रन्थस्य दुर्दशा' इति शीर्षके मम विलापाय प्राभवत्, इयं चन्द्रिकाऽपि तमस्विनीव विपरीतं दर्शयति ।

एकेन अनायासपतितेन प्रसङ्गेन अवलोक्यमाना व्यक्तिविवेकस्य विवृत्तिरपि क्लेशायाकल्पत । यद्यपि समेषु सामाजिकेषु राजकीयेषु च कार्येषु समय प्रभावात् सत्यस्य अपसारणं परवञ्चनायामेव चातुर्याचरणं समापतित-मास्ते परं चिरात्सुरक्षिते शुद्धे संस्कृतमनीषिमण्डले स्वीये गृहे दोषस्तेयानां वैदुष्यविनाशकराणां प्रवेशः कस्य सहृदयस्य शोकाय न भवेत् ?, इति विमृश्य मम शोकाविष्करणे विस्मयः क्रोधो वा न विधेयो विपश्चिद्भिरिति सादरं प्रार्थये ।

तथाहि अधुना छात्राणां न विद्यादृष्ट्या गुरुभक्तिः, व्युत्पन्नः परिश्रमी च गुरूनं तादृशो गुरुर्मन्यते यादृशः कुत्रचित् प्रतिष्ठितपदे वर्तमानोऽधिकं वेतनं लभमानो वृत्यादौ सहायकोऽनध्यापयन् अत्यल्पं वा अध्यापयन् गुरुर्मन्यते अन्यस्मादधीयानोऽपि अन्यत्र गत्वा कस्यचित्प्रतिष्ठितस्य गुरोर्नामब्रूते । अध्याप-

काश्च सौहार्दहष्ट्या विषयवैदुष्यपूर्तिसमीहया च परस्परं सहयोगेन शास्त्रचर्चां नाचरन्ति। न सर्वः सर्वं जानातीति व्यवहारेण न प्रकाशयन्ति, मुग्धेषु छात्रेषु यथाकथमपि पाण्डित्यं प्रदर्श्य गर्वं कुर्वन्ति, विदुषां सविधे शास्त्रपाण्डित्य प्रदर्शनं नावश्यकीयं स्वीकुर्वन्ति, तेन प्रतिवर्षम् आचार्य कक्षापर्यन्तमध्यापयन्तोऽपि पाठ्यग्रन्थस्य योग्यतां सम्यक् न सम्पादयन्ति शतशश्छात्रान् अशुद्धं पाठयन्ति, छात्राणां परीक्षापारितया महान्तः पण्डिता भवन्ति, छात्राश्च अशुद्धमेव तथ्यं मन्यमानास्तुष्यन्ति किं कुर्युः ? इति कटूक्तिरपि तथ्यैव। यदि मम अस्मिन् विषये ज्ञानमज्ञानं वेति परिज्ञानं नास्ति तदा महती योग्यता विप्रतिपत्तिः। यदि अज्ञानं निश्चितं तर्हि तस्य कथने का क्षतिः ? असत्यस्य तथ्यता प्रतीतिश्छात्राणां न भवेदिति लाभोऽपि दृश्यते। यद्यपीदं शास्त्रान्तरविषयेऽपि, तथापि आलङ्कारिकग्रन्थाः किमपि वैशिष्ट्यं बिभ्रति, प्रायएषु बहूनां शास्त्रान्तराणां पदे पदे प्रसङ्गः समापतति, यथाऽन्यत्र शास्त्रे नायाति, यद्यपि शास्त्रान्तराणां पूर्णं पाण्डित्यं नापेक्षितं तथापि मौलिकी काचित् व्युत्पत्तिरवश्यमपेक्ष्यते। सा च यथोपलब्धं प्राय एकेन द्वाभ्यां वा पुस्तकाभ्यां सम्यगभ्यस्ताभ्यां सम्पादयितुं शक्यते, परं स पुस्तकाभ्यासः परीक्षासन्तरण सरण्या न स्यात् किन्तु गुरुसन्तोषावहसरण्या, तादृशस्याभावेऽपि बहूनां व्याख्यातृणाम् आलङ्कारिकग्रन्थेषु अनधिकारचेष्टेव प्रतिभाति।

व्यक्तिविवेकस्य न मम शोधक प्रदर्शनम् अधिक्षेपाय अपितु वस्तुस्थिति प्रदर्शन द्वारा विदुषां शास्त्ररक्षार्थमभिनिवेशाय इत्यवश्यमङ्गीकर्तव्यं पाठकैः, पुस्तकद्वयञ्च आधुनिकमनोवृत्तिमुदस्थापयदित्येतावन्मात्रमेव तद्विषये किमपि अल्पं सूचयामि।

व्यक्तिविवेके नाद्यावधि मम वस्तुतः श्रमः, अग्रेऽपि कदाचिदेव भवेत्, श्रमे च परमप्राचीनस्य तदानीन्तनग्रन्थान्तरसम्बद्धतया च संभावितस्य व्यक्तिविवेकस्य कतिचन विषयाः संदिग्धा दुर्बोधा अबोधा वा सम्भवेयुः। अधुना नाधिकं तत्र वक्तुं पारयामि अभिलषामि च, साधारण दृष्ट्याऽवलोकिते व्यञ्जनावृत्तेरनुमानगतार्थतायाः प्रतिपादन परे तस्मिन् प्रकरणद्वये क्वचित् क्वचित् तृतीये च भूयसी अनुमान प्रक्रिया प्रसक्ता भवति, प्राचीने तस्मिन् न नव्यन्यायस्य प्रभावः, किन्तु पक्ष. साध्य. साधन. व्याप्ति. तर्क हेत्वाभासादि प्रयोगस्य तेषां परिचयस्य च अवश्यमपेक्षा प्रतिभाति। तादृश व्युत्पत्तिः भाषापरिच्छेदं तर्कसंग्रहं वा द्वारीकृत्य कर्तुं शक्यते। तेषां लक्षणविचारस्य आवश्यकता नास्ति, तथापि आदरणीयमित्र विरचितायां विवृत्यां प्रायोऽर्धाधिका अनुमान

प्रयोगा अशुद्धा उपलब्धाः, कतिपयेषु हेतोः पक्ष वृत्तिताऽपि नावहिता, केषुचित् साध्यसिद्धावनुपयुक्तानि पद्योक्तानि सर्वाणि हेतुविशेषणीकृतानि, व्यञ्जना अनुमानं साधनं साध्यसिद्धिरनुमितिर्वा कुत्र ग्रन्थतात्पर्यमिति स्फुटं वक्तुं टीका विवृतिर्निर्वाणमेति। अहन्तु व्यञ्जना कार्यं शाब्दबोध विशेषोऽनुमितिरूपोऽनुमितावन्तर्भाव्यते ग्रन्थकृतेति तर्कयामि तादृशञ्च सन्दर्भमाकलयामि, परं तद्विपरीतं च टीका व्याख्याति।

रसगङ्गाधरे तु प्रायो दशभ्यो वत्सरेभ्यः प्राग् जयपुरे पञ्च षड्वा वर्षाणि अविरतं प्रयतवान्, कतिषुचित् स्थलेषु काठिन्यमप्यनुभूतवान्, काश्यां साक्षादागत्य पत्रद्वारा अन्यत्र च तद्व्यवसायिनो विदुषः परिपृष्टवान् कुहचिन्निष्फलतामन्यत्र सफलताञ्चासवानस्मि, यद्यपि अधुना विस्मरणपथे प्रवर्तते, पूर्णमवलोकयितुमवसरं न लभे, तथापि शास्त्राणां नव्ये प्रौढियुगे तस्य आविर्भावः, नव्यन्याय व्याकरणवेदान्तानाञ्च तत्र प्रभावः, सटीकमुक्तावलीव्युत्पत्तिवाद शक्तिवाद सम्पादितव्युत्पत्त्या तुलिता न्यायशास्त्रस्य व्युत्पत्तिस्तत्रापेक्षिता, वेदान्तपरिभाषाभ्यासपाटवसदृशी वेदान्तप्रक्रियापटुता तत्र प्रक्रियाऽशुद्धि निवारयेत्। एतदसहाया साहित्यव्युत्पत्तिस्तु स्खलनमपि सम्पादयेत्। किञ्च शास्त्रान्तर विषमपथप्रवर्तनपाटवा पटुता साहित्यक्षेत्रेऽपि सूक्ष्मेक्षिकां समर्पयतीति मन्ये। अतएव आलङ्कारिकग्रन्थनिर्मातारः प्रामाणिका व्याख्यातारश्च प्रायःशास्त्रान्तरप्रथिता एव प्रथिताः।

नाहं पूर्णां चन्द्रिकाम् अवलोकितवानस्मि, ग्रन्थप्रेम्णा प्रारम्भिकान् भागानपश्यम्, तत्रत्यं (१) किञ्चित्प्रदर्शयामि, चौखम्भाप्रकाशितचन्द्रिका पुस्तकस्य पृष्टसंख्या अत्र बोध्या। ८ अष्टमपृष्टे 'गुणालङ्कारादिभिर्निरूपणीये तस्मिन् विशेष्यतावच्छेदकम्' इत्यादिकाव्यलक्षणावतरणमूलग्रन्थः। रमणीयार्थ प्रतिपादकः शब्दः काव्यम् इति शाब्दबोधं कल्पयित्वा तदीयविशेष्यतावच्छेदकम् इत्यादि तत्र चन्द्रिका वर्णयति, तादृशस्य शाब्दस्य न कश्चिदत्र सम्बन्धः। न वा अग्रे आवश्यकता, नापि ग्रन्थकृता अग्रे क्वचित् तादृशो निरूपितः। यद्यप्यग्रे प्रायोऽसमन्वितमेव निरूपणार्थं ब्रुवती तद्घटकतया शाब्दबोधं समुच्चारयति परं तत्सम्बन्धयोजनेऽसमर्था जायते, सर्वथा ग्रन्थार्थं नावबुध्यते। गुणालङ्कारादिप्रकारकं रमणीयार्थप्रतिपादकशब्दरूपकाव्यविशेष्यकं यन्निरूपणं तदीया कर्मता विशेष्यता तादृशे शब्दे तदवच्छेदकमित्यादि वस्तुतो ग्रन्थार्थः। कर्मानीयः प्रत्ययार्थस्तत्र विशेष्यता। यद्यपि तृतीयार्थस्य प्रकारभेदोऽपि संभवति तथापि निरूपणीयघटकप्रत्ययार्थविशेष्यताया एवात्र चर्चा नान्यस्या इति तु निश्चितम्। तृतीयार्थविषये चन्द्रिकाऽपि न किञ्चिद् वक्ति।

( २ ) ११ एकादशे पृष्टे 'यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्' इत्यादि मूलं काव्यलक्षणम्। प्रायोऽत्र हिन्दीटीका सावधाना भावनापदफलविवेचने नागेशोक्तिमनुसृत्य क्लिश्यन्ती प्रतिभाति। आपाततः काव्यार्थज्ञानेन चमत्कारो नोदेति किन्तु पुनः पुनरनुसन्धानात्मकभावनयैवेति भावनापदं परित्यज्य ज्ञानपदोपादाने अग्रिमानतिरिक्तवृत्तित्वरूपावच्छेदकत्वानुसरणे च काव्येऽव्याप्तिरेव स्थास्यति व्यर्थ एवात्र क्लेशः। यद्यपि अनुसन्धानानि पौनः पुनिकानि अपि समानविषयकान्येव न विलक्षणानि, विषयवैलक्षण्ये तु विभिन्नमेव ज्ञानान्तरं न तत्र धाराषाहिकत्वादिव्यवहारः, पुनः पुनरनुसन्धाने च न ज्ञानव्यक्तौ विशेषः संस्कारेष्वेव दृढत्वादिः। अन्तिमैव अनुसन्धान व्यक्तिश्चमत्कार प्रयोजिका ? कथं न आद्यायाः मध्याया वा भावनात्वम् ? भावनात्वं व्यासज्ज्यवृत्तिर्वा ? नियत संख्याकव्यक्तिवृत्तिर्वा ? इत्यादि भावनायां बहुविवेचनीयमास्ते, न कश्चित् स्पृशति, भवतु तत्समेषां न्यूनता न कस्यचिदेव, लक्षणस्य चन्द्रिकाव्याख्या तु अतिखेदावहा भावार्थ लेशमपि न स्पृशति, सर्वथा पदार्थज्ञानविधुरा अशुद्धान् पदार्थान् लिखति, छात्रान् भूमिगर्ते पातयति। स्मृतिः समूहालम्बनात्मिका न भवतीति प्रलपन्ती कीदृशमशुद्धं प्रचारयति ?, अधोलिखिता १२ द्वादशपृष्ठस्था लक्षणसमन्वय पङ्क्तिरस्याः पदार्थज्ञानवैधुर्यस्य स्फुटं निदर्शनम्-येन यादृशानुपूर्वीमत्ता शब्देन प्रतिपादिते बोधिते अर्थे निष्ठा वृत्तिमती या विषयता तन्निरूपिता या भावनानिष्ठविषयिता तदवच्छेदकं भावनात्वं चमत्कारनिष्ठ जन्यतानिरूपित भावनानिष्ठजनकताया विषयतासम्बन्धेनावच्छेदकत्वम् इत्यादि। कीदृशं साहसमस्याः ? भावनानिष्ठविषयितायाः अवच्छेदकं भावनात्वं वर्णयति, भावनायां भावनात्वं विषयतासम्बन्धेन तिष्ठतीति जानाति, किमत्राधिकेन विवरणेन ?,

( ३ ) प्रायो न्यायव्युत्पत्तिविधुरेषु साहित्याध्येतृषु न्यायपाण्डित्यं प्रदर्शयितुम् अपरिचितम् अनावश्यकमपि लिखितुं प्रवर्तते, पश्यन्तु पाठकाः— २५ पञ्चविंश पृष्ठस्थिता मूलपङ्क्तिः 'प्रतिभात्वं काव्यकारणतावच्छेदकतया सिद्धो जातिविशेषः' इत्यादि, अस्यामूलपङ्क्तेर्बाहुल्येन विस्तरेण व्याख्यानं विदधाति चन्द्रिका, अनुमानप्रयोगं तत्समन्वयञ्च करोति, परं मूलोक्तस्य काव्यकारणतावच्छेदकदकत्वस्य जातिसिद्धौ हेतुत्वं न वर्णयति। कीदृशं व्याख्यानम् ? मूलोक्तो न स्पृश्यते अन्यच्च लिख्यते। यद्यपि दिनकरीलेखाभिप्रायमबुध्वा केनचित् चिरात्प्रचारित एतद्विषयकमुक्तावलीपाठनप्रणाल्यामपि गड्डुलिका प्रवाहः प्रचलति। तथापि तस्यात्र का आवश्यकता ? अनुमान प्रयोगप्रदर्शन-

समीहायाम् मूलोक्त हेतु. साध्य. पक्षादिरेव संक्षिप्तः कथन्नोपयोज्यते अन्य ग्रन्थ शब्द साहाप्येन टीकाबृध्या किं प्रयोज्जं मदुक्ताद्वते ? टीका विस्तरोऽपि पदार्थ-व्युत्पत्तिसहचरः कदाचन शोभते। अत्र तु तादशव्युत्पत्तेरभावः, तत्रत्या 'स्वविषयकज्ञानसमवायित्वसम्बन्धेन काव्यं प्रति समवायेन प्रतिभा कारणम्' इत्यादि चन्द्रिकापङ्क्तिरनधिकारचेष्टायाः स्फुटं निर्देशनं भविष्यति। मूले काव्यस्य प्रतिभा कारणमुक्तम् चन्द्रिका काव्यज्ञानस्य प्रतिभा कारणं व्याख्याति, अहो सम्बन्धयोजनम्, धन्यञ्च साहित्य पाण्डित्यम्; धन्यश्चत्रिंशतो वर्षाणि यावद् रसगङ्गाधरपाठनम्। चन्द्रिकातु अन्यायान्वयप्रसूतैव परंता मनुसरन्ती न्यायान्वयसंभवा हिन्दी व्याख्याऽपि अन्यायमभिसरति अहो चंद्रिका प्रभावः।

(४) वेदान्तपरिभाषाया अपि व्युत्पत्तिच्युत्या वञ्चिता चन्द्रिका रसप्रकरणे साक्षिभास्यत्वं कथं परिष्करीतीति ८४ चतुरशीतितमपृष्ठस्थ चन्द्रिका लेखोऽव-लोक्यताम्—वेदान्तेऽन्तःकरणधर्मा ज्ञानादयः साक्षादात्मना भास्यत्वात् साक्षि-भास्याः। बाह्यास्त्वनन्तःकरणधर्मा घटपटादिपदार्थास्त्वन्तःकरणद्वारकेण पारम्परिक सम्बन्धेनात्मभास्या इत्यन्तःकरणभास्या मन्यन्ते इत्यादि।

वेदान्ते च नैतादृशी व्यवस्था, किन्तु साक्षिणा चैतन्य विशेषेण भास्या इति तस्य शब्दार्थः। न तु तत्र साक्षिपदस्य साक्षादर्थः। अपि च जड़ेनान्तः करणेन भास्यं किमपि वस्तु तत्र नाङ्गीक्रियतो कियती पदार्थाशुद्धिः ? किं किं दर्शनीयम् ? साक्षिभास्य लक्षणन्तु वेदान्द परिभाषादौ प्रतिद्धमेवेति त्यज्यते।

(५) अपरमपि वेदान्त परिचयस्य तत्रैव रसनिरूपणेऽशुद्धिनिदर्शनं ८६ षडशीतितमपृष्ठे दृश्यताम्। स्थाप्युपहितस्वरूपानन्दाकारा समाधाविव योगि-नश्चित्तवृत्तिरूपा जायते' इतिमूलमेव तदुपरि चन्द्रिका कलङ्कयति—स्वम् आत्मा सच्चिदानन्द लक्षणः स्वरूपं यस्या इत्यादिः। अहो चित्तवृत्त्या सह आत्मनोभेदं न जायाति चन्द्रिका, कीदृशं साहित्यपाण्डित्यम् ? कीदृशश्च रस-गङ्गाधराध्यवसायः ?

(६) अन्यदपि तत्रेव ८७ सप्ताशीतितमपृष्टे—'आनन्दोह्ययं न लौकिक सुखान्तर साधारणः, अनन्तःकरणवृत्तित्वात्' इति मूलम्। सुखदुःखादीनामन्तः-करणधर्मतया लौकिकं सुखमन्तः करणवृत्तिरूपम्, रसस्वरूपानन्दश्चैतन्यरूपो-नान्तःकरणवृत्तिस्वरूपोऽतो लौकिकसुखभिन्न इति स्फुटो ग्रन्थार्थः। न च पङ्क्तिःकठिना, तथापि एतादृशं पदार्थं न जानाना चन्द्रिका अशुद्धं बहुलिखति, अशुद्धोद्धरणे लेखनी जिह्रेति इति त्यजामि, पाठकैः स्वयमेव चक्षुषी तर्पणीये।

(७) साहित्यमार्मिकत्वमपि किञ्चिद् चन्द्रिकायाः परिचीयताम् २५ पञ्चविंशे पृष्टे 'तस्य च कारणं कविगता केवला प्रतिभा, सा च काव्यघटनानुकूलशब्दार्थोपस्थितिः' इतिमूलम्, पण्डितराजजगन्नाथसदृशः स्फुटवादी आलङ्कारिको न कश्चित् प्रागवातरदिति निश्चितम्, अवतारोऽप्यस्य सूक्ष्मविचारशालिनि नव्ये दार्शनिकयुगे, अतएव अस्मात्प्राचीने अलङ्कारग्रन्थे प्रतिभा काव्यकारणशक्तिर्वा कः पदार्थ इति न प्रकाशतेस्म, तत एव एकस्या अपि काव्यप्रकाशपङ्क्तेः नानाविधाः परस्परं विरुद्धा महतामपि पण्डितानां व्याख्याः समुपलभ्यन्ते, अत्र चोपस्थितिज्ञानरूपा प्रतिभा विषयोऽपि तस्याः शब्दार्थौ, उपस्थितिश्च काव्यघटनानुकूला एवेति स्फुटं प्रतिपादितम्। एतादृश शब्दार्थोपस्थितिरूपायाः प्रतिभाया अनन्तरं साकं वा काव्यरचनायै किं कीदृशं कारणमपेक्षितमिति विवेचकाः स्वयं निर्णेतुं भविष्यन्ति समर्थाः। प्राचीन ग्रन्थोदिता निपुणता अनुकूलशब्दार्थोपस्थितिमन्तरा किंकरोति ? अभ्यासो वा ?, काव्यरचनानुकुलोपस्थितेरनन्तरम् निपुणताया अभ्यासस्य वा किं प्रयोजनम् ? प्राचीन पुस्तके लिखितौ निपुणताऽभ्यासौ एतादृशोपस्थितिकारणतयोक्तौ न तु एतस्या अनन्तरमपेक्षितौ ?, काव्यप्रकाशस्वीकृतः शक्तिप्रभृति कारणतावाद एतादृशोपस्थितिद्वारा काव्यजनकतामभिप्रेत्य, एतादृशोपस्थितिमन्तरा शक्त्यादयः काव्यमुत्पादयन्तीति भ्रम एव। न कस्यचिन्महतो लेखेन पदार्थस्वभावो विपर्येति, अतएव उभयोर्ग्रन्थयोः पन्था भिन्नः।

नवनवोन्मेषशालिनी प्रतिभेति प्रसिद्धम्, परमर्थावबोधस्तस्य कियतामिति संदिग्धम्, एषा कोशोक्ता प्रतिभा रसगङ्गाधरोक्त प्रतिभारूपा तज्जनिका वा ? तत्र प्रथमे उन्मेषपदार्थस्य कस्यचिद् वक्तुमशक्यत्वात्, स्मृताएव प्राचीना विषया भवन्ति अनुभवास्तु सर्वे एव नवविषयाः किं नवनवत्वं स्यात् ?, द्वितीयेऽपि आन्तरं करणं संस्कारोऽदृष्ट विशेषो वेति व्याकरणीयमास्ते, तथा च अत्र विषये चन्द्रिकादेरशुद्धिः :

(क) पञ्चविंश २६ पृष्टे–काव्ये प्रतिभामात्रस्य कारणत्वन्तु न विचारसहम्, अनुयहसनीयकाव्यत्वावच्छिन्नकार्यतानिरूपित कारणताया दण्डचक्रादिन्यायेन प्रत्येकं प्रतिभाप्रभृतिषु त्रिष्वपि स्वीकारस्यापरिहार्यत्वाद्, तथा च आहुः शास्त्रिण इत्यादि चंद्रिकालेखो ग्रंथप्रतिपाद्यानवबोधमूलकः। कारण त्रितयवादिसम्मतप्रतिभायाः ग्रन्थोक्तप्रतिभायाश्च अत्यन्तभिन्नत्वात्। एवञ्च काव्यप्रकाशरसगङ्गाधरयोरुभयोर्ग्रन्थयोर्नव्युत्पत्तिश्चन्द्रिकाया इति उक्तौ न दोषः।

संग्रहे, भर्तृहरिनिर्मिते वाक्यपदीये वैयाकरणलघुमञ्जूषायाञ्च न सर्वाङ्गपूर्णाऽपि बहुभिरवयवैः स्फुटा लभ्यते तामेव च पाणिनीयदर्शनस्फोटवादस्फोटायनोपवर्षमुनिमतैर्दर्शनान्तराणि स्वीये ग्रन्थ उत्थापयन्ति प्रक्षिपन्ति च। दर्शनान्तराणाञ्चार्थमात्रं व्याकुर्वतां दर्शनेति नाम्ना प्रसिद्धया अवशिष्टायां शब्दव्याकृतावेव व्याकरण पदं रूढम्। शब्दव्याकरणञ्च नाक्षिपन्ति शास्त्रान्तराणि अपितु आदरदृष्ट्या पश्यन्ति। अत एव व्याकरणप्रामाण्याय पूर्वमीमांसायाम् १।३।९ अधिकरणम्। सर्वशास्त्रोपजीव्यत्वेनैव "काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्" इत्यादि वस्तुतो वचनम्। शब्दवदर्थस्यापि व्याकरणात् पदवाक्यार्थयोरपि वर्णनमस्य शास्त्रस्य मुख्यमेवाङ्गम्। वाक्यार्थविचारायैव महतां वादानामत्र सन्निवेशः। यतो न्यायशास्त्रं शब्दखण्डद्वारा प्राधान्येन लौकिकौ पदार्थवाक्यार्थौ विशदयति। पूर्वमीमांसाशास्त्रञ्च प्राधान्येन वैदिकवाक्यार्थं निर्णयति। अस्ति च तत्र अल्पीयान् मतभेदः।

लौकिकानां वैदिकानाञ्चानुगतया प्रक्रियया स्वरूपं सम्यग् व्याकुर्वत् परिपूर्णं व्याकरणमद्यावधि पणिनीयमेव। महताऽन्वेषणेनापि इतः प्राचीनानि कानिचिदांशिकानि एव व्याकरणानि सिद्ध्यन्तु नाम परं न सर्वाङ्गानीति निरुक्तालोचनमेवासाधयत्। तत्र नास्ति वक्तव्यम्। अत्र लेखे विवेचनास्थानाभावेऽपि संक्षेपतः सूचयामि यत्-समेषां यौगिकानां योगरूढानां कतिपयरूढानामपि च पदानां शक्तिग्राहकम्, वाक्यार्थनिरूपकम् सामान्यतो विशेषतश्च वेदानां स्वरसंस्कारयोर्निर्वाहकम्; लौकिकानामिव वैदिकानामपि शब्दानां निर्व्राचकञ्च भवतु इदमित्युद्देश्येन प्रादुर्भूय तथैव च दीर्घकालमवतस्थे। दृश्यते च न्याये नव्य एव शब्दखण्डस्य स्फुटतया निर्देशः। उत्तरमीमांसापि पूर्वा इव वैदिकवाक्यानामनुकूलतर्काद्युपस्थापकाधिकरणद्वारा वाक्यार्थनिर्णयहेतुस्तात्पर्यनिर्णायिकैव नतु पदार्थानां परस्परं संबन्धरूपवाक्यार्थप्रतिपादिका। अग्रे च तत्र वाक्यार्थप्रतिपादकत्वस्यापि सन्निवेशो जात एवास्ति। स्वरसंस्कारसम्पादकानि प्रातिशाख्यानि पाणिनेः प्राङ् न प्रचरितानीति निरुक्तालोचनं ( ३ पृष्ठे ) साधयत्येव। तथा च प्रातिशाख्यकार्यमपि निर्वाहयत्समय इदमेव पाणिनीयं शास्त्रं प्रबभूव। अतएव प्रातिशाख्यविषयाः केचन अष्टाध्याय्यामपि उपलभ्यन्ते। प्रातिशाख्यस्य व्याकरणान्तरत्वे तस्य प्रसिद्धौ च तद्विषयाणां सूत्रे सन्निवेशः पाणिनेर्व्यर्थ एव स्यात्। पश्चाच्च सूत्रप्रणयनाच्चिरेण प्रादुर्भूता बहवः प्रातिशाख्यविषयाः सूत्रव्याख्यानेनापि अगतार्थाः शास्त्रान्तरतां ग्रन्थान्तरतां च प्रयोजयामासुः।

किञ्च लक्षश्लोकात्मकस्य संग्रहस्य कर्त्ता व्याडिः पाणिनीय इति विदित-चरम ( झू ) पृष्ठस्थनिरुक्तालोचनरीत्या स एव यदि विकृतिवल्ल्या विधाता, स एव च शौनकीये प्रातिशाख्ये स्मृत इति मन्यते तदा नूनमसौ महान् वैदिकः, संग्रहे च महाग्रन्थे वैदिकविषयौ सम्यक् पर्यालुलोचे। व्याख्यातृतया च बहवो विषयाः सूत्रेभ्य एव प्रसारयामास, इत्यादि कल्प्यते तदा पाणिनेरनन्तरमपि अल्पादल्पतरमपि पञ्चषशताब्दीं यावदवश्यं पाणिनीयं प्रतिशाख्यकार्यं निर्वाह-याञ्चकार। पतञ्जलिसमये तु प्रातिशाख्यानां स्वतन्त्रतया प्रसिद्धौ पतञ्जलि-प्रभृतीनां वैयाकरणानामुपेक्षेति त्वन्यत्।

यदपि—पाणिनेः प्रागपि प्रतिशाख्यनाम्नाऽन्यनाम्ना वा प्रतिशाख्यवि-षयाः प्रचलिता आसन् अत एव इदानी-मुपलभ्यमानप्रातिशाख्यसूत्रेषु तदाचा-र्याणां नामान्यनुववृतिरे। कानिचिच्च पाणिन्यष्टकेऽपि इति मतम् ऐतिहासिका-नाम्, आस्तां तत्, तथापि तदानीन्तनास्ते विषयाः पाणिनिना समाग्राहिषते-त्यङ्गीकारे न बाधकम्। कथमन्यथा वेदविशेषशाखाविशेषोद्देश्यकानि व्याक-रणसूत्राणि प्रादुर्बभूवुः?

लौकिकानामिव वैदिकशब्दानामपि निर्वाचनसाधक पाणिनीयं शास्त्रं, न किञ्चिदवशिष्यते निरुक्तेन सम्पादनीयम् अत एव प्रसिद्धानां लोकवेदयोर्नि-ष्णातानां प्राचामपि वैयाकरणानां निरुक्तशास्त्रे उपेक्षा संगच्छते।

तथाहि—समेषामेव यौगिकानां शब्दानां प्रकृतिप्रत्ययौ तदर्थांश्च विवृ-णोति व्याकरणं तर्हि किमवशिष्यते निर्वचनस्य? विग्रहोऽपि प्रदर्शनीय इति चेत्प्रदर्शनमन्तरापि परिज्ञेयस्य प्रदर्शनं ग्रन्थवृद्धिमात्रम्। तथैव च पाणिनिर्यदि व्याकरिष्यदल्पा एवाध्येष्यन्त तद्ग्रन्थम्। रूढानान्तु अप्रसिद्धैः प्रकृतिप्रत्य-यैर्विवृत्यापि किं क्रियेत? वाच्यार्थग्रहमात्रमपेक्षितम्। तदर्थमेव निर्वचनमिति चेद् निर्वचनस्य किं मूलम्? अर्थमनुसृत्यैव निर्वक्तव्यम्, तथैव च तस्याचार्थ-स्योपदेशः, अनुसर्त्तव्यश्चानुसरणात् प्रागेव सिद्ध्यति, स च येन प्रमाणेन तदेवार्थज्ञापकं न निर्वचनम्।

निर्वचनस्याऽप्यपेक्षायां तद्गुणादिप्रकरणेन व्याकरणस्य गतार्थम्। यथा शब्देषु आवश्यकतावशान्नूतना धातवः प्रत्यया अनुबन्धाश्च कल्पनीया इति निरुक्तस्य समयस्तथोणादिप्रकरणस्यापि 'संज्ञासु धातुरूपाणि' त्यादि कारिका तद्विषयिणी नाद्य प्रचरिता। उणादयो बहुलमित्यत्र बहुलग्रहणस्य प्रयोजनभाष्यमपि तथैव दृश्यते। पाणिनेः प्रागपि कानिचिदुणादिसूत्राणि आसन्नित्यपि भाष्यपरिशीलिनां नाविदितम्। अन्येषामुणादिसूत्राणि निरुक्त-

शास्त्रं च विलोकितवतः पाणिनेः 'वैयाकरणानां कल्पनाक्रीड़नकमिदमि' ति धिया उपेक्षैवेति पर्यवस्यति।

यद्यपि सत्यव्रतसामश्रमिमते यास्ककृतं निरुक्तं न पर्यालोचयत्पाणिनिः परमन्यन्न पर्यालोचयदित्यत्र नास्ति प्रमाणम्, निरुक्तशास्त्रस्य प्राचीनत्वात्। अत एव यास्कनिरुक्ते प्राचां निरुक्ताचार्याणामुल्लेखः संगच्छते। अन्ये चैतिहासिका मन्वत एव यास्कात्परः पाणिनिरिति। अस्माकं मते व्यभिचरितोऽपि भाषाविकासक्रमः प्राचीनैतिह्यनिशीथनिशाकाले दोप एवेतिहासविचारणानाम्। तद्रीत्या च प्रागेव पाणिनेर्यास्कः। यतः पारिभाषिकशब्दसंकुलापि प्राथमिकान् पारिभाषिकशब्दान् परिशील्याध्ययने सूत्रमय्यपि अष्टाध्यायी यथा स्फुटार्था न तथा भाष्यमपि निरुक्तम्।

"व्याकरणस्य कार्त्स्न्यंमि" ति निरुक्तस्थव्याकरणपदेन पाणिनीयस्य ग्रहणं बहूनां न परिशीलितं विभाति। यतो हि स्वरसंस्कारयोगं व्याकरणस्य प्रयोजनमाख्याति निरुक्तम्। न तादृशप्रयोजनवाक्यमुपलभ्यते पाणिनीये तन्त्रे तादृशानुपूर्वी चाधुनापि प्रयोजनपरतया प्रातिशाख्यसूत्रे दृश्यते। तथा सम्भवति च प्राचीने प्रातिशाख्ये।

उणादिप्रकरणव्युत्पत्तिर्यास्काचार्यनिर्वचनञ्चेदानीन्तनानां समेषां भाषाशब्दानां संस्कृतीकरणं शिक्षयति। महाभाष्यकृतां साधुशब्दानां पारायणासम्भवप्रदर्शनमप्येतदनुकूलम् इति त्वन्यत्।

## भाषाया अनादित्वम्

वेदानुसारिणां मते मनुष्या इव तेषां भाषापि अनादिः। सृष्टिप्रवाहस्यानादित्वात् प्रतिसृष्टि च नामरूपयोः सहैव सर्गात्। वेदस्यानादितया वेदं संस्मृत्य वेदशब्दद्वारैव प्राचः पदार्थानधिगत्य सृजति। यथा—एते इति वै प्रजापतिर्देवानसृजदसृग्रभिमि मनुष्यान् इत्यादि ऋचः। स 'भूरिति व्याहरत्सभूमिमसृजत' तै० ब्राह्मण २।२।४।२। यज्ञेन वाचः पदवीयमायन्ताम् इत्यादि ऋक्संहिता १०।७।१।३ स्मृतयोऽपि अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी नित्या यतः सर्वाः प्रवृत्तयः॥ नाम रूपं च भूतानां कर्मणां च प्रवर्त्तनम्। वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः मनुसंहिता १।२१। श्रीकृष्णद्वैपायनोऽप्याह युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥ तथा च सृष्टेः प्रागपि च भाषा भाषानुसारिणी च सृष्टिरिति वैदिकानां समयः। एवं सति किमनुसृत्याधुना भाषा-

विज्ञानविदुषां भाषोद्गमावसरक्रमाद्यन्वेषणे महान् श्रम इति न प्रतिभाति। वेदशास्त्राणि विहायान्यैरुपायैः भाषोद्गमान्वेषणायेति चेत्के तर्हि ते उपाया भाषाग्रन्थान् विहाय भाषोद्गम विचारे ? संस्कृतेतरभाषाया ग्रन्था इति चेत्के ग्रन्था अन्यभाषायां वेदात्प्राचीनाः ? केन च प्रमाणेन तथा ? तथात्वेऽपि इतिहासान्वेषणेनैव गतार्थं किं प्रयोजनं भाषाविज्ञानशास्त्रस्यात्र ? प्राचीनानां निबन्धानां यो हि निर्माणसमयः स च तादृशभाषाव्यवहारस्यापि समयः। ततः प्राक् किमासीदिति वक्तुं न शक्यते इति ऐतिह्यचणा अपि प्रवदन्ति। ततः प्रागपि कल्पनया प्रचराम इति चेदैतिहासिका अपि तथा प्रसरन्ति। तथा चेतिहासविचारेणैव भाषोद्गमसमयविचारः परिसमाप्यते। मनुष्याः कदा वक्तुम् प्रारभन्तेत्येव विचार्यंत इत्यपि नानन्यथा सिद्धं फलम् इतिहासस्यैव प्रसरात्। तद्विशेषविचार इति चेत् मानवाः सर्वं मूका आसन् अस्मिन् समये इति कस्य लेखः ? किञ्च तत्र मूलम् ? विदेशीयेन महाविदुषा प्रचारितमिति चेद्, आम् अवगतम्, नूनं श्रीमतां विदेशीयश्रद्धा वैदिकी अश्रद्धा च खेदातिशयप्रयोजिका। अन्यथा यथेदानीं मानवाः सर्वे न मूकास्तथा प्रागपीति कथन्न श्रद्दधीरन् ? यथा मर्कटात् क्रमशो मानवास्तथा मूकेभ्या वाग्मिन इति सजातीयानां शास्त्रम्। समानज्ञानयोः फलम्। किमन्यद् शब्दार्थयोराध्यासिकं तादात्म्यमनादि। येन यदा यदा अर्थस्तदा तदा शब्दः, 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति रीत्या यदा ज्ञानं तदा शब्दः इत्यादिः परमप्राचीनः सिद्धान्तो भारतीयानां किमधिकं विचार्यंतेऽत्राधुनिकैः ?

ननु अधुनापि मूकानां ज्ञानमर्थश्च भवति न च शब्दः इति चेत् महान् भ्रमोऽत्र मूकत्ववाग्मित्वस्वरूपग्रहणे। मूकानामपि शब्दो भवतीति अवधीयतां श्रीमद्भिः। तथाहि पाञ्चभौतिकं मूकानामपि शरीरम्, तत्रान्यभूतानां गुण इव गगन गुणः शब्दोऽपि विराजत एव। सांख्यवेदान्तिनये शब्दतन्मात्रांशस्य पृथिव्यादिचतुर्ष्वपि विद्यमानत्वान्मूकशरीरेऽपि वर्तत एव।

चत्वारि वागित्यादि ऋच ऋग्वेदीयायास्तृतीये पादे गुहायां त्रीणि निहिता नेङ्गयन्ति। महाभारते च—

प्राणापानान्तरे देवी वाग्वै नित्यं स्म तिष्ठति।
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा॥
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी।
केवलं बुद्ध्युपादानक्रमरूपानुपातिनी॥
प्राणवृत्तिमनुक्रम्य मध्यमा वाक् प्रवर्तते।

अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ॥
स्वरूपज्योतिरेवान्तः परा वागनपायिनी ॥ इत्यादि

प्रपञ्चसारतन्त्रपटले संगीतरत्नाकरे तन्त्रपुस्तके शिक्षादौ च शरीरावयवेषु शब्दानां सन्निवेश आयाति समेषां समानः। अल्पावधानेनापि परीक्षितुं शक्यते यद् वाग्मिन इव मूकस्य चेष्टादिना व्यवहारसमये मूलाधारत आरभ्य मुखपर्यन्तं काचिदभ्यन्तरं चेष्टा जायते। परं वाग्मिनो ध्वनिना सह वर्णा अपि प्रादुर्भवन्ति मूकस्य तु ध्वनिमात्रम्। यथा व्याख्यानं विना ध्वनिप्रसारकं यन्त्रं कार्यं न करोति तथा मूलाधारतो हृदयपर्यन्तं शब्दोत्पत्तिमन्तरा कण्ठोऽपि कुण्ठति। यथा च व्याख्याने सत्यपि दूषितं यन्त्रं न प्रसारयति तथाऽभ्यन्तरं शब्दसत्वेऽपि मूकानां कण्ठः। कण्ठस्थसूक्ष्मस्य यन्त्रस्य विकृतिमात्रान्मूकता जायते। अन्ये चावयवाः समाना एव। अत एव मूकसन्ततौ रूपाकृत्यादिसमन्वयेऽपि मूकतासमन्वयो न नियतः।

आधुनिकानां भाषोद्गमविचारशालिनां जन्मजात-परिजनानुकरणास्तिकादिककतिपयवादाः प्रसिद्धाः। तेषां परस्परं खण्डनं मण्डनं च प्रचलति। प्रायस्ते सर्वेऽपि केनचिदंशेन वस्तुतः। परं विचारप्रणाली अव्यवस्थिता संस्कृते शास्त्रविचारशालिनां सम्मुखे न ते विचारपदव्यपदेशमपि सहन्ते।

यथा जन्मजातवाद एव ध्रियेत। जन्मेतिनाम शरीरविशेषेण सह संबन्धविशेषस्यास्ति। तथा च प्राकृतिकादहष्टवशाद्वा शरीरविशेषाद् भाषोद्गमः। तत्रापि मस्तिष्कविशेषादपि भेदः। अत एव समानैरपि शिक्षणैर्वृक्षः विडालः कुक्कुरो वा न भाषां मानुषीं गृह्णाति, मनुष्यः, शुकः, सारिका चाददाति। मानवादिष्वपि मस्तिष्कविशेषाददृष्टविशेषाद्वा मन्दतया तीव्रतया च शरीरनिगूढापि शक्तिः शिक्षणाद्युपायैरुद्भवति। न शक्ति विना शिक्षणाद्युपायाः किञ्चित्काराः न वोपायान् विना शक्तिः। शिक्षणं च परिजनैरनुकरणादिना वा। परमाधुनिकानां विचारस्तु सहकारितामकल्पयित्वा एकैकशः कारणतया प्रचलति। परमस्य जन्मजातवादस्य खण्डनं यदाधुनिकैः क्रियते तदप्यवलो कनीयमास्ते। कस्मिश्चित्समये केनचिद्विदेशीयेन राज्ञा कश्चिज्जात एव बालः शब्दशून्ये रहसि स्थापितः। प्रतिदिनं च जीवनाय भोजनं दातुमेव पुरुषो नियोजितो यः प्रत्यहमेकमेव वाक्यं भोजनग्रहणायोवाच। यदाऽसौ अष्टादशवर्षीयो जातस्तदा बहिर्निस्सार्य परीक्षणे प्रतिदिनं श्रुतमेव वाक्यं ब्रूतेस्म तदर्थमेव चावगच्छति स्म। तेन निर्णीतं यन्न कश्चिज्जन्मत एव भाषां जानाति प्रत्युत शिक्षणादिनैव।

परं कष्टमात्रफला परिहासास्पदेयं परीक्षा। सर्वेषु परिजनेषु सर्वत्र सर्वदा चेदमनुभवन्ति सर्वे यद्बालो यानि पदानि वाक्यानि वाऽसकृच्छृणोति तेषु एव पदवाक्येषु व्युत्पद्यते अन्येषु न, न चान्यभाषासु। न बालस्यैवैषा चर्चा अपि तु यूनामपि। एतावानेव तेषां विशेषो यदूहापोहशीलाः परिज्ञातपदैर्नूतनानि वाक्यानि च विरचयन्ति। परं तान्यपि श्रुतैरभ्यस्तैरेव पदैः। नूतनानि अश्रुतानि च पदानि व्याकरणविद एव कल्पयन्ति।

परीक्षापरिणामोऽपि न रमणीयः। अनया परीक्षया इदमेव कल्पनीयमासीद् यत् परिजनैः शिक्षणादीनि भाषोद्गमस्य सहकारिकारणानि नतु एकाकीनि, अन्यथा परिजनशिक्षणादिना बालेन सह गृहे वसन्तः पशवो वृक्षादयो वा भाषिणो न जायन्ते कथम् ?

श्रीबाबूरामसक्सेनामहोदयैर्यदद्यावधि भाषोद्गमविचारप्रवाहस्य विश्रामाय भूमिरास्तिकतावाद एव लभ्यते। ईश्वरो हि सृष्टेरादौ ऋषिभ्यो भाषा उपदिशतीत्यादि। अन्ये च वादा विचारनखनिकृन्तनमपि न सहन्त इत्यादि।

कथमपि एते आस्तिकवादं समाश्रयन्ति एतेन तु अवश्यं धन्यवादार्हाः परं स्थूलविचारेणैवेति न समाश्वासस्य तत्रावसर इत्यवधेयम्।

दुर्गमं हि आस्तिकशास्त्रशिविरम्। तीक्ष्णविचारवर्मणामेव तत्र कथमपि प्रवेशः। पुराणमाश्रित्यापि न विचारपारः विष्णोर्नाभेः समुद्भूतो ब्रह्मा प्रजापतीनां वेदाध्यापको यदीश्वरपदेनाभिमन्येत तर्हि तस्य वेदाः कथमभान् ? स्वयमिति चेज्जातमात्रस्य भानाज्जन्मजात एव वादः प्रसरेत्। परमेश्वरस्य शरीरधारणं तु रामकृष्णाद्यवताररूपेण, तयोरवतारात् प्रागपि भाषासीदेव। कुत्रचित् परमेश्वरस्तुतौ एवमायाति येन भाषोद्गमस्तत एवेति कल्पना प्रसरेत् परं तत्रैव शरीरराहित्यमपि दर्शयति स्तुतिः। शरीरमन्तरा च भाषोद्गमे आधुनिकाः प्राकृतकं भाषोद्गमं मन्येरन्।

नास्तिकास्तिकयोरपि नात्र विशेषः। जैनबौद्धादयोऽपि जन्मान्तरमङ्गीकुर्वाणा नाधुनिकानां नास्तिकाः। जीवस्य जन्मान्तरमनभ्युपयच्चार्वाकदर्शनं तु चिराद् विलुप्तम्। खण्डनीयतया यादृशं मतं तस्य मिलति तेन व्यवहारोऽपि न निर्वहति। नैतादृशं च भारतीयदर्शनस्वरूपं भवितुमर्हति। अहन्तु यादृशं व्यवहारनिर्वाहकं चार्वाकमतं प्रत्येमि तादृशेन तु जीवस्य जन्मान्तराभावेऽपि संसारस्यानादितया जन्मजातवादस्तेषामपि पूर्ववन्निर्वहतीत्यलमधिकेन। एवं

रीत्या भाषाया अनादित्वे सर्वाभ्य उपलभ्यमानाभ्यो भाषाभ्यः परमप्राचीना एषा संस्कृतभाषा सिद्धयति, न श्रद्धया, अपितु अस्याः प्राचीनसाहित्यदर्शनाद् अन्यस्यास्तथाऽनुपलम्भात्। यद्यपि अल्पीयसामैतिह्यसमीक्षकाणां मतेऽन्यापि काचन भाषा इतः प्राग्भवा श्रूयते परं वैयक्तिकविचारश्चारैव सा न बलवत्तर-प्रमाणप्रवणतया सर्वमान्यतास्पदा।

वैदिकभाषापि संस्कृतभाषैव। किन्तु वैदिकग्रन्थानामपरिवर्तनात् तद्-भाषाया एकरूपतैवाद्यावधि अतिष्ठत्। व्यवहारे तु सर्वस्या भाषायाः परिवर्तन-स्वभावात् क्रमशः परिवर्त्तिता लौकिकी भाषा वैदिकभाषामपेक्ष्य कियता परिवर्तनेन भाषान्तरतामापन्नेव। अत एव पाणिनिसूत्रेऽपि लोके, वेदे, इत्यादि-भेदः समुपस्थितः।

इयमपि सरस्वती कतिपयकारणावशाच्चिराद् व्यवहारविधुरा समपद्यत। येन समये पाणिनिना साधुत्वेनानुगमितान्यपि पदानि पश्चात् पाणि-नीयैरप्याचार्यैरनभिधानादसाधुतया ख्यापितानि। नूतनानां पदानां व्याव-हारिकतासम्पत्तिस्तु असम्भवनीयतामधितस्थे।

अस्याः प्रदानशक्तिस्त्वन्यैरप्यङ्गीक्रियते। आदानशक्तिमपि संस्कृती-करणद्वाराऽद्याप्यस्याः ख्यापयितुं व्याकरणमूर्ध्वबाहु विरौति।

## परिष्कारभाषा

चिरात् परतन्त्रे भारते स्वातन्त्र्यसंभावितामन्यविधां भौतिकाद्या-विष्कारोन्नतिं विधातुमपारयद्भिर्ग्रन्थकृतेषु प्राचीनविषयेषु क्रमशः सूक्ष्मविचार-सरणिः प्रचालितैव। स च सूक्ष्मविचारः क्रमशः एवं स्वरूपमधात् यत् प्रकटी-कर्तुं स्पर्शरहितानामन्यभाषाणां का कथा? एषा संस्कृतभाषापि स्वरूपपरि-वर्तनं विना न शशाक। ततश्च तस्याः परिष्कारभाषात्वेन परिणतिर्बभूव।

एषा च प्रायः षोडशशताब्द्यां स्वरूपमधात्। विंशशताब्द्याः प्रथमभागं यावदस्याः परिपोषः समभूत्। वर्तते चास्या अद्यापि परिपोषस्यावश्यकता परमग्रे राजभाषाया विदेशीयाया अधिकप्रचाराद् विदेशीयविद्वद्भिर्विशेष-समागमाच्च पाश्चात्यपण्डितानामिव भारतीयविदुषामपि अर्थविबोधमन्तराऽपि शब्दतः प्राचीनपुस्तकानां पठनम्, कः शब्दः, कुत्र कुत्र प्रयुक्तः, कस्मिन् समये कस्य ग्रन्थस्य लेखनम्, इत्यादि प्रधानं वैदुष्यं प्रतिष्ठामापत्। एकस्मिन् विष-येऽपि साभिनिवेशविचारधारया निष्कर्षानुसन्धानन्तु ह्रासमयात्। अतः सूक्ष्मविचारस्यावरोधेन नाधुना प्रायोऽस्याः परिपोषः प्रचलति। परमस्या

एवावतारास्तदुपासकाः सत्यमभिमन्यन्ते यदस्या अनुकम्पां विना संस्कृतसाहित्यिककतिपयविषयाणां मर्म नाधिगन्तुं शक्यते। अस्माकं शिष्यतामन्तरा च दर्शनानि कतिपयेऽन्ये विषयाश्च नाववोद्धुमर्हन्ति इति।

इदानीं च क्रमशः क्षीणाया अस्याः सुरसरस्वत्या दुहि तृतया सर्वस्वहर्त्री उत्तराधिकारिणो हिन्दी उत्तिष्ठतीति साम्प्रतममरत्वमप्यस्याः संशयास्पदम्।

## अधुना व्याकरणस्योपरि आक्षेपाः

(१) व्यर्थो विस्तारो व्याकरणस्य, साधुप्रयोगाणां परिज्ञानमात्रप्रयोगनम् व्याकरणस्य। तदनुपयोगिनः शास्त्रार्थस्य परिष्कारस्य च मुधैव प्रवेशोऽत्र शास्त्रे। एषामभावेऽपि प्राचां विदुषां महावैयाकरणत्वम्, अन्यथा किं मूलं स्यादिदानीन्तनीनां कल्पनानाम्?

(२) अर्थविचारस्य कृते सन्ति अन्यानि शास्त्राणि, यथा न्यायशास्त्रस्य शब्दखण्डः, पूर्वमीमांसा च वाक्यार्थविचारस्य अत एव न्यायभाष्यकृतोक्तम्—पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं वाक्यलक्षणाया अर्थलक्षणम्। मोक्षपथप्रतिपादकानि विलसन्ति नाम भारतीयानि आस्तिकानि नास्तिकानि च बहूनि दर्शनानि परस्परं विरुद्धानि तर्हि अनर्थकरमेव पदार्थादि विवेचनद्वारा दर्शनान्तरतामापाद्य जटिलतासम्पादनं व्याकरणस्य एवञ्च वाक्यपदीयभूषणमञ्जूषादिग्रन्थाः शक्तिह्रासका एव।

(३) सिद्धान्तकौमुदीमात्रस्याध्ययनेन परिपूर्यते प्रयोगव्युत्पत्तिः, ऊहापोहफलकस्येषद्विचारस्यावश्यकतायान्तु उदाहरणबहुलतया महाभाष्याध्यायनं कथञ्चिदापतेत् परमितरेषां वैयर्थ्यमेव।

(४) स्वातन्त्र्यं सर्वविधोन्नतेर्निदानमिति न्यायेन स्वतन्त्रा चेत् सुरसरस्वती आबालवृद्धं रसनासु द्रुतं नर्तेत्। कठिनया व्याकरणशृङ्खलया पञ्जरीकृतपदा तु कथं प्रभवेदपसर्तुमपि? तथा च व्याकरणनियमा भाषाप्रसारविरोधिनः।

(५) संस्कृतभाषायाः प्रारम्भिकमपि व्याकरणोपायेनैव सम्पाद्यते तच्च व्याकरणमतिकठिनम्। तथा च संस्कृतभाषादुर्गस्य द्वारि व्याकरणं गम्भीरं परिखासदृशम्।

(६) व्याकरणशास्त्रस्यायत्तीकरणं घोषणादिकं विना न संभवतीति मस्तिष्कशक्तेः शत्रुरिदं शास्त्रम्।

(७) व्याकरणाध्यायिनामपि न सम्पद्यते तथा पाटवं भाषणलेखादिषु, अन्यशास्त्राध्यायिनामपि तु दृश्यते।

(८) पाणिनीयानुशासनद्वारा साधुत्वप्रक्रिया अतीव गहना, न तथा प्रक्रियाव्याकरणस्य इत्येवमादयः।

एते चाक्षेपा नाल्पानामपि तु बहूनाम्। तत्र मम साधारणतया प्रतिभा-नम्र–प्राणिमात्रस्यापि मनोभेदेनाभिरोचनीयं किमपि वस्तु द्वेषणीयं च किञ्चित्, जगति यावन्तः पदार्थास्ते सर्वेऽपि व्यवहारनिकषेणापि सदोषाः सगुणाश्च सिद्धयन्ति। अभिरोचनीयेषु वस्तुषु जना गुणान् द्रष्टुं दीर्घदर्शिनो जायन्ते, द्वेषणीयेषु च दोषगणानेव पश्यन्तो गुणदर्शनवेलायां जात्यन्धतां दधति। तदपि व्यावहारिकशास्त्रस्यैव प्रमेयं न तत्र वेदवाक्यानामावश्यकता। अभिरुचिश्च कुत्रापि इष्टसाधनेष्वेव वस्तुषु न स्वाभाविकी सा तु सुखनिर्दुःखितामात्रे। इष्ट-साधनता च न प्रतीयते संस्कृतवचसां तर्हि कथमभिरोचनीयता ? व्यर्थताप्रत्य-येन कथन्न प्रद्वेषः ? कथं नेष्टसाधनतेत्यत्र इष्टं न सिद्धयति एतावदेवोत्तरम्। प्रथमं कथमिष्टस्य सिद्धिरिति चेन्न तादृगिष्टमिदानीम्। इष्टस्य परिवर्तनन्तु देश-परिस्थितिपरिवर्त्तनायत्तम्। संस्कृतभाषया यादृशं फलं प्रसूयते तन्नास्तीदा-नीन्तनानां समीहितं यच्च समीहितं न तत्तया साध्यते इति नाभिरुचिर्जनानां संस्कृतवाणीषु इति किमधिकेन विवेचनेनात्र।

एवञ्च संस्कृतगिरः स्पृहणीयतायां तस्याः परिमार्जनाय तत्र प्रौढयै चोप-योगिनो व्याकरणस्य, 'स्वामिन्या उपालम्भसमये सेवकस्य पादप्रहारो न विस्मयाये' ति उपरि आक्षेपा अपि तथैव। तथा च संस्कृतभाषा प्रसाराभावेनैव व्याकरणोपरि कटूक्तयो न तु व्याकरणस्य वास्तविक आक्षेपः।

## प्रथमाक्षेप विचारः

विस्तारस्य वैयर्थ्यं हि विस्तृतांशानां निष्फलतामन्तरा न सिद्धयति तर्हि कस्यांशस्य निष्फलत्वमिति प्रदर्शनेनैव विस्तरवैयर्थ्यम्। शास्त्रार्थांशस्य चेत् कस्य शास्त्रार्थस्य ? मया तु प्रतीयते प्रतिवर्णांशानां फलाफलविवेचनायैव बहवः शास्त्रार्थाः। यत्र "एकमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" इति परिभाषा तत्रापि कस्यचिदंशस्य वैयर्थ्यम् तत्र न फलाफलविचारो निष्फ-लानां चोपसनेत्याद्या आक्षेपा न स्पृशन्ति लक्ष्यं प्रत्युत प्रतीपमेवाञ्चन्ति।

भवतु नाम वर्णानां सार्थक्याय शास्त्रार्थः परं प्रयोगसाधुत्वासाधुत्वे न तस्योपयोग इत्यपि विरुद्धमेव। मया तु सर्वत्रैव वर्णसार्थक्यविचारे कस्यचित्

साधोरसाधुत्वम् असाधोश्च साधुत्वमवापाद्यते इति दृश्यते। एतावता प्राचीनेनापि विचारेण श्रद्धीयताम् ऋषिपुङ्गवानां वचनानि वर्णशः सार्थकानि इति किमिदानीं विचारेण ? प्रयोगपरिज्ञान एव प्रयत्यतामिति चेत् किं तान् विचारान् अवगत्य श्रद्धेयम् ? अथवा ज्ञानं विनैव उतान्यस्य विचारे श्रद्धालुना भूत्वा ? प्रथमश्चेदापतन्ति विचारावगमाय शास्त्रार्थग्रन्थानामध्ययनानि। न द्वितीयो विज्ञानमन्तरा श्रद्धाया मूर्खतापदेनाधुना व्यपदेशात्। तृतीयोऽपि दुर्लभः. अन्यथा सर्वे जगति एकमत एवावतिष्ठेरन्।

अपरमपि शास्त्रार्थक्षेत्रमवलोक्यताम्। पाणिनीयानि सूत्राणि सूचनाच्च सूत्राणि भवन्ति न स्फुटतया सर्वं प्रतिपादयन्ति, अनेनेदमेव सूच्यते नैवमेतद्विरोधादस्य चानुकूलत्वादित्यादिविचारविधुरो न किमपि सूचितो भवेत्। तादृशो विचारक्रम एव शास्त्रार्थपदव्यपदेश्यः। तत्र च मानसशक्तिभेदेन विचारभेदः; विचारभेदे च तत्समीक्षा इत्यादिक्रमः सर्वत्रापि शास्त्रे सर्वासु च भाषासु किमधिकं क्रियते व्याकरणेन ? यत्रैव च कल्पनानां प्रसारस्तत्रैव मतभेदाद्विचारपरम्परेति न नूतनं क्रियते व्याकरणे। सर्वेषाञ्च विचाराणां साक्षादेव प्रभावः प्रयोगेष्वापतति। परिष्कारोऽपि एकविधा भाषा संस्कृतान्तर्गतैव। अल्पीयसां परिचयात् क्लिष्टतया बहूनां भ्रमः। परं यावच्छक्यमन्यभाषया कार्यं निर्वहति तावन्न प्रयुञ्जते परिष्कारं वैयाकरणाः। तत्रापि च प्रयोगाणां साधुत्वासाधुत्वे एवापाद्येते। लेखविस्तारभिया च नोदाह्रियते। वार्तिकस्यापि अनुशासनानि सूत्रतुल्यान्येव केवलं वाच्यमित्याद्यधिकमुच्यते। तदपि व्याख्यानमपेक्षते। महाभाष्यं यद्यपि विशालो ग्रन्थस्तथापि न सर्वं प्रयोगसाधुत्वायापेक्षितं व्याख्योपयोगि च कण्ठरवेणोद्घोषितम् अपितु तात्पर्यवर्णनेन ध्वननेन प्रयोगफलकेन अविरोधिनाऽनुसन्धानेनापि नियमा निस्सार्यन्ते न तेन न्यूनता भाष्यस्यापतति, नाद्यावधि जगति पुस्तकं किमपि प्राकटद् यत्स्वप्रधानोपयोगिनः सर्वान् विषयान् प्रतिपादयति स्फुटेन शब्देन, तथा च न कोऽपि प्रयोगानुपयोगी विचारः प्रयासो वा।

अग्रेतनानां विचारप्रवाहाणां वास्तविकत्वे सफलत्वे च प्राचां महावैयाकरणत्वं विरुद्ध्यते इति चेन् न विरुद्ध्यते इति विचारयामि। तेषां ग्रन्थाध्ययनेनैवाग्रेतना वैयाकरणाः भवन्तो गुरुत्वेन महावैयाकरणतां ख्यापयन्ति पूर्वजानाम्। तथाहि विदितचरमेव त्रिमुनि पाणिनीयं व्याकरणमिति। तत्र त्रयो मुनयः शिष्टप्रयुक्ताः साधुत्वेन प्रसिद्धाः शब्दाश्च व्याकरणनये स्वतः प्रमाण-

भूताः। मुनीतरेषान्तु सयुक्तिकं व्याख्यानन्तु परतस्तया प्रमाणम्। तथा च मुनीनामुपदेशेनैव गुरुत्वमन्येषाञ्चोपदेशाभिप्रायप्रदर्शनेन।

ननु नायमभिप्राय आक्षेपस्य, अपितु अर्वाचीनैरुद्भाविता नूतनाः पदार्थाः पूर्वजानां ज्ञाता आसन्न वा? ज्ञाताश्चेत् कथं न तैरेव स्वग्रन्थे लिखिताः, अज्ञाताश्चेद् अल्पज्ञता आपततीति। सत्यम् परं नायमाक्षेपोऽस्यैव शास्त्रस्योपरि अपितु सर्वेषु क्रमश उन्नीयमानेषु शास्त्रेषु। न चाज्ञातास्ते विषयास्तेषाम्, तथापि न सर्वे स्वग्रन्थे लिखिताः। नहि कश्चिदपि विषय एकेनोपदेशेन ग्रन्थेन वा समाप्तिमेति इत्युपर्यवोचमेव। अधुनापि कस्यचिज्जीवतः पुस्तके उपदेशे वा संदिहानाः साक्षात्पृच्छन्ति चेत्तेन संशयोच्छेदः क्रियत एव। मृते च यद्यन्ये संशयमुच्छिन्दन्ति तदा ग्रन्थानान्तरतामापद्यते।

परिष्कारप्रणाली न प्राचीनेति चेत्सत्यं नूतना परं तद्विषयाः प्राचीना एव न नूतनाः। अत एव परिष्कारभाषयाऽपि प्राचां वचनानि तत्सूचिताः पदार्था वा न विरुद्धयन्ते। शब्दा अपि प्रायः प्राचीनास्तेषां विन्यासशैल्येव नूतना। तथापि प्राचां न्यूनतेति चेत्, नायमत्रैव शास्त्रे प्रश्नोऽपि तु बहुषु विषयेषु तदर्थं परमार्थदर्शनस्य वार्तिकान्येवोदाह्रियन्ते। तथाहि–

अपश्यतां पितृषु समस्तवेदितामतिष्ठतामपि च सुतप्रतीक्षया।
पदे पदे निखिलपरीक्षिणां महान् समुद्यमोऽद्य तु परमार्थदर्शिनाम्॥
प्रवर्त्तयन् सरणिमिमां परीक्षया विशोधयन्न्य इह कृतस्थितिभ्रमान्।
नवं नवं प्रणयति शास्त्रमात्मवान् प्रयात्यसौ पितृऋणनिष्कृतिं कृती॥
चिरन्तना निशितधियोऽप्यसाधना दधुश्चिरादपि किल नातिविज्ञताम्।
महाढ्यतां वहतु महोद्यमोऽपि सन् वणिग्जनो ननु कथमल्पभाण्डकः॥
चिरन्तनैरुपकृतमद्य तु क्रमाद्वहन् सुधीर्महदिह विज्ञताधनम्।
निरस्य तद्भ्रमनिकरं परीक्षया महीयसीः प्रथयति शास्त्रपद्धतीः॥

कलिरयमिह का स्यादुन्नतिर्हन्त जन्तो-
रतिवलवति दैवे पौरुषं किं नु कुर्यात्।
अवनतिरवराणां निश्चिता पूर्वजेभ्यो
भुवि भवदपि दुःखं शर्मणेऽमुत्र शश्वत्॥४।२।७८॥
अतनिषत चिरत्ना दिव्यशक्त्या प्रबन्धान्
क इह मनुजशक्तिस्तादृशानद्य कुर्यात्।
शिशुजनमिति वादैर्मोहयन्तः समन्ताद्
रिपव इदमधन्यं भारतं नाशयन्ति॥७९॥

## द्वितीयाक्षेपविचारः

प्रागेव प्रतिपादितं शब्दार्थयोः सहैव सृष्टिः, व्यवहारेऽपि शब्दार्थयोरतिसन्निहितस्तादात्म्यसम्बन्धः। वर्तन्ते च तादात्म्योपपादिका युक्तयोऽपि ग्रन्थेषु। एवमभिन्नयोरत्यन्तसम्बद्धयोर्वाऽन्यतरस्य विभिन्नशास्त्रेण विवरणं किमिव युज्यते? शक्तिग्रहं व्याकरणोपमानेत्यादिकारिकाद्वारा शक्तिग्राहकत्वं व्याकरणस्य नाद्यैव प्राचलत्। न चार्थविचारमन्तरा शक्तिग्रहः सम्भवति। नापि चाधुनिकै वैयाकरणैरेव शास्त्रे ऽस्मिन्नर्थविचारोऽवतारितः प्रत्युत सूत्रेष्वेव प्रकृतिप्रत्ययानां समेषां बहूनां पदानामल्पीयसां वाक्यानाञ्चार्था उपनिबद्धाः। भाष्यकृता च विस्तरेण विवेचितम्। तदुपज्ञा एवाग्रेतना ग्रन्थाः।

अन्यच्च। अर्थविचारस्यावश्यकत्वे अन्यशास्त्रमिव व्याकरणमपि कुर्वत् कथमपराध्यति? अपितु व्याकरणस्यैव प्रधानोऽर्थविचारः। तदुपक्रम एव न्यायशास्त्रेऽपि नव्यानां द्वाराऽस्य प्रवेशः। अतो न्यायसूत्रभाष्यादिषु गौणतयैव क्वचिदस्यात्यल्प उल्लेखः। शक्तिग्राहकेष्वपि इदम् इव न न्यायमीमांसाशास्त्रे गृह्येते। पूर्वमीमांसाशास्त्रमपि वैदिकवाक्यानां प्राधान्येन विनियोगाय तदुपयोगिनश्च वाक्यार्थान् वर्णयति। तत्रापि प्राधान्येन वैदिकवाक्यानामेव तद्व्युत्पादनोपायतयैव लौकिकार्थान् गृह्णाति। अतो नाद्यापि लौकिकपदवाक्यानां प्राधान्येनार्थविचारो मीमांसाशास्त्र उपक्रान्तः।

वस्तुतः परिष्कारभाषया वाक्यार्थवर्णनद्वारा यः शाब्दबोधप्रकारो न्याये व्याकरणे चोपलभ्यते तन्मर्मस्पृशन्तो बहवः सम्यगनवबोधनेन च फलमलभमाना निष्फलतां घोषयन्तो द्रुह्यन्ति। तत्र नाधिकं वच्मि। अध्ययनेनापि श्रमेण परिज्ञेयस्य तस्य न लघुलेखेनाववोद्धुं तैः शक्यते। नापि च मंस्यते। संस्कृतभाषया उत्पन्नानि इमानि विचाररत्नानि संस्कृताध्येतृभिरनभिज्ञतयोपेक्ष्यन्त आक्षिप्यन्ते च। जीवन्तोऽन्यभाषाभिज्ञास्तु तानि रत्नानि समीहमानाः शनैः किञ्चिद् गृहीतवन्तोऽन्यान् जिघृक्षन्ति च। इति दशां विलोक्य विषीदन्नपि एतावता मोदाम्येव यदग्रेऽस्य मूल्यं दास्यन्ति। तादृश्याः सम्भावनाया मार्गः परिस्फुरति।

## तदर्थं किञ्चिन्निवेदनम्

व्याकरणार्थांशभागस्य विरोधिनो भवन्तो हिन्दीभाषाया अतिसरलान्यपि क्रमश आविर्भूतानि भवन्ति च लघुपुस्तकानि अवश्यं पश्यन्तु। तत्र लघुपुस्तकेषु कियता कालेन. के के विषयाः सन्निवेश्यन्ते। तस्य प्रयोजनमस्ति

न वा ? प्रयोजनाभावे कथं तस्य क्रमशोऽभिवृद्धिः ? लक्षणाव्यञ्जनादिसहितास्ते व्याकरणविषयाः कस्याः कक्षायाः पाठ्यपुस्तके ? तादृशकक्षास्थाः किं संस्कृतच्छात्रास्तैर्विषयैर्व्युत्पाद्यन्ते ? अवलोकनेन परिज्ञास्यते यदेषमो गत एव वा सन्निहिते हायने स्कूले पाठ्यहिन्दीव्याकरणपुस्तके आकांक्षायोग्यतासन्निधीनां परिचयमात्रेण सन्निवेशः। एवञ्चेवमेव यदि हिन्दीभाषा क्रमशोऽग्रे सौविध्यवशाद् द्रुतं पदमुपस्थापयिष्यन्ती अभविष्यत् संस्कृताध्येतृणामिमे विषया हिन्दीभाषातोऽध्येया इत्यापत्स्यत्। व्याकरणोपेक्षायाः फलञ्च दृष्टिगोचरतामागमिष्यत्।

अतः परं लेखविस्तरभियाऽतिसंक्षेपेणैव सूचयामि—

व्याकरणस्य दर्शनन्तु पाणिनेरपि प्राग्भवेनोपवर्षेण स्फोटायनेन च मुनिना प्रदर्शितम्। महाभाष्यस्याऽप्यत्रोपेक्षैव दृश्यते। सूचनामात्रं महाभाष्ये मिलति न तु दर्शनाभिप्रायः कश्चित् स्फुटतया प्रतिभासते। अनन्तरं भर्तृहरिणा स्मार्यते तद्दर्शनं नतु परिपूर्णं स्वरूपं वैयाकरणानां संमुखे इदानीम्। सर्वदर्शन संग्रहकृतापि दर्शनविधयोपपादयतापि दर्शनतयापेक्षिता न सर्वे पदार्था वर्णिताः। मञ्जूषाग्रन्थे बौद्धार्थदर्शनप्रकरणे दर्शनतोपयोगिनः कतिपयपदार्थाः साधिताः परं न ते दर्शनविधया योजिता तथाचाद्य व्याकरणदर्शनं विकलाङ्गमेवास्माकं गोचरम्। काशीस्थश्रीगोपीनाथजीकविराजमुखाच्छ्रुतं यच्छब्दब्रह्मवादी मीमांसकातिरिक्तः कश्चिन्मण्डनमिश्रो यस्य कश्चिल्लेखोऽधुनाप्युपलभ्यते। ब्रह्मसूत्रोपरि शब्दब्रह्मतया भर्तृहरिकृता वृत्तिर्विदेशेषु प्रकाशिता। महाभाष्योदाहृतश्रुतिषु अन्यत्र च कतिपयासु श्रुतिषु अस्य संबन्धो दर्शनानुकूल उपलभ्यते। पुराणेतिहासेष्वपि नानाहृता अस्य पदार्थाः। प्रसिद्धे श्रीमद्भागवतेऽपि द्वादशस्कन्धे षष्ठेऽध्याये ४०–४४ श्लोकेषु वर्ततेऽस्योल्लेखः।

आक्षेपोपरि तु एतावदेव वक्तव्यं यन्न नूतनैरुद्भाविताऽस्य दर्शनताऽपि तु अत्रोपेक्षैव तेषां दृश्यते। यथा च बहूनि दर्शनानि भारतीयानि तथाऽनेनापि एकेन स्थीयते चेत् किं हीयते ? एकेनैव मोक्षसम्भवेऽनेकेषां वैयर्थ्यमिति चेत्कथमनेकानि प्रचलन्ति रक्ष्यन्ते च। अनेन मोक्षो न सेत्स्यति इतरैस्तु साध्यत इति केन साक्षात्कृतम् ?

## तृतीयाक्षेपविचारः

न सिद्धान्तकौमुदीमात्राध्ययनेन महाभाष्याध्ययनेन च परिसमाप्यते प्रयोगव्युत्पत्तिः। किमेतावता आचार्यपरीक्षायां निर्दिष्टानां ग्रन्थानामध्ययने-

नापि न परिसमाप्यते। ये ग्रन्था अत्रशिष्यन्ते तत्फलान्यपि तथैव। दिङ्मात्रमुदाह्रियते। सिद्धान्तकौमुद्यामजन्तपुंल्लिङ्गप्रकरणे शुद्धधियावित्यत्र शुद्धपदार्थस्य कारकत्वाभावेन यणभावः कौमुद्यामुक्तः। तत्रैव तत्त्वबोधिनी सूचयति शुद्धं ध्यायतीति विग्रहे कारकत्वेन यणिष्ट इति। कस्तावन्मात्राध्ययनेनाववोद्धुं प्रभवति तत्र तत्र कारकत्वतदभावौ ? शेखरेऽपि कारकत्वाभावोपपादने ये शब्दा उक्तास्तेषामर्थाववोधे बहुशो व्याकरणाचार्या अपि स्वतो न प्रभवन्ति। किमिदं न प्रयोगपरिज्ञानोपयोगि ? समर्थः पदविधिरिति सूत्रं पदसम्बन्धिविधीनां समर्थाश्रितत्वं सूचयति। उच्यतां कानि सूत्राणि न पदसम्बन्धीनि ? सर्वाणि सूत्राणि पदमेव संस्कुर्वन्ति। पदनिमित्तकत्वेनापि सन्धिप्रकरणेऽपि वहूनि सूत्राणि पदपदान्तनिमित्तकानि। तानि च सामर्थ्यविरहेऽपि प्रवर्तमानानीष्टानि। क्व सिद्धान्तकौमुद्यामुक्तं यत्सन्धिप्रकरणे समर्थसूत्रं न प्रवर्तते। समासेऽपि न पदत्वेन पदं निमित्तं किन्तु सुबन्तत्वेन नामधातुरपि कश्चित्प्रातिपदिकादेव जायमानो न सुबन्तत्वनिमित्तकोऽपि। तत्रापि च सामर्थ्यमपेक्षते। पदविधित्वलक्षणमपि न मनोरमाशेखरमूले किन्तु शेखरटीकायाम्। तदपि चाद्यावधि मुद्रितमेकशेषे वृत्तौ न प्रयाति, तस्यापि च सामर्थ्ये सत्येव प्रसिद्धिः। 'इसुसोः सामर्थ्ये' इति सन्धिसूत्रमपि नामार्थेऽभेदेनान्वये न प्रवर्तते। आख्यातार्थेऽभेदान्वयेऽपि प्रवर्तते इति नात्र लिखितम्। छात्रशब्दस्य स्त्रीलिङ्गे कौमुदीमनोरमाशेखरादिमूलाध्ययनमात्रेण छात्री इत्येव प्रतीयेत। परं तस्यासाधुत्वं छात्रा इत्यस्य साधुत्वं सोपपादनमन्यत्र कृतम्। किमेतावता ? भावाख्यातेऽपि बहुवचनस्य प्रयोगः। आख्यातान्तक्रियाविशेषणेऽपि बहुवचनान्तत्वं स्त्रीलिंगत्वं च वचनेन भवति। कौमुदीपाठिनां बहूनान्तु मृदु पचतीत्यत्र प्रथमाद्वितीययोर्विवाद एव।

अल्पा एतादृशाः प्रयोगा इत्यल्पफला एते प्रयासा इति केषाञ्चिद् वच उपरि किं मयाऽत्र लेखे लेखनीयम्। संस्कृतभाषयैव कति सेटकानि फलानि लभ्यन्त इत्यत्र विवादे कः श्रद्दधीत ममादस्तोलनम् ? तत्र निर्णये जाते मयापि मातुं प्रभविष्य ते। परमेतावत्सङ्कोचं कृत्वापि ब्रवीमि यल्लक्षादधिकानां प्रयोगाणां व्युत्पत्तिरवशिष्यते।

## चतुर्थाक्षेपविचारः

व्याकरणं पाणिनीयमारम्भादेव शिक्षयति यत् प्रथमं भाषा तदनन्तरं व्याकरणोद्भवः। भाषाप्रसारः प्रयोक्तॄणां व्यवहाराधीनः, व्यवहारवशात्

प्रसृतां भाषामनुगच्छति व्याकरणम्। अशुद्धभाषिणमध्यापकोऽध्यक्षः परीक्षको राजा वा दण्डयति नतु व्याकरणम्। तत्त एतावदेव वोधयति यदद्यावधि शिष्टा एवमभाषन्त नैवमिति यदि न मनुते वक्ता अन्ये च नानुकुर्वन्ति तदोपेक्षते। यदि वहवोऽनुकुर्वन्ति तदा तानेव शिष्टान् मत्वा पूर्वमपशब्दतया घोषितानपि शब्दान् साधुतया व्यवस्थापयति। व्याकरणमतीवोदारतां दधानं नेषदपि जिह्लेति जातिपरिवर्तनेऽपि। शब्दा अनन्ता नैकस्य गृहे ग्रन्थे वा समाप्तिं यन्ति। नैके जना अपि सर्वान् जानन्ति। प्रतिपदं प्रतिवाक्यञ्च व्यवहारदर्शनेन समस्तस्यायुषो व्ययेऽपि कश्चिद् व्यवहारनिपुणो न भवितुमर्हति। तत्र व्याकरणं नियमेन निखिलान् शब्दानेकत्र सामान्यरूपेण दर्शयति।

व्याकरणमपि नैकेनोद्भाव्यते किन्तु अंशभेदेन बहुभिः, एकेन तु ग्रन्थीक्रियते। ग्रन्थकर्तुश्च शब्दसंग्रहेऽनुगमे नियमस्य लाघवेन सरलतया च निर्माण एव पाण्डित्यम्। प्रतिभाशालिनो व्यवहर्त्तारः शब्दविन्यासे किमपि सौष्ठवं प्रतिभोत्पादितमाकलय्य सुष्ठुतया व्यवहरन्ति अन्यानुर्पादशन्ति, अन्ये चानुकुर्वते तदा तदेव नियमरूपतां धत्ते। एवमेव बहूनां नियमानां प्रचारे ग्रन्थे संगृह्यन्ते। यथा हिन्दीभाषायां प्रागाकांक्षासन्निध्योरप्रवेशेऽपि चिरप्रसृतायां मैथिलीशरणकवितायां पद्यवन्धेऽपि नानयोः परित्यागः। तेन च तस्या भूयानादरः। तथा च सर्वेऽपि तान् गुणान् अवगच्छन्तु इति धिया व्याकरणपुस्तकेऽधुना आकांक्षादयः सन्निवेशिताः। शब्दसौष्ठवादिगुणैराल्हादयन्त्यपि निम्ननिर्दिष्टा कविसम्राजः कविता आकांक्षादिपरित्यागेन मशकनिवारण्या सनाथे कोमले पर्यंके शयानस्य सुन्दरीभिर्वीज्यमानस्य नृपस्य शय्यायां मत्कुणैकस्य प्रवेशावसरे सम्भावितां लीलामनुहरत्येव।

"मुहुर्मुहुः श्वाससमूहसर्पसे कलिन्दजा का कपता प्रवाह था।
असंख्यफूत्कारप्रभावसे सदा विषाक्त होता सरितासदम्बु था
प्रवाहिता जो कमनीय धार है कलिन्दजा की भवदीय सामने
विदूषिता जो पहले अतीवथी विनाशकारी विषकालनाग से
अतः करूँगा यह कार्य मैं स्वयं स्वहस्त में प्राणस्वकीय के लिये
स्वजाति औ जन्म धरानिमित्त मैं न भीत हूँगा विषकाल सर्प से"

अत्र पद्ये प्रथमे सर्पस्य श्वाससमूहेन कम्पनमभिप्रेतम्। किन्तु विभक्तिः सर्पादुत्तरं पूर्वापरीभावाकांक्षां परित्यज्य कृता। हिन्दीभाषापि विभक्तेर्नामोत्तरमेव प्रयोगं सहते। बहुव्रीहिकर्मधारयाभ्यां समर्थने विधेयाविमर्शदोषः।

सर्पेणैव कम्पनस्याभिप्रेतत्वे श्वासमूहपदवैयर्थ्यंद्वाराऽधिकपदत्वं दोष:" तत्पुरुष-समासे प्रधानीभूतस्य पूर्वनिपातं निपातमिव स्वस्या मनुते हिन्दीभाषा। यद्यपि एते दोषा संस्कृतसाहित्यग्रन्थे प्रायो वर्ण्यन्ते परं सामान्यतो वाक्यदोषा व्याकरणोपेक्षाफलानि। एवमेव विनाशकारीत्यादिपादे विषकालनागेति पदे एतादृशा दोषा उन्नेयाः। यद्येतादृशो हिन्दीभाषापरिष्कारप्रवाहः केनचिद् दूरित्तेन प्रतीपं नाश्चेत्तदा वर्षैरेव न युगेन एतादृशव्याकरणविषयाणां सन्निवेशो हिन्दी पुस्तके द्रक्ष्यते। एतादृशस्य व्याकरणस्योद्गमस्वभावयोरुपरि विश्वासेऽवश्यं मंस्यन्ते पाठका यन्न व्याकरणं भाषाप्रसारविरोधि अपि तु स्वीयां जरठतां परिहातुं नवञ्च यौवनमादातुं सर्वदैव समीहते भाषाप्रसारम्। प्रसारेण च भाषापरिवर्तनद्वारा व्याकरणस्वरूपपरिवर्तनमपि आयात्येव। अत्र संस्कृत-भाषायाः कोऽस्ति वक्ता? के चानुकर्त्तारः? इति गोचराभावादेव संस्कृतगवी संहतपदा न ग्रन्थदुर्गाद्बहिर्दर्शनं ददाति, व्याकरणेन मार्गपरिष्कारेऽपि संकुचितेव पदमपि न चालयति।

एवन्तु जायते भाषायाः सम्यगनुगमकं यदि भवति व्याकरणं तदा समयेन भाषायाः स्वभावतां धत्ते। तदा एवं संस्कारो भवति जनानां यद् व्याकरणं विना भाषात्वमेव न प्रतिभाति। आरम्भादेव व्याकरणशिक्षणमपि प्रारभ्यते। तत्रच किञ्चिदनुपदमपि सूचयिष्यते।

## अथ पञ्चमाक्षेपविचारः

आक्षेपकोऽपि महानुदारो यो व्याकरणं नाक्षिपति परं शिक्षापद्धतिमेव। शिक्षापद्धतौ ममाप्यस्ति वैमत्यं तत्तु लेखान्तरयोग्यमत्र तु व्याकरणमेव विषयः। अहमपि मन्ये यदस्मिन् समये यथाऽन्यभाषाशिक्षणपद्धतिः कमपि गुणमासादितवती न तथा संस्कृतस्य। परं यादृशी सुविधा अन्यभाषायै प्राप्यते तस्याः शतांशोऽपि नास्यै। औदासीन्याधिकं प्रद्वेषश्चास्यामिति प्रागेव सूचितम्। सर्वविधोऽपि सुधारो धनायत्तः। अस्या भाषाया निर्धना एव गोचराः। पद्धतावाक्षेपो न व्याकरणं स्पृशतीत्येवास्याक्षेपस्योत्तरं सम्यङ् मन्ये। नेदं व्याकरणस्यानुशासनं यत्प्रकारान्तरेण भाषाप्रवेशसम्भवे बलाद् व्याकरणमारम्भे पाठनीयमेव। न व्याकरणं विना भाषायां प्रवेश इति हेतोरेवाध्याप्यते तदाऽपि भवतु नाम भाषायाः स्वभावो दोषो व्याकरणं कथमपराध्यति।

वस्तुत इदानीं न कापि भाषा व्याकरणं विना शिक्ष्यत इत्यप्यालोचनीयम्। नहि पाठशालायां प्रवेशानन्तरमेवाध्ययनम्। नवा पुस्तकद्वाराऽभ्यास

एवाभ्यासः। तादृगेव संस्कृतस्य कृते क्रियेत तत्र सारल्यमेव प्रतीयेत। इंग्लिश-भाषायाः कठिनं व्याकरणं प्रारम्भ एव पाठ्यते। संस्कृते तु पदोच्चारणमेव शिक्ष्यते। पदश्रवणे के के वर्णा इति स्वयमेव प्रतिभासते। वर्णमात्रापरिचयेन च पदपरिचयोऽपि लेखावलोकनेनैव जायते। इंग्लिशभाषायान्तु अक्षरोच्चारणं पदोच्चारणञ्च भिन्नं भिन्नमिति घोष्यते। इमे वर्णा एवञ्च पदमुच्चारणीय-मिति पाठः। तावता श्रमेण कश्चिन्न संस्कृतं रटति ? रटेच्चेन्न कदाचिल्लेखा-शुद्धिरुच्चारणाशुद्धिश्चापतेत्। तथा चैंग्लिशभाषातः सरलं संस्कृतं काठिन्यभ्र-मस्तु कारणान्तरवशादिति नेह तन्यते।

## व्याकरणनिर्माणेऽवधातव्यम्

भाषायाः सम्यक् परिशीलनमन्तरा व्याकरणनिर्माणं विफलाय जायते। अधुना प्रवर्तते हिन्दीभाषाया व्याकरणनिर्माणम्। तत्र संस्कृतव्याकरणे निष्णा-तेन हिन्दीभाषाया व्याकरणं निर्मीयेत चेदधिकं फलेग्रहि सम्पद्येत। यतः संस्कृतव्याकरणेन संस्कृतभाषा प्रत्यवयवं व्याप्ता वर्तते। संस्कृतेन चात्यधिकं संगच्छते हिन्दीभाषा, तथा च संस्कृतव्याकरणस्य ये ये नियमा हिन्दीभाषायां समनुयन्ति ते सर्वे तत्रादरणीयाः। परं तत्रापीदमवधातव्यम्, नियमस्य किथा-नुपयोगः संस्कृते ? तादृशश्चेन्नोपयोगो हिन्दीभाषायां स्वतन्त्र एव निर्मातव्यः। ये च नियमाः सर्वथैव संस्कृतस्य समन्वयं न भजन्ते ते स्वतन्त्रा एव हिन्दी-भाषाया उचिता न तु इंग्लिशव्याकरणानुकरणस्य आवश्यकतां पश्यामि। आंग्ल-भाषानभिज्ञस्य मम कदाचन भ्रमोऽपि सम्भवति तथापि यथानुभवं वक्तुं पार-यामि यदांग्लभाषायाः केचन नामशब्दा आगता आगच्छन्तु नाम, परं व्याकरण-नियमास्तु आंग्लभाषाया नानुगुणा इति। यथा पठनपाठनयोइंग्लिशे रीडटीचौ विभिन्नानुपूर्वीकौ द्वौ धातू। तत्र धातुभेदेन एककर्मकत्वद्विकर्मकत्वे व्यवह्रियेतां नाम। परं संस्कृतस्य पठनपाठनयोरिव हिन्द्याः पढना पढाना इत्यत्राकार मात्रस्य भेदः। तेन संस्कृतमिव प्रेरणार्थस्य प्रत्ययार्थत्वमेव हिन्दी भाषायामपि युज्यते। यतः पठतिपाठयत्योरग्राह्यत्वेऽपि पठनपाठनपाठनाशब्दा हिन्दीभाष-थापि भावप्रत्ययान्ततया संजिघृक्षिताः। न तत्र धातुभेदः केभ्यश्चिद् रोचेत। 'भाषा का अध्ययन होता है। भाषा अधीत होती है ?' इति वाक्ययोः व्यव-स्थायै कर्मभावादिप्रत्ययार्थयोरवश्यमपेक्षितत्वे रूढिशब्दतयापि नाङ्गीकर्त्तव्याः। दृश्यते च भावकृदन्तानामपि सन्निवेशो हिन्दीव्याकरणपुस्तके।

अन्यच्च— धात्वोर्द्विकर्मकत्वस्य संस्कृते न केवलं द्वितीयाविभक्तौ, अपितु अन्यविभक्तावप्युपयोगः। हिन्द्यां तु केवलं द्वितीया विभक्तावेवोपयोगः। ब्राह्म-

णाय गां ददातीति वाक्यस्य भाषायामनुवादे ब्राह्मणोत्तरं 'को' विभक्ति 'के लिये' विभक्ति वा कृत्वा द्विधाऽनुवादो दृश्यते। तावता ब्राह्मणस्य कारकभेदः कर्मसम्प्रदानत्वकृतो न युक्तोऽपि तु पूर्वोक्तयोरपि सम्प्रदानविभक्ति कृत्वा ब्राह्मणस्य सम्प्रदानत्वमेव संस्कृतानुसारि युक्तम्। तावता दाधातुघटितस्य सम्प्रदाननाम्नोऽपि सदुपयोगो घटते। 'हिन्दीव्याकरणेऽपि 'को' शब्दः सम्प्रदानविभक्तित्वेनाङ्गीकृतः, एवञ्चेद् विचारो युज्यते तदा श्रीमद्रामस्वरूपगुप्तकृते हिन्दी-निर्माण' पुस्तके 'पिता जी ने शीला को नई साडी दी' वाक्ये धातोर्द्विकर्मकत्व-वर्णनपुरस्सरं शीलायाः कर्मकारकत्ववर्णनं न सतां हृदि प्रविशेत्। गौणकर्मणो लक्षणन्तु तेषां मते 'क्रिया से 'क्या' के उत्तर में आने वाले कर्म को मुख्यकर्म और 'किसको' के अर्थ में आने वाले कर्म को गौणकर्म कहते हैं अस्ति। तच्च 'पिताजी ने चन्द्रकान्त को पुकारा' इत्यत्र तदभिमते मुख्यकर्मण्यपि प्रयाति। मुख्यकर्मलक्षणे उत्तरशब्दं प्रयुञ्जाना अपि गौणकर्मलक्षणे तत्स्थाने 'अर्थ' शब्दं लिखन्तीति भवतु नाम न व्याकरणसम्बद्धम्। आंग्लभाषायां दानस्य द्विकर्म-कत्वमुक्तमतस्तदनुकरणमेव हिन्दीभाषायां दानस्य द्विकर्मकत्वे हेतुरिति प्रति-भाति। अतो हिन्दीभाषामर्मज्ञा निवेद्यन्ते यत्सम्यग् विचारयन्तु। हिन्द्यां धातो-र्द्विकर्मकभेदस्यावश्यकता वर्तते न वा? संस्कृतगृहीतद्वि कर्मणां प्रयोगा अन्य-कारकेणापि पर्यवसिततामर्हन्ति।

## अथ पञ्चमाक्षेपस्य निष्कर्षः

अस्य विषयाः प्रायः सर्वेऽपि पूर्वविचार एव गताः। न काचिद् भाषा व्याकरणं बिना शिक्ष्यत इति उक्तमेव। न तादृग् व्याकरणं संस्कृतेऽध्याप्यते इति चेदध्यापनस्य दोषो न व्याकरणमाक्षेपणीयम्। ययैव रीत्याऽध्यापने सारल्यं सम्पाद्यते सैव रीतिराश्रयणीयेति न व्याकरणस्य कश्चिदाग्रहः। लघुकौमुदी-पुस्तकं प्रथमापरीक्षायां निवेशितम्। ते विषयास्तत्रत्या यथाकथमप्यवगन्तव्या इत्येव तस्य तात्पर्यम्। तत्र सुधारो न सम्पद्यते इत्यत्र जनताया राज्ञश्च संस्कृतवचस्यौदासीन्यं हेतुरित्यपि प्राङ् निर्दिष्टम्।

इदन्त्ववश्यमेवविचारणीयम्। यावतः संस्कृतस्यावगमं विना छात्रो लघुकौमुदीं बोद्धुं नार्हति तावति संस्कृते येन केनापि प्रकारेण लघुकौमुदीं विनैव व्युत्पत्तिः सम्पादनीया परं लघुकौमुदीमधीत्यैव यदा काव्यानि अधीते अधीयानश्चाधीतं व्याकरणमनुसन्धत्ते तदा ये गुणास्तेऽपि विशेषफलदाः सर्वथैव स्पृहणीयाः। यथा चकारपदे काव्ये समायाते व्याकरणमजानानः काव्याध्यय-नेन केवलं चकारपदस्यार्थमेव गृह्णीत, किंतु व्याकरणविज्ञः कृधातुमनुसंदधानः

कृधातोः शतशः सार्थान् प्रयोगान् व्युत्पादयति। अन्यच्च अन्यस्या भाषायाः यथाकथमपि भवतु परं संस्कृतभाषाया उपरि पूर्णोऽधिकारो व्याकरणं विना न सम्भवतीति अपरिहार्यमेव। तत्र कारणं परिस्थितिभेदः, भाषाव्याकरणयोर्वैशिष्ट्यञ्च। तथाहि—या भाषा साधारणजनप्रचलिता तस्याः प्रतिपदं व्यवहारे सम्मुखे नृत्यन्त्याः शतशः, श्रवणेन समुच्चारणेन च सम्पद्यते व्युत्पत्तिः। संस्कृतभाषा तु नाधुना व्यवहारेऽतोऽस्या अध्ययनेन व्युत्पत्तिः सम्पादनीया। तच्चाध्ययनं व्याकरणमनुगमकं विना न सम्भवति। यतो हि अनन्ताः शब्दाः संस्कृतभाषायाम् न गणनीयाः कथमपि। "इन्द्रश्चाध्येता वृहस्पतिश्च वक्ता दिव्यं वर्षसहस्रमायुः, नान्तं जगाम" इत्यादिना महाभाष्ये प्रतिपदपाठने संस्कृत भाषाज्ञानं यत् खण्डितं तद्वस्तुस्थित्यैव। अस्मादृशा लघवोऽपि वैयाकरणा इदानीमपि साधयितुं प्रभवन्ति यत्संस्कृतभाषायाः शब्दा न परिसंख्यातुमर्हाः। काव्याध्ययनमपि व्याकरणं विना प्रतिपदपाठसदृशमेव। कोषस्य का वार्ता? स तु अनन्तशब्दभण्डारस्य परिच्छेद्यतां सम्पादयति तदपि संस्कृतशब्दानामानन्त्यं व्याकरणाध्ययनेनैव ज्ञातुं शक्यते। व्याकरणे लुप्ते तु शब्दानन्त्यमपि लुप्येत। यावन्तो ग्रन्था इदानीं संस्कृतस्योपलभ्यन्ते तावतां पारायणन्तु इदानीन्तनोपि दीर्घजीवी कर्तुं प्रभवति किमुत वृहस्पतिः? अधुनापि व्याकरणस्य शब्दानुगमकत्वं परीक्षितुं शक्यते। एको व्याकरणानभिज्ञः, द्वितीयश्च लघुकौमुद्यां सम्यग् व्युत्पन्नः सहैव द्वौ अपि दशश्लोकान् काव्यस्याध्याप्येताम्। प्रथमो यावतः शब्दान् ग्रहीष्यति ततश्चतुर्गुणन्तु व्याकरणज्ञोऽवश्यं ग्रहीष्यति। कोषे तु यस्य शब्दस्य दशपर्यायाः परिगणितास्तांश्च सहस्रपर्यायतां कर्तुं प्रभवतीति नार्थवादः। तथा च व्याकरणम् अनन्तस्य शब्दसागरस्यान्तस्तले प्रवेशाय विस्मयकारि यन्त्रमिति नेह वितन्यते।

## अथ षष्ठाक्षेपविचारः

इदमपिविचाररमणीयम्। अद्यापि भारतीयानां वालकानां कृते आंग्लभाषाऽध्ययनेऽक्षरानुपूर्वीसहितानि पदानि यावतामक्षराणां भवन्ति कण्ठस्थीकरणीयानि ततो नाधिकानि अक्षराणि व्याकरणाध्यायिनां कृते घोषणीयायां व्याकरणाष्टाध्याय्याम्। अष्टाध्याय्यामपि अर्धाधिकानि प्रायः सामन्यशास्त्राणि शतकृत्वः प्रयोगसाधनेऽनुसन्धेयानि। अनुसन्धानेनापि घोषणं विनैव भवन्ति अभ्यस्तानि।

एवं साधारणैर्जनैः सरलतयाऽपोहिते साहित्येऽपि विचार्यताम्। आरम्भत आचार्यपरीक्षां यावद् यावन्ति गद्यानि पद्यानि चाध्याप्यन्ते। तेषां

चतुर्थांशस्याऽप्यनभ्यासे किं भवति तच्छास्त्रपाण्डित्यम्? नो चेत् न ततोऽधिकानि अक्षराणि घोषणीये व्याकरणांशे। समेषां व्याकरणग्रन्थानां घोषणमन्यशास्त्रसदृशमवोधविजृम्भितम्। अपि च धारणाऽभिधा मस्तिष्कस्य शक्तिविशेषः। यया च विषया धार्यन्ते। सा च केषाञ्चित् तीव्राऽन्येषाञ्च मन्दा। अत एव केचन त्वरितम् अन्ये च विलम्बेन विषयान् गृह्णन्ति। परं सा तीव्रा मन्दा वा समेषां विषयाणां कृते समाना नतु व्याकरणधारणसमये समेषामलसैव जायते।

किञ्च घोषणं नाम विषयधारणायैकस्य विषयस्यासकृदनुसन्धानम्। तदेव चाभ्यासः। तदपि मस्तिष्कशक्तेः स्फोरणायैव। ननु नानुसन्धानं घोषणमपि तु मुखैरुच्चैरुच्चारणम् तत्र च श्रमोऽनुभूयत एवेति चेत् सम्यगालोच्यताम्। उच्चैरुच्चारयन्नपि समक्षं कौतुकानि विलोकयन् प्रसीदति कदाचन विपरीतानि विचिन्तयन् विषीदति च इति मुखाकृत्याऽनुमीयते। तेन च तस्य मनोयोगोऽन्यत्र विषये नतु समुच्चार्यमाणायामानुपूर्व्यामिति अध्यवसीयते। मनोयोगमन्तरा च मस्तिष्कस्य श्रम इति व्याहतमेव।

## अथ सप्तमाक्षेपविचारः

अत्रापि विषये संस्कृतभाषाया व्यवहार उपयोगाभावात् न प्रवृत्तिर्लेखभाषणादिषु अत एव तत्र शैथिल्यमन्यशास्त्राध्येतृणामिव व्याकरणाध्येतृणामपि। व्याकरणं विना संस्कृतभाषायां पाटवन्तु व्याहतम्, परमल्पं व्याकरणं विदुषामपि काव्यनाटकाद्यध्ययनद्वारा साभिनिवेशाभ्यासेन लेखभाषणादिषु अपेक्षाकृतं पाटवं प्रतीयते। तादृशाभ्यासेन च वैयाकरणानामपि भवत्येव। व्याकरणसहायमन्तरा न केनापि प्रकारेण संस्कृतभाषायां प्रावीण्यम् इत्याद्युक्तप्रायमेव। तथैव किञ्चिद् विचार्यते। तथाहि—व्याकरणं शब्दज्ञानार्थं लेखभाषणादिषु कोऽस्योपयोगः तादृशोपयोगं विना परिज्ञानमेव कथं प्रमाणितमिति चेत् लेखो भाषणञ्च तत्तद्विषयभेदेन विभिन्नम्, तत्र सर्वस्मिन् विषये तदप्यपेक्ष्यते परिशीलित एव वा विषये? नाद्यः, अन्यत्राप्यदर्शनात्। न द्वितीयो व्याकरणविषये दर्शनात्। ननु शाब्दिकैर्न सूत्राण्येवाधीतानि अपितु लौकिका अपि साधुशब्दाः तेषाञ्च लेखनं भाषणञ्चापततीति वाच्यम्, तदापि नाक्षिप्तं भवति व्याकरणं तत्रापि समेषां विषयाणाम् स्वस्य विषयस्य वेति पूर्वोक्तविकल्पप्रसरात्। ननु यान् व्यवहाराननुतिष्ठति तान् मातृभाषया प्रकाशयन्नपि संस्कृतभाषया कर्तुं न क्षमत इति चेद् यौगिकान् नूतनशब्दान् सहसैव निर्माय व्यव-

हरतीति दृश्यते एव। तादृशैः शब्दैर्व्याकरणविद एवावबुध्यन्त इति चेत् तेन व्याकरणस्य किमागतम्? अनवबोद्घृणामेव व्याकरणानभिज्ञतादोष आपतति। चिररूढाः शब्दास्तैरादेया इत्यपि न विचारसहम्। तादृशेषु शब्देषु व्याकरणस्यासम्बन्धात्। अपिच प्राचीनैः शब्दैः संस्कृते साधारणव्यवहारनिर्वाहे कथमभिनिवेशस्तैः कार्यः? न वैयाकरणा मूढा येन निष्फलमप्यनुतिष्ठेयुः। प्रतिष्ठार्थमिति ततोऽप्यधिका प्रतिष्ठा स्वार्थं परित्यज्य लोकसेवायाम् किं सर्वैरनुष्ठीयते! जीविकार्थमिति चेन्नाद्यावधि जीविकाक्षेत्राणि तादृशानि निर्मितानि। निर्मास्यन्ते चेन्न चिरादेव गुरुं बिनैव संस्कृतवचो व्यवहारे क्षमतामाधास्यन्ति वैयाकरणाः। अधुना च यादृशमधीतं तत्र च न त्रुटिः।

अपरञ्च। तत्तच्छास्त्राध्ययनेन यादृशी व्युत्पत्तिः समोहिता तदुपयोगिनो ग्रन्थान् पाठ्यत्वेन निर्धार्यं अध्ययनस्यापि परीक्षा क्रियते महाविद्वद्भिः। तत्र चान्येषां विश्वासाय राजकीयं प्रमाणपत्रं दीयते। गृहीते च प्रमाणपत्रे तादृशी व्युत्पत्तिर्नानेन संपादितेत्यत्र किं प्रमाणम्? लेखभाषणादिनं दृश्यते इति चेत् तदैव फलं शास्त्राध्ययनस्येत्यत्रैव किं प्रमाणम्? अत एव तदभावेऽपि परीक्षायामुत्तारिताः। न मन्यते सा परीक्षेति चेन्न मन्यताम् परमनुचितं यतो राजाज्ञा। न रोचते चेद् भिन्नाभिरुचिर्हि लोकः केभ्यश्चित्तु रोचते। अत एव राजमान्यैर्महाविद्वद्भिः सा शैली प्रचाल्यते।

## अथाष्टमाक्षेपविचारः

गहनत्वं हि व्याख्यानविस्तारेण सूत्राणां बहुलतया संक्षेपतो वा? नाद्यः प्रथमाक्षेपेण गतार्थत्वात् तस्योद्घृतत्वाच्च। प्रक्रियार्थंव्याकरणशिक्षया सूत्राणां बहुलता तदपेक्षयाऽधिकफलदा चेन्नाक्षेपार्हा नाधिकफलता चोदाहरणान्यपेक्ष्य विचारणीया। सा च स्वतन्त्रे प्रबन्धे सम्भवति इति नात्र विविच्यते। सूत्रसूचितानि परिभाषारूपाणि प्रयोगोपपादकानि वचनानि वाक्यार्थविचारपद्धतिः, धर्मशास्त्रमीमांसयोः प्राधान्येनापेक्षितस्य तयोरपेक्षया वैशिष्ट्येन वर्णितस्य नियमपरिसंख्यादिविधया अपवादोत्सर्गशास्त्रार्थस्य वर्णनम्, मोक्षफलकस्य स्फोटपरिज्ञानस्योपायः स्वरवैदिकप्रक्रियया वैदिकवाङ्मयव्याकृतिश्चैवमाद्या विषया नान्येन व्याकरणेन संगृहीता।

शास्त्रार्थभाषया क्वापि शास्त्रस्यार्थं न्यरूपयम्।
अन्वयं विषमं केचित् पश्यन्ति चेद् रुचिस्तथा॥

पटनास्थ संस्कृतसञ्जीवनपत्रे २४ वर्षीयनवमाङ्के दिसम्बर १९६३ ईशाब्दे प्रकाशितम्

# व्याकरणम्

'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणि' इति ६। ३। २ छान्दोग्यश्रुत्या शब्दार्थयोरादिमाकृतिर्व्याकरणम्। सृष्टेरनादि प्रवाहे व्याकरणस्यापि अनादिः प्रवाहः, अस्य पाणिनीयानुशासनस्य पाणिन्युपज्ञत्वेऽपि वेदप्रवाहस्य अनादित्वे वेदव्याकृतेरनादित्वमायात्येव, एवं वेदव्युत्पादिकायाः श्रुतिसमाया लौकिकभाषायास्तद्व्याकरणस्य च अनादित्वं सिद्धम्, कथमन्यथा वेदार्थेव्युपद्येरन् लौकिकाः ? शक्तिग्राहकशिरोमणे र्व्यवहारस्य भाषामन्तरासंभवात्, भाषाव्याकरणयोर्नियतत्वात्। यद्यपि प्रथमं भाषा ततो व्याकरणमिति सत्यं तथापि तद्रूढव्याकरणपरम्, अवापोद्वापस्यापि व्याकरणत्वात्, एवं क्रियाकारकयोजनाया अपि, जनास्तु लघुनो महतो वा ग्रन्थस्य लेखने व्याकरणं निर्मितमिति वदन्ति न तु मुखादेव भाषायास्तन्नियमस्य च शिक्षणे व्याकरणशिक्षां व्यवहरन्ति, किन्तु सम्यग्विवेचने भाषाशिक्षणेन सह व्याकरणशिक्षणमपि जायत एव, किमुत अकारान्तपुंल्लिङ्गदेवशब्दरूपेषु अभ्यस्तेषु 'एवमेव गजशब्दः' इत्युपदेशोऽपि व्याकरणशिक्षा।

शब्दार्थव्याकरणञ्च शब्दस्य अर्थस्य च विश्लेषणं कल्पनाविशेषो वा, परमधुना अर्थविश्लेषणे केचनैव व्याकृतिपदं प्रयुञ्जते, विशेषतः प्रकृतिप्रत्ययविश्लेषणे एव व्याकरणपदमुपयोजयन्ति बहवः।

इदञ्च त्रिमुनिव्याकरणं दिव्यशक्त्या ऋषिदृष्टं प्राचीनानि व्याकरणानि उपजीव्य संगृहीतं वस्तुतो व्याकरणपदं बिभर्ति, पूर्वोक्तश्रुत्यनुसारं शब्दम् अर्थञ्च व्याकुरुते, व्याडिकृते लक्षश्लोकपरिमितसंग्रहे संग्रहे च अर्थव्याकृतिः स्फुटेति संभावना, पाणिनिसूत्राणि च बहूनि अर्थ निर्देश पराणि, यदुपजीव्य-भर्तृहरिनिर्मितवाक्यपदीये लघुमञ्जूषायाञ्च अर्थव्याकृतिः प्रदर्शिता, यद्यपि न सर्वाङ्गपूर्णा तथापि तस्या बहवोऽवयवा वर्णिताः सन्ति, सैव पाणिनीयदर्शनं स्फोटवादः स्फोटायनमतम् उपवर्षमुनिमतमिति नामभिर्व्यवह्रियते, दर्शनान्तरग्रन्थेषु उत्थाप्यते प्रक्षिप्यते च, अर्थमात्रं व्याकुर्वतां शास्त्राणान्तु दर्शनेति नाम्ना प्रसिद्धया अवशिष्टायां शब्दव्याकृतावेव व्याकरणपदं चिरादरूढम्,

शब्दव्याकरणञ्च नाक्षिपन्ति शास्त्रान्तराणि अपितु समादरदृष्ट्या पश्यन्ति, अत-एव व्याकरणप्रामाण्याय पूर्वमीमांसाया १। ३। ९। अधिकरणम्। सर्वशास्त्रो-पजीव्यत्वेनैव 'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्' इतिवस्तुतो वचनम्' शब्दवदर्थस्यापि व्याकरणात् पदार्थस्य वाक्यार्थस्य च वर्णनमस्य शास्त्रस्य मुख्यमेवाङ्गम्। वाक्यार्थं विचाराय च महतां वादानामत्र सन्निवेशः। न्याय-शास्त्रं शब्दखण्डद्वारा प्राधान्येन लौकिकौ पदार्थवाक्यार्थौ विशदयति, पूर्व मीमांसाशास्त्रञ्च प्राधान्येन वैदिकवाक्यार्थं निश्चिनोति आनुषङ्गिकं तस्यान्यत्, लौकिकानां वैदिकानाञ्च अनुगतप्रक्रियया स्वरूपं सम्यग् व्याकुर्वत् परिपूर्णं व्याकरणमद्यावधि पाणिनीयमेव। महताऽन्वेषणेनापि इतः प्राचीनानि कानि-चिदांशिकानि व्याकरणानि सिद्धयन्तु नाम परं न सर्वाङ्गानीति निरुक्तालोचन मेव आलोचयते तत्र नास्ति वक्तव्यम्, अत्र लेखे विवेचनास्थानाभावेऽपि संक्षेपतः सूचयामि यत्-समेषां यौगिकानां योगरूढानां कतिपयरूढानामपि कोष-वच्छक्तिग्राहकं, वाक्यार्थनिरूपकम्, सामान्यतो विशेषतश्च प्रातिशाख्यवत् स्वरसंस्कारयो निर्वाहकं लौकिकानामिव वैदिकानामपि शब्दानां निरुक्तोपमं निर्वाचकञ्च भवतु इदमिति उद्दिश्य प्रादुर्भूय च तथैव दीर्घकालमवतस्थे, नव्ये न्याये शब्दखण्डस्य स्फुटतया निर्देश एतदुपज्ञएव, उत्तरेव पूर्वाऽपि मीमांसा वैदिकवाक्यानाम् अनुकूलतर्काद्युपस्थापनद्वारा अधिकरणै र्वाक्यार्थनिर्णय हेतोस्तात्पर्यस्य निर्णायिकैव न तु पदार्थानां परस्परं सम्बन्धरूपवाक्यार्थप्रति-पादिका, अग्रे च तत्र वाक्यार्थप्रतिपादकत्वस्यापि एतत्सहायेन जात एवास्ति सन्निवेश, मतभेदस्तु व्याख्यान्तरम्, न्यायादिग्रन्थेषु स्वमतेन सूत्रार्थयोजनं विदितचरमेव, स्वरसंस्कारसम्पादकानि प्रातिशाख्यानि पाणिनेः प्राक् न प्रचा-रमुपेतानीति निरुक्तालोचनं साधयति।

॥ प्रातिशाख्यकार्यम् ॥

तादृशनिरुक्तालोचनरीत्या समग्रे प्रतिशाख्यकार्यं निर्वाहयदिदमेव पाणिनीयं शास्त्रं प्रबभूव। अतएव केचन प्रतिशाख्यविषया अष्टाध्यायामपि उपलभ्यन्ते; प्रातिशाख्यस्य व्याकरणान्तरत्वे तस्य प्रसिद्धौ च तद्विषयाणां सूत्रे सन्निवेषः पाणिनेर्व्यर्थं एव स्यात्। पश्चाच्च सूत्रप्रणवनाच्चिरेण प्रादुर्भूता बहवः प्रातिशाख्यविषयाः सूत्रव्याख्यानेनापि अगतार्थाः शास्त्रान्तरतां ग्रन्था-न्तरताञ्च प्रयोजयामासुः

किञ्च लक्षश्लोकात्मकस्य संग्रहस्य कर्त्ता व्याडिः पाणिनीय इति विदितचरम्, निरुक्तालोचनञ्च विकृतिबल्लया विधातारं शौनकीये प्रतिशाख्ये

स्मृतञ्च मनुते, एवञ्चेद्नूनमसौ महान्वैदिकः, संग्रहे च महाग्रन्थे वैदिकविषयान् सम्यक् पर्यालुलोचे, व्याख्याकौशलेन च बहवोविषयाः सूत्रेभ्य एव प्रसारयामास, इत्यादि संभावयामश्चेत् पाणिनेरनन्तरमपि पञ्चषताब्दीं यावद्वश्यं पाणिनीयं प्रातिशाख्यकार्यं निर्वाहयाञ्चकार, पतञ्जलिसमये तु प्रातिशाख्यानां स्वतन्त्रतया प्रसिद्धौ सत्यां पतञ्जलिप्रभृतीनां वैयाकरणानामुपेक्षेवेतित्वन्यत् ।

कतिपयैतिहासिकाः पाणिनेः प्रागपि प्रातिशाख्यनाम्नाऽन्यनाम्ना वा प्रातिशाख्यविषयाः प्रचलिता आसन्, अतएवेदानीमुपलभ्यमानेषु प्रातिशाख्यसूत्रेषु तद्तदाचार्याणां नामानि अनुववृतिरे, कानिच्चिच्च प्रातिशाख्याचार्याणां नामानि पाणिन्यष्टकेऽपि अवलोक्यन्ते, इति वदन्ति, आस्तांतत्, तथापि तदानीन्तनास्ते विषयाः पाणिनिना समग्राहिपतेति कल्पनायां न बाधकम्, वेदविशेषशाखाविशेषोद्देश्यकानां पाणिनिसूत्राणामवैयर्थ्यंञ्च अनुकूलस्तर्कः ।

## निर्वचनकार्यम्

लौकिकानामिव वैदिकानामपि निर्वचनसाधकं पाणनीयं शास्त्रं न किञ्चिदवशिष्यते निरुक्तेन सम्पादनीयम् अतएव प्रसिद्धानां लोकवेदयोर्निष्णातानां प्राचामपि वैयाकरणानां निरुक्तशास्त्रे उपेक्षा संगच्छते ।

इत्थं हि तच्चिन्त्यताम् समेषामेव योगिकानां शब्दानां यदि व्याकरणं प्रकृति प्रत्ययौ तदर्थांश्च विवृणोति तर्हि किमवशिष्यते निर्वचनस्य ? विग्रहप्रदर्शनमवशिष्यते इति चेत् तत्प्रदर्शनमन्तराऽपि परिज्ञेयस्य अर्थस्य विज्ञानसिद्धौ विग्रहप्रदर्शनेन ग्रन्थवृद्धयापत्तिः, तथैव च पाणिनिर्यदि व्याकरिष्यद् अल्पा एवाध्येष्यन्त तद्ग्रन्थम्, रूढानान्तु अप्रसिद्धेः प्रकृतिप्रत्यये विविृत्याऽपि किं क्रियेत ? वाच्यार्थग्रहणमात्रमपेक्षितम्, अर्थनिर्णये निर्वचनं प्रमाणम् अन्यद्वाकिंचित् प्रथमे निर्वचनमनियन्त्रितं स्यात्, यथाकथमपि निर्वकारं को निरुन्ध्यात् ? द्वितीये प्रमाणान्तरतोऽर्थं विज्ञाय प्रकृतिप्रत्ययतदर्थविज्ञोवैयाकरणः स्वयमेव विग्रहीष्यति किमर्थं ग्रन्थवृद्धि सम्पादयेत् ? अस्य शब्दस्य अययर्थ इति प्रमाणान्तरतो निश्चय एव निर्वचनं क्रियते, तथैव च निरुक्तस्य समयः, तथा च अर्थनिर्णयस्य निर्वचनात् प्राक् सिद्धतया न निर्वचनमर्थनिश्चयार्थमिति सिद्धम्, येन प्रमाणेन निर्वचनमूलमर्थो विज्ञायते तदेव अर्थज्ञापकं न निर्वचनमिति भावः ।

अपेक्षितमपि निर्वचनं व्याकरणस्य उणादिप्रकरणेन गतार्थम् यथा शब्देषु आवश्यकतावशान्नूतना धातवः प्रत्यया अनुबन्धाश्च कल्पनोया इति निरुक्तस्य समयस्तथोणादिप्रकरणस्यापि संज्ञासु धातुरूपाणि प्रत्ययाश्च तथा परे।

कार्याद् विद्यादनुबन्धानेतच्छास्त्रमुणादिषु "इति कारिका तद्विषयिणी नाद्यैव प्रचारमुपगता, उणादयो बहुलमित्यत्र बहुलग्रहणस्य प्रयोजनभाष्यमपि तथैव दृश्यते, तथा च पतञ्जलेः प्रागपि उणादेर्महत्वख्यापिका समेषां शब्दानां निर्वचनसाधिका च इयं कारिका प्रचलिता आसीत्, नाहमेव निर्वचनस्य व्याकरणेन गतार्थत्वं ब्रुवाणो दोषज्ञानां दूष्यः, पाणिनेः प्रागपि कानिचिदुणादिसूत्राणि निरुक्तशास्त्रञ्च विलोकितवतः पाणिनेः 'वैयाकरणानां कल्पना क्रीडनकम् इदं निर्वचन शास्त्रम्' इति धिया उपेक्षैव पर्यवस्यति।

यद्यपि आलोचकमूर्धन्यः श्रीसत्यव्रतसामश्रमिमहोदयः 'पाणिनियस्ककृतं निरुक्तं न पर्यालोचयद्' इति लिखति तथापि अन्येषां निरुक्तशास्त्रं न पर्यालोचयदित्यत्र नास्ति प्रमाणम् निरुक्तशास्त्रस्य प्राचीनत्वात्, अतएव यास्कनिरुक्ते प्राचां निरुक्ताचार्याणामुल्लेखः संगच्छते, अन्ये चैतिहासिकाः यास्कात्परः पाणिनिरिति मन्वतेऽपि,

प्राचीनेतिह्यनिशीथभाषाविकासक्रमेणापि द्रष्टुं प्रयतन्ते इतिहासविचारचणाः। मम विचारे तु व्यभिचारवातग्रस्तः स क्रम इति त्वन्यत्, परं तदरीत्या विचारे तु प्रागेव पाणिनेर्यास्कः, यतः पारिभाषिकशब्दसंकुला सूत्रभय्यपि अष्टाध्यायो प्राथमिकान् पारिभाषिकशब्दान् परिशील्य अध्ययने यथा स्फुटार्था न तथा भाष्यमपि निरूक्तम्।

व्याकरणस्य कात्स्र्न्यमिति निरूक्तस्य व्याकरणपदेन बहवः पाणिनीयं व्याकरणं परामृशन्ति, परं न तत्सम्यक् परिशीलनं विभाति। यतः स्वरसंस्कारयोगं व्याकरणप्रयोजनमाख्याति निरुक्तम् अर्थतः संग्रहेऽपि न तादृशं प्रयोजनवाक्यमुपलभ्यते पाणिनीये तन्त्रे, तादृशानुपूर्वी चाधुना प्रयोजनपरा प्रातिशाख्यसूत्रे दृश्यते, तथा सम्भवति च प्राचीने प्रातिशाख्ये। एवञ्च प्रातिशाख्यव्याकरणस्यैव परिपूरकं निरुक्तम् न तु पाणिनीयव्याकरणस्य, निरुक्तनिर्वचनम् गतार्थयतो विपुलावयवस्य व्याकरणस्य न निरुक्तेन कृत्स्नता।

अथवा व्याकरणं कृत्स्नम् परिपूर्णं शास्त्रं निरुक्तन्तु न स्वतन्त्रं शास्त्रम् अपितु विग्रहमात्रप्रदर्शनपरं शास्त्रैकदेश इति नूतनमपि व्याख्यानं कथं न शोभेत ?

कहा गया है। संभव भी है कि निर्वचन के अनुसार स्वरसंस्कार योग हो, और निर्वचन का साधन प्रातिशाख्य में नहीं है।

( २ ) प्रातिशाख्य का कार्य इसी व्याकरण से चलाना पाणिनि को अभिप्रेत है। शाखाविशेष को उद्देश्य बना कर विहित व्याकरण कार्य प्रातिशाख्य कहा जाता है, अष्टाध्यायी में भी शाखाविशेष के लिये सूत्र हैं। यदि पाणिनि का वैसा अभिप्राय न हो तो वैसे सूत्र व्यर्थ हो जायेंगे।

प्रातिशाख्य में विहित कार्य अधिकतर पाणिनि के लौकिक वैदिक प्रक्रिया से संपन्न हो जाते हैं। किसी ने अन्वेषण भी किया, पाणिनीय प्रक्रिया से गतार्थता ही परिणाम निकला।

और भी देखें कि पाणिनि के सूत्र संक्षेप के प्रतीक हैं, इनके व्याख्यान में बुद्धिबल की अपेक्षा है, श्रम के अनुसार व्याख्यान बढ़ता है और उनके नये कार्य दीख पड़ते हैं। जिनमें च-तु आदि निपात भी अनेक अर्थों के द्योतक होते हैं, कुछ प्रयोग सूत्र प्रयोगों के निर्देश से भी सिद्ध हो जाते हैं। ज्ञापन-नियम-उत्सर्गापवाद रीति संकोच, उस विषय की परिभाषाओं द्वारा कुछ अर्थविशेष प्रकट हो जाता है, अभी कोई प्रातिशाख्य का विषय न भी सिद्ध होता हो तो पीछे व्याख्यानों द्वारा सिद्ध हो जायेगा, अथवा पाणिनि के समय वह प्रातिशाख्य विषय नहीं प्रचलित हो पाया था, बहुत थोड़े विषयों के लिये अनेक समाधान संभव हैं।

पाणिनीय व्याकरण का महान् ग्रन्थ संग्रह नाम का महाभाष्य से सूचित होता है, एक लाख श्लोक उसका परिमाण सुना जाता है, व्याडि आचार्य उसके रचयिता थे यह भी परम्परा है। निरुक्त सामश्रमी व्याडि को विकृतिवल्ली विधाता बताता है। पद-क्रम-धन-जटा आदि पाठ पद्धतिआं विकृति कही जाती हैं। इससे विश्वास किया जा सकता है कि व्याडि वैदिक साहित्य के बड़े विद्वान् थे तथा संग्रह ग्रन्थ में वैदिक विषयों का विशेष विश्लेषण होगा। प्रातिशाख्य विषय भी पाणिनि सूत्रों के अनुसार व्यवस्थित सम्भव है।

( ३ ) स्वर सञ्चार। व्याकरण अपौरुषेय वैदिक पद वाक्यों के स्वरसञ्चार की शिक्षा देता है। यथा इन्द्रशत्रुःस्वरतोऽपराधात्, इत्यादि के परिशीलन के निपुणों को

मालूम है कि स्वरविशेष अर्थ निर्णायक होता है। अपौरुषेय वेद वाक्यों का स्वर-सञ्चार मन्त्रद्रष्टा ऋषिओं द्वारा ही निहित हुआ, उसका अध्यापक परम्परा से प्रचार हुआ, भाषा शास्त्री लोग उसका अनुगम किये उसके अनुसार नियम बने, उसीका व्याकरण रूप बन गया। प्रातिशाख्य आदि स्वतन्त्र रूप से इनका व्याख्यान किये। पाणिनि लौकिक वैदिक का एक व्याकरण बनाये। छोटे-२ परिमित सूत्रों में सभी का संग्रह किये, लोक-वेद-स्वर आदि प्रकरण के अनुसार सूत्र रचना में सूत्रों की संख्या बहुत बढ़ी हो जायेगी, मात्रा-वर्ण-पद-वाक्य सभी प्रकार के लाघवों को अपनाना पड़ा, अधिकार-अनुवृत्ति-विधेय कार्यों के अनुसार सूत्रों को सजाना पड़ा, अभ्यास में लाघव हुआ, अष्टाध्यायी के अनुसार व्याख्यान भी सरल ही हुआ। लौकिक भाषा के साथ ही वैदिक भाषा ज्ञान तथा स्वर ज्ञान हो गया यह भी एक विशेष गुण रहा। किन्तु समय बदला, द्विजों का वेदाध्ययन आवश्यक नहीं रहा, वेद विद्या आवश्यक नहीं रही, संस्कृत भाषा का व्यापक प्रचार भारत में विशेषकर कुछ अन्य देशों में भी सुदूर व्यवहार के लिये संस्कृत भाषा मात्र साधन था। लौकिक भाषा की आवश्यकता तथा वैदिक भाषा की अनपेक्षा और सभी का मिला जुला एक व्याकरण कष्ट देने लगे, वैदिक और स्वर प्रक्रिया को छोड़कर सरलता की दृष्टि से लौकिक भाषा के व्याकरण दूसरे जन्म पाने लगे। गवेषकों तथा विशेष जिज्ञासुओं को उनमें त्रुटि मालूम होने लगी, पाणिनीय व्याकरण में ही पूर्णता दीखने लगी, प्रकरणों के अनुसार ही पाणिनीय सूत्रों को छाट कर, सजाकर अध्ययनाध्यापन का प्रयास चलने लगा। तेरहवीं चौदहवीं शताब्दी में वह प्रयास ग्रन्थ रूपधारण कर रूढ हो गया, तभी से स्वर वैदिकी प्रक्रिया अलग हो गई।

इस प्रकार वेद के ऐसा अर्थानुसार स्वर-सञ्चार प्रक्रिया अनादि, तब वेदार्थ भी अनादि हुआ ही। उसकी भी अध्यापक परम्परा से सुरक्षा हुई। जो लोग लौकिक वाक्यों के ऐसा अपनी शब्दार्थ व्युत्पत्ति के अनुसार जो अर्थ करते हैं वह वेदार्थ नहीं है। किन्तु अध्यापक परम्परा से सुरक्षित ही वेद और वेदार्थ है। इन अध्यापक परम्परा की व्युत्पत्ति के लिये पूर्व मीमांसा के सूत्र और अधिकरण, निघण्टु-निरुक्त-स्वर-वैदिकी प्रक्रिया आदि हैं। इनके अनुसरण के बिना किया गया वेदार्थ वेदार्थ

नहीं है किन्तु वैदिक पद-वाक्यों द्वारा उनके वासना का उद्गार मात्र है। स्वर-समन्वय के बिना वेद का अर्थ अनर्थ हैं। ऐसे अनेक लोग वेद से हिन्दू जाति का इतिहास निकालते हैं और वेदार्थ ज्ञान का अभिमान करते हैं, ऐसे शास्त्रीय रहस्य के अनभिज्ञों को क्या किया जाय? जो दूसरे प्रमाणों से अज्ञात अर्थ का ज्ञापन करता है वही प्रमाण माना जाता है। यदि वेद दूसरे प्रमाणों से प्राप्त अर्थ का प्रतिपादन करेगा तो प्रमाण न होकर अनुवादक हो जायेगा। इन शास्त्र रहस्यों को वे नहीं जानते। करीब साठ वर्ष पहले इंग्लिश में एक लेख परम्परा ऐसे विषय को लेकर चली थी।

निरूक्त में 'अनर्थका मन्त्राः' पूर्वमीमांसा का एक पूर्व पक्ष का सूत्र है, ब्राह्मण वाक्यों से ही याग में आने वाले अर्थो का स्मरण हो जायेगा मन्त्रों से स्मरण की क्या आवश्यकता? इसलिये मन्त्र अनर्थक हैं, ऐसा उसका अर्थ है। किन्तु इस को देखकर विदेशीय विद्वानों ने लिख डाला कि इस निरुक्त वचन से मन्त्रों के अर्थ की परम्परा भारत में नहीं रहीं, पहले कभी हो भी किन्तु अब नहीं हैं, अभी जो मन्त्रों का व्याख्यान है वह आधुनिकों की बुद्धि और व्युत्पत्ति का परिणाम है वेदों के ऐसा वेदार्थ परम्परा प्राप्त नहीं है। इस स्थिति में वेदव्याख्यान में जैसा भारतीयों का अधिकार है वैसा विदेशीयों का भी, प्रामाणिकता में भी दोनों का समान दावा हैं। उनके लेखों के प्रचार के बाद किसी किसी अङ्ग्रेजी भाषा प्रवीण भारतीय विद्वानों को यह अच्छा नहीं लगा, और अन्वेषण करके ऊपर सूचित रीति से भारतीय सिद्धान्त को लिखा कि जैसा वेद का स्वरूप अध्यापक परम्परा प्राप्त है वैसे ही वेदार्थ भी अध्यापक परम्परा प्राप्त नियत है जो कोई अर्थ वेदार्थ नहीं है।

इसी प्रकार ऋग्वेद के अनुसार अंग्रेजों से लिखित हिन्दू जाति का इतिहास चिरकाल तक भारतीयों से समादृत था, मेरे अध्ययन काल तक था, मुझे भी वैसा ही पढ़ाया गया, कि आर्य लोग भी उत्तरी ध्रुव के पास रहने वाले थे, धीरे-धीरे अमुक मार्ग से भारत में आये, यहाँ के मूलवासी दस्यु लोगों को भगाकर रहने लगे इत्यादि। जब भारतीय कांग्रेस से अङ्ग्रेजों भारत छोड़ो की गूंज उठी तो १९३० ई० के बाद किसी अङ्ग्रेज ने लिखा कि आर्य लोग भी भारत के मूलवासी नहीं हैं

अङ्ग्रेजों के ऐसे वे भी विदेशी हैं, तब भारतीय विद्वानों को खटका, ऋग्वेद के उन अंशों का पुराना व्याख्यान खोजा गया, उस इतिहास का खण्डन हुआ। करीब १९४० ई० में उसका उत्तर अङ्ग्रेजी में छपा। इन मूलभूत स्वर प्रक्रिया के अनुसरण के बिना वेदों का अध्ययन वेदाध्ययन नहीं है बल्कि वेद के साथ खेल या मजाक है। नया नया प्रकट होना और जल्दी बदल जाना अनादि अपौरुषेय अप्रवर्तनीय वेद वाक्यों के अर्थ का नहीं हो सकता। यह इस प्रकार का संरक्षण स्वर सञ्चार प्रक्रिया के अधीन है उस स्वर सञ्चार प्रक्रिया का संरक्षण पाणिनीय व्याकरण का असाधारण कार्य है, दूसरे व्याकरण इसको नहीं अपनाते। किसी में कुछ मिलता भी है तो भी पीछे के व्याख्यानों से उसको विकसित नहीं किया गया है।

(४) वैदिक प्रक्रिया। वैदिक साहित्य के परिज्ञान के लिये पाणिनीय व्याकरण में इसका सन्निवेश उपकारी तथा प्रभावकारी हुआ है। इनको छोड़कर और व्याकरण आशा रखते थे कि मेरे व्याकरण से कृत-कृत्य सफल अधिकारी कठिन पाणिनीय व्याकरण को टटोलने का श्रम नहीं करेगा, किन्तु हुआ विपरीत, लौकिक संस्कृत भाषा भूषित भूसुरों को वैदिक साहित्य से दूर रहना पसन्द नहीं आया, पाणिनीय व्याकरण में उनकी श्रद्धा जागृत हुई, कठिन विस्तृत इस व्याकरण में अच्छे गुणों का विस्तार दीखने लगा, पूर्णता मालूम पड़ी, अतः दूसरे व्याकरण इतिहास के विभूषण ही रहे। छोटा २ भी पाणिनीय व्याकरण का ही अंश लेकर छोटे अधिकारीओं की जिज्ञासाओं को शान्त करने का प्रयास चला, और चलता है, अभी भी चलने की आशा है।

इस लौकिक वैदिक यमुना गङ्गा संगम पाणिनीय तीर्थ का अवगाहन करने वाले प्राचीन कवि अपने काव्यकुञ्जों में वैदिक प्रयोगरूप पुष्पों को भी खिलाये, जिसको पीछे के वैयाकरण कवि लोग निरङ्कुश हैं इत्यादि पदवीओं से सुरभित किया।

इसी व्याकरण शिखर पर समारूढ मेधावी कोई भी नहीं बदलने वाली वैदिक निश्चल भाषाशीला से कैसे २ नये रूप में सरवती हुई लौकिक संस्कृत भाषाधारा प्रगट हुई ? और कैसे कहा ? इसको समझने का साहस कर सकता है, तथा पूर्ण

काम भी हो सकता है। बहुत छोटे २ इतने सूत्रों के अधिकार-अनुवृत्ति-सञ्ज्ञा-परिभाषा आदि विन्यासों से इतनी बड़ीं दो भाषाओं का संगोपन इसको छोड़कर दूसरी जगह देखने को कहां मिलेगा ?

(५) उपनिषद् के अनुसार दर्शन स्वरूप के विवरण से शब्द-अर्थ दोनों रूप संसार का व्याख्यान करता है।

शब्दस्य परिणामोऽयमित्याम्नाय विदो विदुः।
छन्दोभ्य एव प्रथममिदं विश्वं व्यवर्तत ॥

यह संसार शब्द का परिणाम है ऐसा वेदों के जानकार जानते हैं, यह संसार पहले छन्दों से ही प्रगट हुआ, इस हरिकारिका से ही पाठक सन्तोष अपनावें, इस छोटे से निबन्ध में हम से छन्दों का उद्धरण न चाहें। इन हरिकारिकाओं में परिणाम-विवर्त दोनों शब्द मिलते हैं, दोनों का समान ही अर्थ ग्रन्थकार को अभिप्रेत मालूम पड़ता है। आधुनिक दर्शन वाटिकाओं में प्रतिद्वन्दी परिणाम-विवर्त दो ऋतु विचरते हैं। सांख्य का परिणामवाद विशेष प्रसिद्ध है, कार्य और कारणों का तादाम्य, उन दोनों की सत्यता है। जगत् को मिथ्या नहीं माना जाता। वेदान्त दर्शन के अनुसार संसार सांख्य हीं के ऐसा माया का परिणाम है, माया मिथ्या है अतः कारण के अनुसार जगत् मिथ्या है, माया जड़ होने से परिणाम भी जगत् जड़ होगा, चेतन का सम्बन्ध न होने से जगत् का प्रकाश नहीं होगा इसलिये चेतन ब्रह्म भी जगत् का उपादान है। एवं चेतन कारणतावाद उपनिषद् वर्णित है। वह चेतन ब्रह्म अपरिणामी अविकारी परिणामी कारण नहीं हो सकता इसलिये चेतन जगत् का विवर्त उपादान है। रस्सी में सर्प-जलधारा-माला आदि के ऐसा अनेक प्रकार का यह विचित्र जगत् चेतन ब्रह्म में अध्यस्त है, अध्यस्त होने से मिथ्या है।

यहां वैयाकरणों के यहाँ समस्या है। वेदान्त के ऐसा जगत् को मिथ्या मानना अथवा सांख्य की तरह विश्व को सत्य मानना। उस पर प्रायः कोई नहीं लिखता। व्याकरण दर्शन पर लेख बहुत हैं लेकिन इस मूल कारण समस्या को नहीं सुलझाते। कोई बोधक शब्द को स्फोट सिद्ध करता है। कोई नाद-विन्दु-परा-पश्यन्ती आदि का वर्णन करता है। मूल कारण का स्वरूप और उसके साथ जगत् का सम्बन्ध नहीं

दर्शाते। यहाँ इसके विश्लेषण में नहीं लगूंगा। किन्तु अविकृत परिणामवाद का स्वरूप ध्यान में रखकर इसके विवरण के लिये प्रार्थना करता हूं। शब्द और अर्थ का तादात्म्य, सभी जगह दोनों का साथ ज्ञान, व्यवहार के अनुसार विशेष्य विशेषण-भाव, यह विलक्षण तादात्म्य और विशेष्यविशेषण-भाव है; दूसरी जगह ऐसा नहीं मिलता। श्रोत्र के साथ सम्बन्ध करने पर शब्द ही विशेष्य होता है और अर्थविशेषण। घटस्पर्श में शब्द विशेषण और अर्थ विशेष्य होता है। विशेष्य का जहां अन्वय होता है वहां विशेष्य द्वारा विशेषण का भी अन्वय होता है यह नियम यहाँ आवश्यक नहीं होता। नैयायिक विना अर्थ या विषय का ज्ञान नहीं होता ऐसा मानते हैं। वैयाकरण शब्द के बिना कोई ज्ञान नहीं मानते। दोनों को मिला देने पर सभी ज्ञानों में शब्द और अर्थ का भान आ जाता है। पूर्णवस्तु स्वरूप में शब्द और अर्थ दोनों का सम्बन्ध है। दोनों के ज्ञान के विना वस्तु स्वरूप की जिज्ञासा शान्त नहीं होती है, सुनता हूँ किन्तु देखा नहीं हूं यह अर्थ की जिज्ञासा हैं, देखता हूं, किन्तु मालूम नहीं क्या हैं ? यह नाम-शब्द की जिज्ञासा हैं। इसी कठिनाई के कारण श्री नागोजी भट्ट आध्यासिक तादात्म्य कहते हैं। उसमें भी फरक है, अधिष्ठान और अध्यस्त का आध्यासिक सम्बन्ध होता है, अध्यस्त की अपेक्षा अधिष्ठान की अधिक सत्ता मानी जाती है, यहाँ दोनों की सत्ता बराबर है, विशेष विनिगमक न होने से अधिष्ठानाध्यस्त-भाव भी नियत नहीं है। परस्पर अध्यास है। जगत् में जितने प्रचलित सम्बन्ध हैं उनसे विलक्षण शब्द और अर्थ का सम्बन्ध है, उसका नाम जो हो।

इस शब्द-अर्थ के सहभान का दूसरे शास्त्रों में भी उपयोग आता है। रस-गङ्गाधर कारण माला प्रकरण में न्यायभाषा द्वारा कार्यकारणभाव प्रदर्शन के साथ इसका निरूपण आता है।' एक ही अर्थ का दूसरे पर्याय से भान करने पर भिन्न-भिन्न शब्द विशेषण होने से अर्थों की प्रत्यभिज्ञा दृढ़ नहीं होती शिथिल हो जाती है। वस्तु की एकता हट जाती है, वस्तु की एकता न हटे अर्थ का अभिन्न होना दृढ तादात्म्य के बिना नहीं होता। वहाँ कथितपदत्व गुण हो जाता है। दूसरे प्रकार से भी इसका वहां उपयोग होता है। कपाली और परमेश्वर शिवजी का नाम है। चन्द्रमा का सुधाकर-दोषाकर नाम है। किन्तु अलग-अलग उन शब्दों के काव्य में सन्निवेश से सहृदय हृदयों में जबरदस्ती एक चमत्कारी भाव भरता है।

आलङ्कारिक ग्रन्थों के समन्वय में भी यह सिद्धान्त महास्त्र बनता है। साहित्य-दर्पण और रसगङ्गाधर में शब्द काव्य कहा गया। काव्यप्रकाश में शब्दार्थ युगल को काव्य कहा गया, विरोध मालूम पड़ता है। इस सिद्धान्त के अनुसार सभी स्थल पर शब्दार्थ युगल का भान मानने पर कहाँ विरोध है? काव्यप्रकाश विशेष्य विशेषण का विवरण नहीं करता। काव्य सुनता है, यहाँ अर्थ विशेषण और शब्द विशेष्य हो गया। कहीं शब्द विशेषण अर्थ विशेष्य हो जाता है। अग्नेर्टक् इस पाणिनि सूत्र से निरर्थक अग्नि शब्द से ढक् नहीं होता, तथा अग्नि शब्द रहित अग्नि से दाह नहीं होता।

( ६ ) इस पाणिनीय व्याकरण के परिशीलन से व्याकरण निर्माण की प्रक्रिया सूझने लगती है। लौकिक और वैदिक दोनों भाषाओं का एक ही व्याकरण बनाना पाणिनि के गले पड़ा था। कदाचिद् बहुत पहले एक ही भाषा थी। किन्तु पाणिनि के बहुत पहले लौकिक भाषा अलग हो चुकी थी। लौकिक भाषा जनसाधारण की भाषा होने से उसका नित्य नया रूपधारण करना स्वाभाविक ही है। लौकिक भाषा के धाराओं का अनुगम करने के लिये समय-समय पर अनेक व्याकरण पैदा होकर चल पड़े थे। भाषा तीव्र गति से धारा बदलती थी। व्याकरण पीछे रह जाते थे। फिर धारा को पकड़ने के लिये दूसरे व्याकरण तैयार होते थे। फिर भी धारा आगे बढ़ी थी। वाल्मीकि तट को भी छोड़ने लगी। वाल्मीकि के बहुतेरे शब्द लौकिक भाषा धारा से छोड़ दिये गये थे। ऐसी चञ्चल लोकभाषा को सूत्रों से पाणिनि को बाधना पड़ा था। वैदिक भाषा का परिवर्तन नहीं होता इसलिये उसकी प्रक्रिया स्थिर ही रखी गई। उसको भी लौकिक प्रक्रिया से अलग करते तो बहुत बड़ा ग्रन्थ हो जाता तथा संस्कृतज्ञ वैदिक परिचय से वञ्चित ही रहते। यद्यपि वाल्मीकि रामायण में भी लौकिक ही भाषा है तो भी उसका कुछ अंश पाणिनि ने नहीं लिया क्योंकि जन भाषा की जो धारा चलती थी उसमें वे अंश नहीं थे। व्याकरण निर्माता को भाषा का स्वरूप तथा परिवर्तन की धारा देखनी पड़ती है। पाणिनि ने धारा को पहचाना इसीलिये उनका व्याकरण चिरञ्जीवी हो सका। वाल्मीकि आदि के जिन अंशों को पाणिनि ने छोड़ा उनको आगे के लोग आर्ष-प्रयोग या निरङ्कुश कवि कहकर समाधान करते हैं। कुछ

प्राचीन साहित्य और कुछ चालू साहित्य देखकर ही भाषा परिचय समाप्त नहीं होता, किन्तु भाषा प्रवाह को देखना पड़ता है। ठीक प्रवाह के अनुसार चलने वाला यह व्याकरण हो, बहुत दिन तक मार्ग-दर्शन कर सके ऐसी व्याकरण निर्माता की अभिलाषा थी। उसी अभिलाषा या विज्ञान से सुसज्जित यह व्याकरण अभी तक मार्ग प्रदर्शक है, व्याख्यानों के व्याख्यान परम्परा से भी अभी तक पूर्ण व्याख्या को नहीं पा सका है। व्याकरण की अनेक समस्याओं का समाधान करता है। पाणिनि ने भाषा का पूरा अनुसन्धान करके ही बनाया तो भी व्यवहार बल से कुछ समय बीतने पर फिर कुछ भाषा धारा में परिवर्तन दीख पड़ने लगा, उसका अनुसन्धान कात्यायन ने किया। किन्तु कात्यायन दूसरा व्याकरण बनाने का हठ नहीं किये। बल्कि पाणिनीय व्याकरण के व्याख्यान से ही अधिकतर परिवर्तनों के संग्रह का ही प्रयास किये। जिनका व्याख्यानों से संग्रह नहीं हो पाया उनके लिये पणिनि सूत्रों के अनुसार ही वचन पढ़ कर सूत्रों का साथी बना दिये जिससे भाषा संग्रह का काम चल गया और व्याकरण नहीं बदला। उसके बाद शताब्दीआँ बीतने पर पतञ्जलि ने भाषा का अध्ययन किया। बहुत परिवर्तन दीख पड़ा, किन्तु उन्होंने भी दूसरे व्याकरण का प्रयास नहीं किया, किन्तु पाणिनि के सूत्र और कात्यायन के वार्तिकों का ही व्याख्यान किया। इनके प्रयोगों के निर्देश से भी कुछ निकाला, कुछ परिभाषाओं का संग्रह किया, लौकिक न्यायों को भी व्याकरण में लिया। च० तु० आदि निपातों का भी अनुकूल स्वारस्य ढूंढा, ज्ञापन-नियम-उत्सर्ग अपवाद आदि विधिओं को प्रगट कर बड़ा व्याख्यान किया जिससे अधिकतर परिवर्तनों को उन्हीं से गतार्थ कर लिया। थोड़े ही बच्चे जिनको इष्टि कहते हैं। अतएव यह व्याकरण पाणिनीय ही रहा कात्यायनीय अथवा पातञ्जल नहीं हुआ। इस का कारण सूत्रों का अच्छा संगठन, जिससे थोड़े में अधिक विषय भरे हैं, हो सकता है।

यह मेरा कथन ऐतिहासिक सरणी तथा भाषा स्वभाव की पर्यालोचना से है। प्राचीन भारत जब कि दूर सञ्चार तथा दूर ध्वनि प्रसारण साधन आधुनिक सुविधे के अनुसार नहीं था। जो थे वे बहुत श्रम तथा समय से साध्य थे। ऐतिहासिक सामग्री दुर्लभ या विरल थी। मनीषिओं के मन निष्क्रिय कैसे रहें, जो ही जैसा जितना

हीं मिला, उसी पर कल्पना चली, यथासाध्य प्रचार प्रसार हुआ, कविता कला उभड़ी। इन तीनों मुनिओं के बाद होने वाले आद्य शङ्कराचार्य भगवान् के अनेक दिग्विजय काव्य सरस वाग्विलास वाले प्रगट हुए। काव्य गुणों से गुम्फित थे किन्तु उनमें वर्णित घटनायें ऐतिहासिक क्रम से दुर्घट थी। ऐतिहासिकता के लिये दूसरे मूल की अपेक्षा करती हुई स्वत; विश्वसनीय नहीं हुई। उनसे भी प्राचीन इन तीन मुनिओं का चरित्र भी वैसा ही हुआ। जो बाल्यकाल में मुझे सुनाया गया, उसका अनुसरण नहीं किया हूँ।

इस समय भाषा का समुचित अनुगम नहीं होने से हिन्दी भाषा का व्याकरण निर्माण दुर्दशाग्रस्त मालूम होता है। हिन्दी व्याकरण की बहुत पुस्तकें निकलीं। कुछ कभी मेरे सामने भी पड़ी। संस्कृत और इंग्लिश व्याकरण के अनुकरण का प्रयास मालूम पड़ा, किन्तु हिन्दी भाषा स्वभाव के परिचय के बिना लड़खड़ाता हुआ मालूम पड़ा। जयपुर में ही एक हिन्दी व्याकरण पुस्तक को देखकर संस्कृत में लेख लिखा जो अयोध्या वाले संस्कृत साप्ताहिक पत्र में १९४५ उन्नीस सौ पैंतालीस ईस्वी में प्रकाशित हुआ था। मेरे देखे हुए व्याकरण पुस्तक में हिन्दी में द्विकर्मक धातुओं को संस्कृत के ऐसा गिनाकर उनके उदाहरण दिये गये थे। मेरी समझ में हिन्दी में द्विकर्मक धातुओं की आवश्यकता नहीं, उन के उदाहरणों में दूसरे कारकों से भी काम चल सकता है। इङ्लिश के टीच्-रीड् को देखकर पढ़ना-पढ़ाना हिन्दी में दो धातु मान लिया था। जब हिन्दी में पठन-पाठन भी लेते हैं। वहां पट-पाठ-दो धातु नहीं मानना है, तब पढ़ना-पढ़ाना दो धातु मानना अच्छा नहीं मालूम पड़ता, प्रेरणा को प्रत्यय का अर्थ ही संस्कृत के ऐसा मानना ठीक है। प्रेरणा के लिये धातु का भेद मानना ठीक नहीं है। और भी कुछ उसमें थे।

इस निबन्ध को लिखते समय हिन्दी व्याकरण किताब को जोरों से पढ़ते हुए एक लड़के के मुख से सुना कि पाणिनि के 'द्वितीया चितातीतेत्यादि सूत्रों के उदाहरणों को कर्मकारक द्वितीया तत्पुरुष समास का हिन्दी में उदाहरण दिया गया है। तुरत मन में आया कि हिन्दी भाषा के अनुसार सभी उदाहरणों में कर्मकारक ठीक नहीं हैं। मुझे तो बहुत कम हिन्दी के व्याकरण पुस्तक देखने को मिली, तो भी नीचे लिखा

हुआ संदेह जागृत है—छात्रैः अध्ययनात् न प्रमदितव्यम् का अनुवाद छात्रों को अध्ययन से प्रमाद नहीं करना चाहिए। इसमें जो कर्ता का चिह्न (को) आया है उसका उल्लेख किसी हिन्दी व्याकरण पुस्तक में शायद ही हो। यह एक देशीय भी नहीं है। जिस वाक्य में क्रिया के साथ 'चाहिये' आयेगा वहां इसका अवसर होगा। यदि संस्कृत के शब्द हिन्दी को लेने हैं और पूरा हिन्दी का व्याकरण बनाना है तो पाणिनीय व्याकरण की अच्छी व्युत्पत्ति आवश्यक है, उसके बिना न्यूनता या स्खलन होगा। मोहन के चित्रों का लिखना अच्छा है। इनमें सोचना पड़े कि (का) चिन्ह कर्म का है या सम्बन्ध का? मोहन से लिखित चित्र सुन्दर है। यहां कर्म उक्त हुआ या सम्बन्ध? इसी प्रकार कर्ता में भी। देखो मृग दौड़ता है इसमें दौड़ना प्रधान है या मृग? यह सोचना पड़ेगा। सुन्दर राजा का पुत्र और सुन्दर राजपुत्र इसमें क्या फरक पड़ेगा? इसके लिये क्या नियम या सिद्धान्त अपनाना होगा? इत्यादि बहुत पड़ेगें।

(७) सभी शास्त्रों का उपकार। अनुवृत्ति से पास की संगति और अधिकार से दूर-दूर की संगति मालूम पड़ती है। दूसरे पदों से भी आसत्ति का परिचय होता है। ऐसी ही छोटी २ व्युत्पत्तियों के बल से बड़े व्युत्पन्न श्री वल्लभाचार्य जी महाराज श्रीमद्भागवत का सात अर्थ कर डाले। उत्सर्ग अपवाद-सामान्य-विशेष की व्युत्पत्ति से वैयाकरणों का धर्मशास्त्र आदि पढ़ने का अधिकार हो जाता है। अपवाद-शास्त्र के विषयों से संकुचित उत्सर्ग शास्त्र का विषय होता है। इसके अभ्यास से शास्त्रों के विरोध का परिहार तथा समन्वय होता है। अपूर्व-नियम-परिसंख्या विधिओं के विवेक से मीमांसा के द्वार पर पहुंच जाता है। इन रीतिओं का उपयोग केवल शास्त्र ही में नहीं होता किन्तु हिन्दी निबन्ध लेख में भी अपेक्षित है। सभी जगह उत्सर्ग-अपवाद-सामान्य-विशेष-उद्देश्य-विधेय की अपेक्षा रहती है। सभी छोटे वाक्यों को मिलाकर महावाक्य बनता है। व्याकरण में वाक्यैक वाक्यता का व्यवहार बहुत होता है। महावाक्य से उद्देश्य-विधेय का निर्णय होता है। महा-वाक्य के विना शीर्षक से सूचित एक उद्देश्य और वाक्यों की परस्पर संगति व्यक्त नहीं होती है।

संस्कृत भाषा ही का जब ह्रास हो गया तब परिष्कार भाषा को कौन पूछे ? व्याकरण क्षेत्र की परिष्कार भाषा बहुत उपयोगी थी। उसीके बल से वैयाकरण विद्वान् नूतनबङ्गीय धर्मशास्त्रीय निबन्धों के अच्छे अधिकारी होते थे। रसगङ्गाधर ऐसे कठिन आलङ्कारिक ग्रन्थों को बिना पढ़ें परिश्रम से पढ़ा लेते थे। मेरे पढ़ते समय भी साहित्य की अपेक्षा काशी में व्याकरण के छात्र अधिक रहते थे। यह कहीं-२ सुनने में आता था कि काशी आकर साहित्य का पढ़ना। व्याकरण के वाद साहित्य तो सरल हो जायेगा। और शास्त्रों में भी अधिकार हो जायेगा। न्याय को बिल्कुल नहीं पढ़े हुए व्युत्पन्न वैयाकरण को दिनकरी अच्छी तरह पढ़ाते हुए मैंने देखा। अलङ्कारशास्त्र के साथ व्याकरण का बहुत घनिष्ट सम्बन्ध रहा है। ध्वनिकार का वैयाकरणयुध ऐसा समादर स्मरण मात्र से नहीं, किन्तु और आलङ्कारिकों के अलंङ्कार व्यवस्था में भी व्याकरण सिद्धान्तों का उपयोग करने से देखा जा सकता है। जैसे दण्डिका लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः। इत्यादि मृच्छकटिक पद्य में उपमावारण के लिये कारिका रूप वचन है—

कर्ता यक्ष्युपमानं स्यात् न्यूग्भूतोऽसौ क्रियापदे।
स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपोहितुम् ॥

( आख्यातार्थ कर्ता कैसे उपमान हो सकता है। वह धात्वर्थ क्रिया में विशेषण है, वह 'इव' अर्थ सादृश्य में कैसे विशेषण होगा ? उसकी क्रिया भी अपने कारकों के अन्वय के लिये नित्य साकाङ्क्ष हैं दूसरे सादृश्य आदि में विशेषण के लिये समर्थ नहीं है। ) यहाँ उपमा का वारण के लिये व्याकरण का व्यापार मुख्य विशेष्यक शाब्दबोध सिद्धान्त अपनाया गया।

केषाञ्चिदुपमा भ्रान्तिरिव श्रुत्येह जायते।
नोपमानं तिङन्तेने त्यतिक्रम्याप्तभाषितम् ॥

( लिम्पतीवेत्यादि में ही इव शब्द से किसी की उपमा की भ्रान्ति है, वह भी भ्रान्ति जबरदस्त है क्योंकि 'नतिङन्तेनोपमानमस्ति' इत्यादि आप्त पतञ्जलि के वचन का अतिक्रमण करके हुई है। यहां व्याकरण के अनुशासन का आदर किया गया है। संभावना अर्थ वाले इव शब्द में सादृश्य अर्थ का भ्रम है। धातोः कर्मणः

समानकर्तृकादिच्छायामिति सन् सूत्र के भाष्य में लुलुठिषते इव लुलुठिषते, पिपतिषतीव पिपतिषति इत्यादि अचेतन में भी सादृश्यवश सन् प्रत्यय हो जायेगा, इस अभिप्राय से 'उपमानाद्वा सिद्धम्' ऐसा वार्तिक बनाया गया, उसका खण्डन के लिये भाष्यकार का उपर लिखित वचन है। सागर विश्वविद्यालय से प्रकाशित सागरिका पत्र में १९७३ ई० में प्रकाशित 'उपमोत्प्रेक्षाकलकल:' मेरे लेख में इसका अधिक विवेचन मिलेगा। यहाँ तो इतना ही कहना है कि पाणिनीय शास्त्र बहुत विशाल है, बहुत विषयों से परिपूर्ण है, बड़ी व्यापक विद्वत्ता का सम्पादन करता है, सिद्धान्त कौमुदी अथवा आचार्य परीक्षा तक निविष्ट ग्रन्थ या ग्रन्थांशों से गतार्थ नहीं है। कोई ही परिश्रमी व्युत्पन्न व्याकरणाचार्य व्याकरण अध्ययन का अधिकारी हो पाता है, अधिकतर व्याकरणाचार्य अनधिकारी ही रह जाते हैं।

जैसे यहाँ ही सोचे—यह महाभाष्य अपूर्व अनुशासन है या वस्तु स्वभाव का अनुवाद है ? क्या अलङ्कार व्यवस्था अनुशासन के अधीन है अथवा वस्तु स्वभाव के अधीन है ? तिङन्तस्थल में तिङर्थ या धात्वर्थ कैसा है ? जिसमें उपमान योग्यता नहीं है। ऐसे ही प्रसङ्ग में रसगङ्गाधर में आलङ्कारिक शास्त्र स्वतन्त्र है व्याकरण परतन्त्र नहीं है, व्याकरण का विरोध कोई दोष नहीं है ऐसा कहकर आख्यातार्थ कर्तृत्व का विधान किया गया है। दण्डी तो व्याकरण शास्त्र के सिद्धान्त का अनुरोध करते हैं धात्वर्थ का विधान करते हैं। इसमें कौन ठीक है ? आलङ्कारिक शास्त्र धात्वर्थ क्रिया के प्राधान्य या अप्राधान्य में स्वतन्त्र है अथवा व्याकरण सिद्धान्त का अनुरोधी है ? रसगङ्गाधर का कथन सिद्धान्त है या प्रौढवाद है ? ब्राह्मण के ऐसा क्षत्रिय पढ़ता है ऐसे जगह क्रिया को भी उपमान माना गया है तब नवैतिङन्तेनोपमानमस्ति इस भाष्य का क्या अर्थ है। कूलं पिपतिषति में आशङ्का में सन् किया गया है, आशङ्का संभावना है ऐसा कैयट लिखते हैं। संदेह और भ्रम से भिन्न कैसा ज्ञान सम्भावना है ?। इव शब्द के प्रयोग में अध्यारोप तो है, रोदितीव गायति नृत्यतीव गच्छति देवदत्त: यह कैयट लिखते हैं। अध्यारोप उत्प्रेक्षा है ऐसा उद्योत कहता है। रोदितीव गायति में उपमा क्यों नहीं ? उत्प्रेक्षा कैसे ? न्यायसम्मत प्रथमान्तार्थ विशेष्यक शाब्दबोध चमत्कारी है या धात्वर्थ मुख्य विशेष्यक

बोध ? इत्यादि बहुत विवेचनीय है। विचारशक्ति और शास्त्र रसिकता चाहिये। संभावना ज्ञान के विषय में मेरा एक लेख प्रयाग की संगमनी पत्रिका में प्रकाशित हुई थी।

नाना रत्न निधि इस पाणिनीय तन्त्र का एक दृष्टान्त देखा जाय। सार्वधातु के यक् सूत्र के महाभाष्य में अकर्मक धातु के भाववाच्य तिङन्त में युक्तियुक्त बहुवचन का प्रयोग दिया गया है। उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते। ऊटों का जो अनेक प्रकार का अनेक बैठना उसके सदृश बैठना, पीठे हुए छटपटाते हुए का जो अनेक प्रकार का अनेक शयन उसके ऐसा शयन, यह अनुवाद है, उपमान बैठना और सोना के ऐसा उपमेय बैठना सोना अनेक धात्वर्थ है, वही धात्वर्थ भाव तिङर्थ है, वह अनेक है इसलिये उस अनेकता का द्योतक बहुवचन है। इस प्रकार बहुवचन का उपपादन है। पहले बहुवचन ही नया है, उस पर भी क्रियाविशेषण में स्त्रीलिङ्ग बहुवचन उसमें भी प्रथमा। क्रियाविशेषणानां कर्मत्वं नपुंसकत्वञ्च इस व्याकरणान्तर वचन में कितनी न्यूनता है ? महावैयाकरण श्री नागोजी भट्ट वहां प्रथमा लिखते हैं। यह शास्त्र कितनी व्याख्याओं की अपेक्षा रखता है ? इसकी कौन बराबरी कर सकता है ? शास्त्र रसिक बड़े विद्वानों के परिश्रम को पाता हुआ यह कितने विस्तार को पायेगा ?

इससे आख्यातार्थ संख्या के अन्वय में भी महान् कोलाहल हो गया। भूषण आदि पुस्तकों में आख्यातार्थ कर्ता कर्म में आख्यातार्थ संख्या के अन्वय की व्यवस्था की गई है। यहां आख्यातार्थ कर्ता-कर्म नहीं है, भाव है। भाव ही में बहुत्व संख्या का अन्वय करना है, इस प्रयोग की उपेक्षा भी करने लायक नहीं है, भाष्य प्रयोग से तथा वहाँ की शब्दावली से प्रसिद्ध प्रचलित प्रयोग मालूम पड़ता है। आख्यातार्थ कर्ता-कर्म-भाव तीनों में आख्यातार्थ संख्या का अन्वय माना जाय, जहाँ २ भाववाच्य क्रिया में एकवचन होता है वहाँ आख्यातार्थ भाव एक ही है इसलिये एकवचन होता है। क्या ऐसा नियम बनाया जा सकता है ? औत्सर्गिक एकवचन को छोड़ना पड़ेगा। एकत्ववाची एकवचन मानना पड़ेगा। एकत्व संख्या को केवलाम्वयी मानने पर भी उत्तर संख्या पूर्व संख्या को बाधती है इसके अनुसार भाववाच्य क्रिया में

बहुवचन का उपपादन करना पड़ेगा। यदि सभी जगह धात्वर्थ व्यापार ही में आख्यातार्थ संख्या का अन्वय माने, व्यापार एक होने पर भी कर्ता-कर्म उपाधि भेद से व्यापार का भेद मानकर द्विवचन बहुवचन की उपपत्ति करें तो भी बहुत अनुपपत्ति होगी, कर्ता और कर्म के भिन्न वचन होने में दूसरी व्यवस्था बनानी पड़ेगी। बहुवचन कर्ता वाले भावतिङन्त में बहुवचन की आपत्ति आयेगी। इस पर सोचना है, लिखना है, इतने ही ग्रन्थों से शास्त्र की समाप्ति नहीं होती। दूसरे में नहीं विशेषण हुए प्रथमान्त के अर्थ में आख्यातार्थ संख्या का अन्वय मानने वाले नैयायिकों के यहां भी यही कठिनाई है, प्रथमान्त का अर्थ यहाँ क्रियाविशेषण है। वे लोग महाभाष्य आदि से स्वतन्त्र होकर लक्षणा से काम चलायेंगे। यदि महाभाष्य को व्यावहारिक प्रयोग का अनुगम और अनुभवी माने तो नैयायिकों की लक्षणा यहां लोक विरोधी होगी। दूसरी व्यवस्था करनी पड़ेगी। इस भाष्य सन्दर्भ का विशेष विवेचन मेरे 'क्रिया-विशेषण विभक्ति विचारः' लेख में आया है। वह करीब १६ वर्ष पहले अयोध्या संस्कृत पत्र में प्रकाशित हुआ है। पांच-छः वर्ष पहले काशीस्थ सूर्योदय पत्र में भी प्रकाशित हुआ है। इति।

●

### काशीस्थ-मासिक-संस्कृत-सूर्योदय पत्रस्य ४५ पञ्चचत्वारिंशवर्षे दशमाङ्काद् अक्तुवर १९६९ ईशाब्दात्क्रमशोऽङ्कत्रये प्रकाशितम्

# क्रियाविशेषणविभक्तेः पाणिनीयता-विचारः

[ बिहारप्रदेशस्य 'गम्हरिया' ( सारन )-वास्तव्यैः सुप्रसिद्ध-वैयाकरण-दार्शनिकैः विद्वद्भिः श्री ओझामहाभागैः क्रियाविशेषणविभक्ति विषयीकृत्य प्राचामुदीचाञ्च प्रचलिताः सर्वा विप्रतिपत्तीः समुपन्यस्य सूत्र-वार्तिक-भाष्या-ध्ययनाधारेणाऽत्र निबन्धे दश निष्कर्षाः साधिताः, ये च नूनं व्याकरण-महोदधि-तस्तलगतानि रत्नानि विचिन्वतां सङ्ख्यावतां परप्रमोदाय भवेयुरिति सादरं दृढं भावयन्तोऽपि वयं स्थानसङ्कोचात्तान् धारावाहिकरूपेण क्रमशो द्वि-त्र्याङ्केषु प्रकाशयामः। समग्रस्य निबन्धस्य प्रकाशनोत्तरं निबन्धस्यास्य समीक्षणमपि कैश्चित्प्रेष्येत चेत्तदपि सोल्लासं प्रकाशयिष्याम इति निवेदयति।
—सम्पादकः ]

यस्माद् वाग् विनिवर्तते च रमते यस्मिन् पदं सत्परम्,
वाक्ये स्फोटमये च लिङ्गवशतोऽखण्डं सदा नृत्यति।
रूपं नाथ विवर्तते विविधतां धत्तेऽद्वयं राजते,
वाचं ब्रह्म विचिन्तयामि शरणं यामि स्वतो भासताम् ॥

प्राचामुदीचाञ्च बहूनामाचार्याणां विपरीतानि व्याख्यावचांसि समुपेक्ष्य सूत्र-वार्तिक-भाष्याण्येव प्रमाणत्वेनाऽऽधारीकृत्य वचनसिद्धम् अनुपपत्तिगस्यं ज्ञापकसिद्धञ्च सिद्धान्तमुररीकृत्य प्रवृत्तमिदमध्ययनम् ।

तत्र एते निष्कर्षाः

( १ ) क्रियाविशेषणस्य कर्मसञ्ज्ञायां किमपि पाणिनीयानामनुशासनं नास्ति ।

( २ ) कतिपये व्याख्यातार आचार्या क्रियाविशेषणस्य कर्मसञ्ज्ञां ब्रुवाणा अपि शेखर-शब्दरत्नकृतौ विहाय क्रियाविशेषणस्य कर्मसञ्ज्ञायै 'कर्तुरीप्सिततमं कर्मे'ति सूत्रं न सङ्गमयन्ति, अग्रेतनानां व्याख्यानन्तु शेखरादिमूलकम् ।

( ३ ) नागेशादयः फलान्वयिन एव विशेषणस्य कर्मसञ्ज्ञां समोहन्ते, न व्यापारान्वयिनः । बहुधा तथैव लेखः । क्वाचित्को विपरीतलेखः प्रामादिको मूलकृतो लेखकस्य वा भवेत् ।

( ४ ) कस्यचित् क्रियाविशेषणस्य द्वितीयान्ततायाँ ज्ञापकदानमन्यथा-सिद्धं नादरणीयम् ।

( ५ ) अकर्मकस्थले व्यापारान्वयं विना केवले फले विशेषणान्वयो व्याकरणशास्त्रसिद्धान्तविरुद्धो भाषाविज्ञान-शास्त्रविरुद्धश्च ।

( ६ ) 'द्रुतं गच्छति, मन्दं गच्छती'त्यादौ धात्वर्थव्यापारे एव द्रुतत्व-मन्दत्वादेरन्वयो न तु फले । केषाञ्चित् फलान्वयवादो भाषास्वभावान-भिज्ञतामूलको भाषाविज्ञानविरुद्धश्च ।

( ७ ) धात्वर्थनिरूपणे फल-व्यापारयोः साध्य-साधनभावो जन्य-जनक-भावोऽनुकूलत्वं वा भासते तत्र साध्यत्व-साधनत्वजनकत्वादिः संसर्गतयैव भासते, न तु प्रकारत्वेन, गौरवादनुभवविरोधाच्च । तदाधारेण केषाञ्चित् साध्यत्वस्योत्पत्तेः फलतावच्छेदकस्य च फलत्ववर्णनं कल्पनामात्रं प्रमाणशून्य-मनुभवविरुद्धञ्च ।

(८) क्रियाविशेषणकर्मणः कर्मतया ग्रहणे दोषाः सूत्रभाष्यादि-विरोधश्च।

(९) क्रियाविशेषणकर्मणि अभेदे साध्य-साधनभावविरोधो भाष्य-विरोधश्च। यद्यपि अनेकस्थले बुद्धिसिद्धं पदार्थमादाय साध्य-साधनभावो वर्ण्यते, तथापि अभेदो भेदश्च युगपद् विरुदध्यत एव।

(१०) कर्म-द्वितीयायाः सर्वत्र आश्रयत्वमाश्रयो वाऽर्थो न तु क्वचिदभेदः।

एतेषु संक्षेपतः किञ्चिद्विवेचयामि, पाठकान् अध्ययनशीलान् विदुषो निवेदयामि च यत् सूत्रवार्तिक-भाष्यविरुद्धमत्र यद् भासेत तद् विरोधप्रदर्शन-पुरस्सरं कृपया कथमपि सूचयन्तु, अन्येषां विरोधप्रदर्शनस्य नावश्यकता, तत्र नावधानं मम।

### १. प्रथमनिष्कर्षः

तत्रापि सम्प्रदायः—बहूनि पाणिनिसूत्राण्युल्लिखन्तः क्वचिन् महा-भाष्यमपि निर्दिशन्तो गदाधरभट्टाचार्या व्युत्पत्तिवादे क्रियाविशेषणस्य कर्म-सञ्ज्ञायै पाणिनीयमनुशासनमपश्यन्तोऽनुशासनान्तरमिव लिखन्ति। तस्य कृष्णंभट्टीटीका एतदर्थं पाणिनीयमनुशासनं नास्ति इति स्फुटं वक्ति। अन्ये टीकाकारा अतिदिष्टं कर्मत्वं व्याचक्षते। पाणिनीयानुशासनविरहादेव शब्द-शक्तिप्रकाशिकायां जगदीशतर्कालङ्काराः कर्मत्वमनङ्गीकुर्वाणाः प्रकारान्तरेण द्वितोयासाधनाय क्लिश्यन्ति। पाणिनिसूत्रानुसारं कारकार्थं व्याचक्षाणाः खण्डदेवप्रभृतिमीमांसकाः अनुशासनाभावादेव कथमपि द्वितीयां साधयन्ति। पाणिनीयव्याकरणस्यापि व्याख्यातार आचार्याः क्रियाविशेषणम्, क्रियाविशे-षणद्वितीयान्तम्, क्रियाविशेषणं कर्म इत्यादिशब्दैरसकृद् व्याहरन्ति ग्रन्थेषु। तथा च क्रियाविशेषणस्य द्वितीयान्तताया भूयान् प्रचारः प्रतिभाति। द्वितोया-विधाने प्रकारभेदः परं संभवति।

भूषणसार-दर्पणधात्वर्थनिरूपणे 'स्तोकं पचतो'त्यादिप्रसङ्गे "अन्ये तु 'ओजः सहाम्भवा वर्तते' इत्यधिकारे तत्प्रत्यनुपूर्वमीपलोमकूलम् इति सूत्रे द्वितीयान्त-तच्छन्दग्रहणं ज्ञापकं क्रियाविशेषणाद् द्वितीयेत्यस्यार्थस्य, न तु स्तोकाद्यर्थस्य कर्मत्वमपि, फलस्य फलाश्रयत्वाभावात्" इत्यादि लिखितं वर्तते। तथा च पाणिनीय-वैयाकरणानामपि कश्चित्सम्प्रदायः क्रियाविशेषण-कर्मत्वाभावस्य।

प्राय: १९३६ ईशाब्दे काश्यां स्वर्गीया अर्चनीयचरणा महामहोपाध्यायाः श्री हाराणचन्द्र भट्टाचार्याः "क्रियाविशेषणे कर्मसञ्ज्ञार्थं किमपि पाणिनीयानुशासनं महाभाष्यस्वारस्यं वा नास्ति, पाणिनीय-व्याकरणानुसारिणी प्रातिपदिकार्थे प्रथमैव युक्ता, शेखरादौ द्वितीयाप्रसिद्धिमनुरुद्धय नागेशादयः क्रियाविशेषणस्य फलान्वयिनः कथमपि कर्मसञ्ज्ञां विदधति, व्यापारान्वयिनः क्रियाविशेषणस्य तन्मतेऽपि प्रथमान्तत्वमेव। शेखरकृता 'तत्प्रत्यनुपूर्वमीपलोमकूलमि'ति सूत्रे प्रथमैवोक्ता, मम गुरुपरम्परागतोऽयं विषयः" इत्यब्रुवन्।

तदानीमेव काश्यां प्रसिद्धाः पञ्चषा महावैयाकरणा मया पृष्टा नान्वमोदन्त इमं सम्प्रदायम्। परं क्रियाविशेषणस्य कर्मतायां भाष्यस्वारस्यमपि न प्रादर्शयन्।

शब्देन्दुशेखर-कारकशेखरदीपकाभिधटीकायामेतत्प्रसङ्गे सप्तमनिष्कर्षसूचितफलवर्णनद्वारा क्रियाविशेषणस्य कर्मसञ्ज्ञा सम्पादिता वर्तते, तदाधारेणैव कालिकातास्थ-विशुद्धानन्दविद्यालयीयनैकविरुदावलीभाजा श्री सीतारामशास्त्रिणा 'क्रियाविशेषण-तत्त्वम्' नाम लघुपुस्तकं प्रणीतम्, तच्च 'मञ्जूषा'-संस्कृतपत्रे प्रकाशितं वर्तते। १९५७ ईशाब्दे अयोध्यास्थे 'संस्कृतं'-पत्रे एतद्विषये बहुषु अङ्केषु अनेकलेखाः प्रकाशिताः, तत्र ममाऽपि लेखा आसन्। विवेचका विद्वांसो विचारस्य मार्गान्तरमाश्रितवन्त इति न तादृशं सन्तोषमवापमिति पुनः प्रस्तौमि।

श्री नित्यानन्दपर्वतीयकृते शेखरदीपके एतद्विषये इत्थमपि लिखितम्—'परे तु फलस्य कर्मत्वाभावेऽपि 'नीलं घटमानये'त्यादौ कर्मवाचक-घटादिपदसमानाधिकरणनीलादिपदानां कर्मत्वेतरकरणत्वादिसम्बन्धानवच्छिन्नप्रकारताप्रयोजकत्वात् तेभ्य इव फलवाचकपदादपि द्वितीया सेत्स्यतीत्याहुरि'ति।

तत्रेदमेव मम वक्तव्यम्—शेखरकृतप्रकारे केनचिदस्वरसेन प्रवृत्तमिदं प्रकारान्तरम्। अस्वरसबीजं कदाचन शेखरकृत-प्रकारस्य भाष्यादिस्वारस्यविरह एव भवेत्। इदमपि मतं क्रियाविशेषणस्य कर्मत्वाभावेऽपि द्वितीयान्तत्वाग्रहेण। कल्पना चेयं दुर्बला भाष्यस्वारस्यविहीना अप्रामाणिक-गौरवग्रस्ता च। कर्मत्वेतर-करणत्वादि-सम्बन्धानवच्छिन्नप्रकारताप्रयोजकाद् द्वितीयेति 'कर्मणि द्वितीया'-सूत्रस्य, एवं करणत्वेतर-कर्मत्वादिसम्बन्धानवच्छिन्नप्रकारताप्रयोजकात् तृतीयेति 'कर्तृकरणयोस्तृतीये' त्यादिसूत्राणामर्थवर्णने अप्रामाणिकगौरवम्, 'सतां गतम्, मातुः स्मरती'त्यादावेव कथमपि कर्तृत्वकर्मत्वादेः संसर्गत्वसंभवेऽपि अन्यत्र प्रकारतयैव भानादसम्भवग्रस्तम्, कटमपि

कर्म, भीष्ममपि कर्मेत्यादि-भाष्यविरुद्धञ्च। कर्मत्वादेरप्रातिपदिकार्थत्वात् कर्मादिद्वितीयादेर्बाधकत्वाच्च कर्मत्वादिसम्बन्धानवच्छिन्नप्रकारताप्रयोजकात् प्रथमेति अर्थात् सिद्धादर्थादनया रीत्या प्रथमाया युक्तत्वाच्च।

तथा च सुपां कर्मादयोऽर्था इत्यादि भाष्यस्वारस्यात् फलाश्रयस्यैव कर्मसञ्ज्ञा, न तु फलस्य, न वा फलान्वयिनो विशेषणस्येति परिशेषात् प्रातिपदिकार्थमात्रे प्रथमेति मम प्रतिभाति।

यत्तु प्रथमास्वीकारे 'निपुणस्त्वं पचसि, मृदु त्वा राजा द्रविणेन योजयति' इत्यादौ सपूर्वायाः प्रथमाया विभाषा इति सूत्रस्य प्रवृत्त्या अन्वादेशे वैकल्पिकत्वादेशापत्तिरित्युच्यते। तन्न विशेषाधायकम्; वैकल्पिकाप्रवृत्तेस्त्रिमुनिप्रमाणकत्वाभावात्। त्रिमुनिमतेऽत्र क्रियाविशेषणस्य प्रथमान्तत्वे वैकल्पिकस्येष्टत्वाच्च। शेखरकारदिशा फलान्वयिनो विशेषणस्यैव द्वितीयान्तता, व्यापारान्वयिनो विशेषणस्य प्रथमान्तत्वं तिष्ठत्येव। लोकप्रसिद्धिस्तु क्रियाविशेषणमात्रे द्वितीयायाः, शेखरकृतापि लोकानुरोधस्त्यज्यत एव।

गदाधरभट्टाचार्यास्तु यदि व्याकरणान्तरानुशासनमभिप्रयन्ति, तदा नात्रासौ विचारविषयः, अतिदिष्टं कर्मत्वन्तु मुनित्रयानुक्तत्वान्न पाणिनीयानामादृतम्।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥

इति वार्तिके अन्यत्रापि दृश्यते इत्यनेन भाष्यानुक्तेषु द्वितीयाविधानं न पाणिनीयानां सम्मतम्। तेन जगदीशतर्कालङ्कार-खण्डदेवमीमांसकयोर्व्यवस्था न पाणिनीया। ततश्च क्रियाविशेषणस्य कर्मत्वं द्वितीयान्तत्वं वा न त्रिमुनिप्रमाणकम्।

यदपि 'सकृल्ल्वौ' इत्यादौ क्रियाविशेषणस्य सकृदित्यस्य कर्मत्वाभावे कारकत्वाभावेन गतिकारकेतरपूर्वपदस्य यण् निषेधापत्तिः। तदपि न; प्रातिपदिकार्थसूत्रस्य क्रियायोगे प्रवृत्त्या क्रियान्वयस्य सत्त्वाच्च कारकत्वाक्षतेः।

तत्प्रत्यनुपूर्वमीपलोमकूलम् इति सूत्रे वर्तते योगे तत्पदं क्रियाविशेषणं द्वितीयान्तमिति बहूनां व्याख्यानमपि न भाष्याद्यनुकूलमित्यशुद्धम्। अतएव तत्र शेखरे प्रथमाया युक्तत्वमुक्तम्। अकर्मकवर्ततियोगे व्यापार एव तत्पदार्थस्यान्वयात् नागेशमतेऽपि प्रथमाया एव युक्तत्वात्। प्रथमान्तस्वीकारे भाष्यादिविरोधाभावात्।

तृतीयनिष्कर्षस्यापि नागेशमतस्येदमप्युदाहरणम् ।

चतुर्थनिष्कर्षस्य अन्यथासिद्धिरप्येवमेव ऊह्या। अस्य सम्बन्धः पञ्चमनिष्कर्षनिरूपणेऽप्यायास्यति ।

करणे स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य इति सूत्रे करणग्रहणस्य प्रयोजनं स्तोकं पचती'ति दीयते। कर्मत्वाभावे तन्न सङ्गच्छते, अतः क्रियाविशेषणस्य कर्मत्वमिति केचन वदन्ति । तदपि आपाततः, व्यावृत्तौ प्रथमा-द्वितीययोर्विशेषाभावात् । असत्त्ववचनत्वमात्रमपेक्षितम्, धात्वर्थसाध्यावस्थापन्नक्रियायामन्वयादसत्त्ववचनत्वाक्षतेः ।

पूजनात् पूजितमनुदात्तमिति सूत्रादपि केचन क्रियाविशेषणस्य कर्मत्वं निस्सारयन्ति । मलोपवचनात् तत्सूत्रमसमासे प्रवर्तते । 'दारुणाध्यापक' इत्युदाहरणम् । क्रियाविशेषणस्य कर्मद्वितीयान्तत्वे च मलोपवचनं सार्थकम् । अन्यथा 'दारुणोऽध्यापक' इत्यत्र विसर्गादिलोप उपसंख्यायेत इति । तदपि यत्किञ्चिदेव; क्रियाविशेषणस्य प्रथमान्तत्वेऽपि नपुंसकत्वान्मलोपवचनस्य सार्थक्यात्, द्वितीयालोपी नोच्यते येन प्रथमान्तत्वं विरुद्ध्यते । यथा द्वितीयायामेकदेशान्वयी नपुंसकत्वञ्च तथा प्रथमायामपि, क्रियाविशेषणं द्वियीयान्तमिति व्याख्यातृभिरुक्तं न तु भाष्यकृता, मलोपप्रत्याख्यानपक्षेऽपि यथा द्वितीयायां कर्मधारयस्तथा प्रथमायाम् । प्रथमा च प्रथममुपस्थिता, 'स्तनाभ्यां स्तोकनम्रे'त्यादिवत् दारुण्येन साकं सामानाधिकरण्यम् । अत एव त्रिमुनिसम्मतेरभावात् स्तोकं करोतीत्यर्थे कर्मण्यण् अप्रामाणिकः ।

समर्थः पदविधिः सूत्रस्य भाष्य-प्रदीपोद्योता अवलोकनीयाः । तत्र विधिशब्दस्य कर्मसाधनमुक्त्वा भाष्यकारो ब्रूते—किं पुनर्विधीयते ? समासो विभक्तिविधानं पराङ्गवद्भावश्च इति। तत्र क्रियाया एकवचनान्तत्वेन प्रत्येकमन्वयात् विभक्तिविधानं विधीयते इत्युत्तरस्यावान्तरवाक्यं फलति । तत्र विधानस्य विधानकर्मत्वं विरुध्यते इत्यनुसन्धाय प्रदीप आह—तत्र विभक्त्यवच्छिन्नत्वाद्विशिष्टं विधानं कर्म सामान्यविधानक्रियाया भवति, यथोक्तम्-सामान्यपुषेरवयवपुषिः कर्म इति । एवञ्च भाष्ये प्रदीपे च क्रियाविशेषणत्वात् कर्मेति नोक्तमस्ति । प्रदीपे कर्म उक्तं कीदृशं कर्मेति नोक्तम् । अधुना विभक्त्यवच्छिन्नेति प्रदीपस्य प्रतीके उद्योतो लिखति—एवञ्च पाकं पक्ष्यतीतिवत् सामान्यविशेषभावेनान्वय इति भावः । क्रियाविशेषणत्वाच्च कर्मत्वम् इति ।

इदं तत्र चिन्तनीयम्—दार्ष्टान्तिके कर्मणि विधाने विभक्त्यवच्छिन्नत्व-विशिष्टत्वेन विशेषत्वम्, दृष्टान्ते 'पाकं पक्ष्यति' इत्यत्र कथं कर्मपाकस्य विशेषता ? यदि घञर्थ-धात्वर्थयोर्मेलनाद्विशेषता तर्हि दार्ष्टान्तिके विभक्तित्वा-वच्छिन्नस्य योजनं प्रदीपस्य व्यर्थम्। ल्युडर्थ-धात्वर्थयोर्मेलनादेव विधानस्य विशेषत्वसंभवात्। प्रदीपस्य यथोक्तमित्यनेन कर्मवत्कर्मणातुल्यक्रियः इति सूत्रस्य भाष्यं गृह्यते, तत्रैव तस्य व्याख्यानं द्रष्टव्यम्। वस्तुतस्तु सार्वधातुके यक् सूक्तभाष्यरीत्या कृदभिहितभावस्य द्रव्यवत्तया क्रियया समवायाच्च पाकं विधानमित्यादि फलाश्रयकर्मैवं, न तु क्रियाविशेषणं कर्मेति बोध्यम्। सामान्यविशेषभावस्य अभेदस्य वा आश्रयत्वस्य वैलक्षण्ये एव कथमप्युपयोगः। 'कर्मवत् कर्मणा तुल्यक्रियः' सूत्रभाष्येण धात्वर्थस्य धातूत्तरकर्मप्रत्ययार्थत्वं विरुद्ध्यते, विलक्षणस्य कृदर्थभावस्य फलाश्रयकर्मतैव एतादृशेषु भाष्य-सम्मता। विभक्तिविधानं विधीयत इति कर्मलकारस्योदाहरणम्. क्रियाविशे-षणकर्मणि कर्मलकारो न भवति, अन्यथा 'स्तोकस्तण्डुलं पच्यत' इत्याद्यापत्तेः। तथा च कर्मलकारे क्रियाविशेषणकर्मवर्णनमेतद् भाष्यविरुद्धम्। कर्मषष्ठ्यां कर्मलकारे च कर्तृसाहचर्येण भेदान्वयि कर्मैव गृह्यते इति अन्यत्र निरूपयतो नागोजीभट्टमहोदयस्य स्वोक्तिविरोधः। इदञ्च भाष्यं क्रियाविशेषणस्य कर्मत्वसाधकतया केचन समुद्धरन्ति, परं तद्विपरीतं क्रियाविशेषणस्य कर्मतां विरुणद्धि। इदमष्टमनिष्कर्षनिरूपणेऽपि योज्यम्।

## नवम्बर ११ अङ्के

इत्थमेव कर्मवत्कर्मणा तुल्यक्रियः इति सूत्रस्य प्रदीपोद्योते क्रियाविशेषणं कर्म नागोजीभट्टमहोदयेनोक्तम्, तदपि भाष्यं क्रियाविशेषणस्य कर्मतासाधकं वदन्ति। परमेवमेव तादृक् कर्मतां विरुणद्धि। तथा हि—सकर्मकाणां प्रतिषेधो वक्तव्य इति वार्तिकप्रत्याख्यानाय तपस्तपःकर्मकस्यैव इति सूत्रं द्विर्नियमार्थमुक्तम्। द्वितीयनियमप्रतिपादकं भाष्यम्—

"तस्य तपःकर्मकस्यैव। तस्य च तपःकर्मकस्यैव कर्ता कर्मवद् भवति नान्यकर्मकस्येति। किमिदं तप इति ? तपेरौणादिकोऽस्कारो भावसाधनः। कः प्रकृत्यर्थः ? कः प्रत्ययार्थः ? स एव सन्तापः। कथं पुनः स एव नाम प्रकृत्यर्थः स्यात्, स एव च प्रत्ययार्थः ? सामान्यतपेरवयवतपिः कर्म भवति। तद् यथा स एतान् पोषानपुषत्, गोपोषमश्वपोषं रैपोषमिति सामान्यपुषेरवयवपुषिः कर्म भवति। एवमिहापि सामान्यतपेरवयवतपिः कर्म भवति" इति।

तपेर्वा सकर्मकस्य वचनं नियमार्थम् इति भाष्यवार्तिकमादाय एतद्विषयकः प्रदीपो निम्नाङ्कितप्रकारः—तप इति योगविभागेन नियमः क्रियत इति भावः। ननु 'तप्यते तपस्तापस' इत्यत्र कर्मस्थया क्रियया तुल्यक्रियत्वं कर्तुर्नास्ति, उपवासादेस्तपसः कर्तृत्वे तपेर्दुःखार्थत्वात्, तापसस्य तु कर्तृत्वेऽर्जनार्थत्वात्। नैष दोषः; शरीरसन्तापलक्षणायाः क्रियायास्तुल्यत्वादवस्थाद्वयेऽपि शरीरसन्तापलक्षणमेवार्जनं तापसस्य, यतो व्यापारः। कः प्रत्ययार्थं इति भाष्यप्रतीके 'तापसेन तपस्तप्यते' इति कर्मणि लकारोत्पत्तौ प्रकृत्यर्थस्य क्रियारूपस्य प्रत्ययार्थत्वं दृश्यते, क्रियाकर्मणोश्च साध्यसाधनभावाद् भेदेन भाव्यम्। इह तु भेदाभावात् प्रकृतिप्रत्ययार्थानुपपत्तिः। अथवा 'तपःकर्मकस्ये'ति वचनात् प्रकृत्यर्थस्यैव कर्मत्वमाश्रितम्। तच्च विरुद्धमिति भावः। 'अवयवतपिरि'ति भाष्यप्रतीके विशेषतपिर्ज्ञानलक्षणं तप इत्यर्थः।

उभयोः सारांशः—पूर्वपक्षे अभेदे साध्यसाधनभावस्य क्रियाकर्मभावस्य धात्वर्थ-कर्मप्रत्ययार्थभावस्य चानुपपत्तिर्दर्शिता, 'सामान्यतपेरवयवतपिः कर्म भवति इत्युत्तरवाक्येन धात्वर्थकर्मणोर्भेद एव भाष्यकृता बोधयितुमिष्टः। सामान्यशब्दं ब्रुवाणोऽपि भाष्यकारो विशेषशब्दं नोल्लिखति। अन्यथा सामान्यविशेषभावेऽभेदापत्तेः, पूर्वपक्षस्य तदवस्थितत्वापत्तेश्च। प्रदीपःअवयवशब्दस्थाने विशेषशब्दं ब्रुवाणोऽपि ज्ञानलक्षणमनुवदन् धात्वर्थादर्जनलक्षणात् संतापलक्षणाद् वा तपसः कर्मणो भेदं व्यनक्ति। यदि सामान्यविशेषभावेनाऽभेदान्वयः प्रदीपस्य समीहितो मन्येत, तदा ज्ञानलक्षणार्थभेदकथनं तस्य व्यर्थं स्यात्, भेदे च सामान्यविशेषभावानुपपत्तेः। क्रियाविशेषणं कर्मेति भाष्येण प्रदीपेन च नोच्यते। कर्मलकारस्य चेदमुदाहरणम्। क्रियाविशेषणे कर्मणि कर्मलकारो न भवतीति तपसः क्रियाविशेषण-कर्मतावर्णनं भाष्यादिविरुद्धम्।

अहन्तु युक्तं मन्ये—अनुपदमेव भाष्यकारः किमिदं तप इति ? तपेरौणादिकोऽस्कारो भावसाधनः इत्यवोचत्, तदनुरोधेनैव उत्तरवाक्ये अवयवशब्दं ब्रूते। अन्यथा एवं तपःशब्दव्युत्पादनस्य प्रकृते क उपयोगः स्यात् ? तथा च अवयवस्तपिर्यत्र भावसाधनास्प्रत्ययान्त-तपःशब्दे तादृशतपःशब्दार्थः कर्म स च कृदभिहितभावो द्रव्यवत् क्रियासमवायमुपैति। धात्वर्थस्तु साध्यावस्थापन्नाऽद्रव्यभूता न क्रियासमवायमुपैति। तथा च फलाश्रयः कर्मैव कर्मलकारार्थो न तु क्रियाविशेषणकर्मेति। किञ्च-तपिरत्र सकर्मकः क्रियाविशेषणकर्मणा सकर्मकत्वं नायाति, अतः फलाश्रयकर्मणाऽपि अन्येन केनापि अवश्यं भाव्यम्, तपःपदार्थमन्तरा सूत्रभाष्यानुकूलं किं स्यात् फलाश्रयकर्म ?

उपरिलिखितस्य प्रदीपस्य प्रतीकेऽधोलिखित उद्योतः—कैयटे शरीर-सन्तापपदेन स व्यापार एव। तदेव चार्जनमिति बोध्यम्। तत्र क्रियाविशेषणत्वात् 'स्तोकमेधते' इत्यादाविव तपसः कर्मत्वमिति। प्रकृत्यर्थस्यैवेति प्रतीके सन्तापस्यैत्यर्थः। तस्यैव तपःपदार्थत्वादिति भावः। प्रत्ययार्थत्वं प्रतीके तिङ्-प्रत्ययार्थकर्मरूपत्वम्, यद्यपि क्रियाविशेषणरूपे कर्मणि लकारो न, कर्तृसाह-चर्येण धात्वर्थे भेदेनान्वयिकर्मण एव तत्र ग्रहणात्, तथापि भाष्यप्रामाण्यात् सामान्यविशेषभावेनान्वयिनि क्रियाविशेषणकर्मणि लकारो भवत्येव। अत एव स्तोकमित्यादेः क्रियाविशेषणस्य एकत्वनपुंसकत्वे अपि। 'एतान् पोषानपुपदि' त्यादौ पुंस्त्वबहुवचने इति बोध्यम्। ज्ञानलक्षणं तप इति प्रतीके ज्ञानजनको-पवासादिरूपमित्यर्थः। भाष्ये 'एतान् पोषान्' इत्यस्य विशेषसमर्पकाणि 'गोपो-षमि' त्यादीनि घञन्तानि बोध्यानि इति।

'स्तोकमेधत' इति दृष्टान्तदानं चिन्त्यम्। दृष्टान्ते एधतिरकर्मकः प्रकृते तपिः सकर्मकः, अकर्मकवर्ततियोगे तत्प्रत्यनुपूर्वमीपलोमकूलम् इत्यत्र प्रथमात्व-स्वीकारेण अकर्मक-धातुस्थले क्रियाविशेषण-कर्मत्वानङ्गीकारात्। यद्यपि परम-लघुमञ्जूषायाम् अस्तिभवतिवर्ततीनां व्यापारमात्रमर्थः इत्युक्तमस्ति। वर्ततियोगे फलान्वयाभावाद् व्यापारान्वयेन क्रियाविशेषणकर्मत्वाभावात् प्रथमान्तत्वमेव युक्तम्। एधतियोगे तु फलान्वयात् कर्मत्वं संभवतीति वक्तुं शक्यते, तथापि अकर्मकस्थले व्यापारान्वयं विना फलान्वयः पृथङ् न भवति। अत एव धात्व-र्थनिरूपणे लघुमञ्जूषादौ एधते वृद्धिरूपा क्रियेत्यर्थो वर्णितः। एक एवार्थः फलं व्यापारश्च, फलत्वेनान्वयं कृत्वा कथमपि कर्मत्वसम्पत्तिरूह्या। ममरीत्या तु "स्तोकमेधते' इत्यादौ क्रियाविशेषणे प्रथमैव। 'तापसेन तपस्तप्यते' इत्यत्र क्रियाविशेषणं कर्म स्वीकृत्य कर्मणि लकारानुपपत्तिं प्रति बहु क्लिश्नाति उद्योतकार इति 'यद्यपि-तथापि'-भाष्यप्रामाण्यात् प्रभृतिशब्दैरभिव्यज्यते। नाभेदान्वयो नापि क्रियाविशेषणं कर्म, किन्तु फलाश्रयकर्मैव कृदभिहितभा-वस्य धात्वर्थभिन्नत्वाद् भेदेनान्वय इत्यादिविषये एतद्भाष्यं प्रमाणम्। धात्व-र्थाभेदान्वयिनि कर्मणि लकारे 'स्तोकस्तडुलं पच्यत' इत्याद्यापत्तेः। सामान्य-विशेषभावेनेति उद्योतवचसा न कश्चिद्विशेषः। सर्वत्र सामान्यविशेषयोरेवाभे-दान्वयो न तु सामान्ययोर्विशेषयोर्वा इति तु मम प्रतिभाति।

अधुना भाष्यस्थः 'स एपान् पोषानि' त्यादिदृष्टान्तार्थो विवेचनीयः। 'एतान् पोषानि'त्यत्र पोषपदार्थस्य द्वितीयार्थकर्मतायां धात्वर्थक्रियायां वाऽन्वयः ? धात्वर्थक्रियायामन्वये पुंस्त्ववहुवचने कथमुपपद्येताम् ? घञन्तस्य

नित्यपुंस्त्वेऽपि बहुवचनन्तु क्रियाविशेषणत्वेऽनुपपन्नमेव। तथा च नेदं क्रियाविशेषणकर्मण उदाहरणम्। तथा च दृष्टान्तानुरोधेनापि न तपसः क्रियाविशेषणकर्मत्वम्। पोषणेऽपि काचित्पुष्टिरिति फलाश्रयकर्मैव। एवमेव 'गोपोषं पुष्णाती'त्याद्यपि। गोकर्मकं यत्पोषणं तत्कर्मकं पोषणमित्यादिरीत्याऽर्थः। केचन 'गोपोषमि'त्यादौ स्वे पुषः विहितणमुलमुदाहरन्ति। तेषां 'घञन्तानीति' उद्योतोक्तिस्तु प्रतिकूलैव। युक्तमपि न प्रतिभाति। यथाविध्यनुप्रयोगः इति सूत्रम्, 'उदपेषं पिनष्टि, उदकेन पिनष्टी'त्यादिकौमुद्युक्तिञ्च अनुसृत्य 'गोपेषं पुष्णाति'' इत्यस्य गवा पुष्णातीत्यर्थः। द्विर्धात्वर्थमानस्य प्रसङ्ग एव नास्ति, यत्र क्रियाकर्मभावेनाऽन्वयः स्यात्। न वा सामान्यविशेषभावस्य प्रसङ्गः।

धात्वर्थ-कृदर्थभावयोः प्रकृतोपयोगिवैलक्षण्यप्रतिपादकं सार्वधातुके यक् इति सूत्रस्थं भाष्यमित्थम्—

"अस्ति खल्वपि विशेषः कृदभिहितस्य भावस्य तिङभिहितस्य च? कृदभिहितो भावोद्रव्यवद् भवति। किमिदं द्रव्यवदिति? द्रव्य क्रियया समवायं गच्छति। कं समवायं गच्छति? द्रव्यं क्रियाऽभिनिर्वृत्तौ साधनत्वमुपैति। तद्वच्चास्य भावस्य कृदभिहितस्य भवति। पाको वर्तते इति। क्रियावन्न भवति। किमिदं क्रियावदिति? क्रिया क्रियया समवायं न गच्छति, पचति पठतीति। तद्वच्चास्य कृदभिहितभावस्य न भवति पाको वर्तत इति।

अत्र च समवायो भेदसम्बन्धः प्रसिद्ध एव, 'साधनत्वमुपैती'त्यनेन स्फुटीक्रियतेऽपि। अतः कृदभिहितभावस्य धात्वर्थेऽभेदान्वयो भाष्यविरुद्धः। किन्तु साधनत्वेन कर्तृत्वेन कर्मत्वादिना च। तथा च 'पाकं पक्ष्यति, तापसेन तपस्तप्यते, पोषानपुषदि'त्यादौ धात्वर्थफले घञन्तार्थकर्मणोऽभेदेनान्वयो न युज्यते। किन्तु द्वितीयार्थ-तिङर्थाश्रय-कर्मण्येवेति भावः।

धात्वर्थाभेदविशेषणस्य भावार्थकृदन्तार्थस्य प्रथमाबहुवचनस्य भावाख्यातबहुवचनस्य चोदाहरणम्, भावकृदन्ते द्विवचन-बहुवचने भवतो न तु भावाख्याते। तत्र कारणम्—यत्र प्रकारान्तरेण धात्वर्थभावभेदावभासस्तत्र द्विवचन-बहुवचने, यत्र न धात्वर्थभावभेदावभासस्तत्र एकवचनमिति व्यवस्थापयन् भाष्यकारो ब्रूते—तिङभिहिते चापि तदा भावे बहुवचनं श्रूयते। तद्यथा उष्ट्रासिका आस्यन्ते, हतशायिका शय्यन्त इति।

उष्ट्रा यथा आसते तथा देवदत्तेन आस्यते। यथा हताः शेरते तथा देवदत्तेन शय्यते, देवदत्तकर्तृकाणि उष्ट्रकर्तृक-नानाविधासन-सदृशानि आस-

नानि, देवदत्तकर्तृकाणि हृतकर्तृक-नानाशयनसदृशानि शयनानि इति 'देवदत्तेन उष्ट्रासिका आस्यन्ते, देवदत्तेन हृतशायिकाः शय्यन्ते' इत्यादिभावाख्यात-वाक्यस्यार्थः। सादृश्यवाचकपदाभावेऽपि रूपकमिव वाचकलुप्तोपमेव वा सादृश्य-बोधः। उपमानानि आसनानि शयनानि च नानाविधानि अनेकानि, अत उपमेयान्यपि अनेकानीति धात्वर्थभेदावभासो बहुबचननिमित्तम्। व्यापारान्वयिनः क्रियाविशेषणस्य नागेशमतेनापि प्रथमान्तता।

अत्र प्रदीपः--'उष्ट्रासिका आस्यन्त' इति भाष्यप्रतीके, अत्राश्रयाणामुष्ट्राणां भेदादनेकप्रकारयुक्तानि आसनानि भिन्नानि, तत्सामानाधिकरण्याच्च आख्यातवाच्यभावभेदाद् आस्यन्त इति बहुवचनमित्यर्थः। इवशब्दप्रयोगमन्तरेणापि चेवार्थगतिर्भवति।

तदयमर्थः—यादृशानि उष्ट्राणामनेकप्रकाराणि आसनानि तादृशानि देवदत्तादिभिः क्रियन्ते इति। 'भवद्भिरास्यत' इत्यत्र तु आश्रयभेदादाश्रितभेदस्य अप्रपत्तिपन्नत्वात् प्रयोजनाभावाद् भावो भेदं नोपादत्त इत्येकवचनमेव भवति। यथा 'ताम्रः पलाशेषु बभूव राग' इति। न च सर्वत्र आश्रयभेदादाश्रितभेदस्य प्रतीतिः; 'घटान् पचती'त्यादौ पाकस्याभिन्नस्यैवावगमात्।

'केचितु उष्ट्रासिका आस्यन्त' इति कर्मणि लकारमिच्छन्ति, उष्ट्रासिकालक्षणस्य भावस्य कर्मत्वात् यथा 'गोदोहः सुप्यत' इति। एवं तु विवक्षान्तरे भवत्येवेति भाष्यकारेण भावेऽपि लविधाने बहुवचनमुपपादितमिति।

'गोदोहं स्वपिती'त्यत्र अकर्मकधातुभिर्योगे 'देशः कालो भावो गन्तव्योऽध्वा च कर्मसञ्ज्ञक इति वाच्यमि'त्यनेन कर्मतया कर्मलकारे 'गोदोहः सुप्यते इति भवति, तथैव उष्ट्रासिकालक्षणस्य भावस्य कर्मणि लकारे प्रयोग इति केचिन्मतमित्यर्थः। व्यापारान्वयिनः क्रियाविशेषणस्य कर्मसञ्ज्ञा चेदत्रापिद्वितीयाबहुवचनमेव युज्येतेति।

अत्र उद्योतः—'यत्र त्वस्ति तत्कृतभेदावगमस्तत्र भवत्येव बहुवचनमित्याह भाष्ये—तिङभिहिते चापि इति। ननु उष्ट्रासिकेत्यादौ आख्यातवाच्ये भावे कथं भेदावगमोऽस्त आह—अथाश्रयाणामिति प्रदीपः। तत्साम्याच्चेति प्रदीपः—न ह्येकासने तावत् साम्यसंभवः तत्प्रतिपादने फलञ्चेत्यर्थः। तत्सामानाधिकरण्याच्चेति पाठेऽप्ययमेवार्थः। उपमानोपमेययोः सामानाधिकरण्यादित्यर्थः। ननु साम्यवाचकेवाद्यभावात् कथं तत्प्रतीतिरत आह—इवेति प्रदीपः। परत्र परशब्दः प्रयुक्त इति न्यायादिति भावः। प्रयोजनाभावादिति

प्रदीपः—प्रकृते साम्यप्रतीत्युपपादनमेव प्रयोजनमिति भावः। यथेति प्रदीपः—पलाशरूपाश्रयानेकत्वेऽपि राग इत्येकवचनमेवेति भावः। वस्तुतस्तत्र एकजातीयरागप्रतिपादनाय एकवचनमिति बोध्यम्। किञ्च आश्रयभेदादाश्रितभेदप्रतीतेः असार्वत्रिकत्वादपि सा न भावाख्याते द्विवचनादिनियामिकेत्याह—न च सर्वत्रेति प्रदीपः। एवञ्च 'आसिका' इत्यादिक्रियाविशेषणं प्रथमान्तम्। किन्नधिकारस्थ-ण्वुलः स्त्रीत्वस्य सत्त्वेन सामान्ये नपुंसकम् इत्यस्याप्रवृत्त्या न क्लीबत्वम्।

उपमानोष्ट्रासनाभिन्नानि आसनानीति बोधः। बहुत्वावधारणाच्च नैकवचनमिति बोध्यम्। कर्मणीति प्रदीपः—अत्र पक्षे आख्यातावयव आसादेः परिच्छेदकत्वनिरूपके आसनादौ वृत्तिः, परिच्छेदकत्वरूपफलाश्रयत्वात् कर्मत्वम्। दृष्टान्ते व्याप्त्याश्रयादिव। परिच्छेदकञ्च साहश्येन। नायं भाष्यार्थं इत्याह—एवन्त्विति प्रदीपः। विवक्षान्तरे प्रदीपः—आसेः परिच्छेदकत्वरूपविवक्षाविशेषे। भावेऽपि लविधाने यदुपपादितं बहुवचनं भाष्यकारेण तन्नोपपादितं स्यादिति शेषः। एवञ्च यथा पाकप्रकारानभिसमीक्ष्य पाकावित्यादिद्विवचनादि एवम् आसनप्रकारानभिसमीक्ष्य 'आस्यन्ते' इत्यादिभावे बहुवचनमिति भाष्यार्थः। आख्यातवाच्येऽसत्त्वं लिङ्गकारकानन्वयित्वमेव बोध्यमिति।

एवञ्च एतादृशभाष्य-प्रदीपोद्योतसन्दर्भाः धात्वर्थक्रियायामभेदेन अन्वयिनो विशेषणस्य न कर्मसञ्ज्ञेति द्योतयन्ति। कर्तुरीप्सिततमं कर्म इत्यनेन कर्मसञ्ज्ञया 'अकर्मकधातुभिर्योगे' इत्यादिवार्तिकं गतार्थयितुं तदनुकूलं परिच्छेदकत्वगर्भमासधात्वर्थमवर्णयदुद्योतः इति।

## दिसम्बर १२ अङ्के

**२. द्वितीय-निष्कर्षः**

क्रियाविशेषणे कर्मतामङ्गीकुर्वाणा अपि व्याख्यातार आचार्याः कर्तुरीप्सिततमं कर्म इतिसूत्रस्य फलस्य फलाश्रयस्य च कर्मसञ्ज्ञेति अर्थभेदं न कुर्वन्ति, सूत्रस्यार्थवर्णने फलाश्रयस्यैव कर्मसञ्ज्ञां ब्रुवते। तथा च सन्देह एव प्राचां कर्मसञ्ज्ञाविधानप्रकारे। सप्तमनिष्कर्षरीत्या धात्वर्थभेदं फलभेदञ्च विधाय फलाश्रयकर्मतावर्णनं प्राचामाचार्याणां न संभवति। कल्पनास्वतन्त्राणां प्रयोगमात्रमनुसरतामर्थदृष्टिविहीनानामेव अर्वाचां वर्तते। एतद्विषये सप्तमनिष्कर्षे विवेचयिष्यामि। फलान्वयिनो विशेषणस्य कर्म-

सञ्ज्ञायै शब्दरत्न-शेखरयोर्या प्रक्रिया समाश्रिता, तस्यां किमपि भाष्य-स्वारस्यं नोपलभ्यते। तेनासौ प्रामाणिकतां नाश्रयते। सकर्मकस्थले फलान्वयिनो विशेषणस्य कर्मतया द्वितीयान्तता, तथा व्यापारान्वयिनो विशेषणस्य प्रथमान्ततेति नागोजीमते व्यवस्था फलति। अकर्मकस्थले च व्यवस्था संदिह्यते। वर्तति-शयत्योर्योगे प्रथमान्तम्, एधतेर्योगे च द्वितीयान्तं लिखति शेखरकारः। प्राय एक एवार्थोऽकर्मकधातूनां फलव्यापारस्थानीयस्तस्य मते सिद्ध्यति। यत्राप्यर्थद्वयं तत्रापि फलव्यापारयोरभेदं स मनुते। यथा लादेशार्थ-निरूपणप्रसङ्गे परमलघुमञ्जूषायां वृद्ध्यभिन्ना क्रियेति एधतेरर्थं इति वर्णितमस्ति। तत्रैव व्यापारत्वेनान्वये प्रथमा, फलत्वेनान्वये द्वितीयेयि कथमपि वक्तुं शक्यते। तथा च सर्वत्र क्रियाविशेषणकर्मत्वार्थं न पाणिनीय-शास्त्रानुशासनम्। किन्तु व्युत्पत्तिवादरीत्या व्याकरणान्तरम्।

ये तु वैयाकरणाः कर्मसञ्ज्ञां नोल्लिखन्ति, द्वितीयामेव व्यवहरन्ति, तेषां कृते अन्याऽपि गतिः। ततोऽन्यत्रापि दृश्यत इति वार्तिक-खण्डः, पूर्ववर्णितं भूषण-सारदर्पणोक्तं ज्ञापकम्, शेखरदीपकवर्णितं कर्मत्वाभावेऽपि कर्मसञ्ज्ञावद् द्वितीयाविधानमादि समूह्यम्। श्रीनागोजीभट्टं विहाय अन्ये द्वितीयावादिनोऽविशेषेण फलान्वये व्यापारान्वये च क्रियाविशेषणे द्वितीयामेवाङ्गीकुर्वन्ति इति दिक्।

३. तृतीयो-निष्कर्षः

द्वितीयाकारके कर्मसञ्ज्ञाप्रसङ्गे फलस्यैव व्यपदेशिवद्भावेन फलाश्रयत्वं मत्वा कर्मसञ्ज्ञां विधत्ते नागोजीभट्टमहोदयो न तु व्यापारस्य। तेन स्फुटमेव तन्मते परिशेषाद् व्यापारान्वयिक्रियाविशेषणे प्रथमान्तता। तत्प्रत्यनुपूर्वमीपलोमकूलम् इतिसूत्रशेखरे वर्तति-योगे प्रथमान्तं लिखति। सार्वधातुके यक् सूत्रस्य प्रदीपोद्योते 'उष्टासिका आस्यन्त' इत्यादौ क्रियाविशेषणं प्रथमान्तं ब्रूते। कर्मणा कर्मवत् तुल्यक्रिय इति सूत्रस्य प्रदीपोद्योते तत्र क्रियाविशेषणत्वात् स्तोकमेधत इत्यादाविव तपसः कर्मत्वमिति लिखति। तत्र फलान्वयो व्यापारान्वयो वा ?, प्रमादो वा ग्रन्थकृतोऽन्यस्य लेखकस्य वा ?, इत्यादिनिर्णयस्त्यज्यते। अन्यच्च प्रथमनिष्कर्षदिशाऽवसेयम्।

४. चतुर्थ-निष्कर्षः

अस्यापि विवेचनं प्रथमनिष्कर्षेण गतार्थम्। तत्प्रत्यनुपूर्वमीपलोमकूलम् इतिसूत्रे द्वितीयान्तस्य तत्पदस्य ग्रहणे मानाभावात् प्रथमान्तत्वेनोपपत्तेश्च क्रियाविशेषणस्य द्वितीयान्ततायां ज्ञापकं न संभवति।

